भिधाने स्वयं वा स्मर्यमाणे तात्पर्यग्रहादेवान्वयानवबोधात्, तद्ग्रहे च वधूप्रदर्शितकलापेनाप्यन्वयाव-बोधात् तद्ग्रहस्यैव नियामकत्वात्, अत एव तात्पर्यविषयान्वयप्रतियोगिवाचकपदाध्याहारपेक्षयाऽर्था-ध्याहार एव लाघवमामनन्ति, अत एव पदजन्यपदार्थोपस्थितेरेव शाब्दबोधहेतुत्वात् संस्कारोप-स्थितस्य न शाब्दबोध इति निरस्तम्, तात्पर्यस्यैव नियामकत्वे पदजन्यत्वप्रवेशे गौरवात्, न च शक्तिं विना पद्मत्वस्योपस्थित्यनियमेऽनुभवानियमप्रसङ्गः, शक्तिं विना शक्तेरिव तस्य नियतस्मृतिसम्भवे अनुभवनियमस्य युक्तत्वात्, लक्षादेरनुभवानियमस्योपस्थित्यनियमप्रयोज्यत्वात्, अन्यथा नानार्थेऽता-

-कलायादिकर्मविशेषबोधकपदोच्चारण एव, सोऽपि व्यापार इदानीं नापेक्षितः स्यात्, अनुषज्यमानपचतीत्येतावन्मात्रत एवोत्तर-वाक्यतः प्रत्यक्षोपस्थितं कलायमादाय कलायकर्मकपाकबोधः स्यादित्यर्थः। निषेधे हेतुमाह–अन्यान्वयतात्पर्यक इति– 'किं पचति' इति केनचित् पृष्टेन तदुत्तराभिसन्धानेन पुरुषान्तरेण कलायमिति पदमभिहितम्, किन्तु 'कलायं पश्यति, कलायं गृह्णाति' इत्यादिदर्शनाद्यन्वयतात्पर्येणैव, तत्रान्वयतात्पर्यककलायादिपदत उपस्थितस्य कलायस्य कर्मतया पाकेऽ-न्वयतात्पर्यग्रहाभावादेवान्वयावबोधाभावात्, एवं न केनापि तदानीं कलायमित्यभिहितं परं पूर्वसंस्कारमहिम्नैव कलाय-स्मरणं जातमेवमपि तात्पर्यग्रहाभावादेव कलायकर्मकपाकावबोधाभावादिदं वाक्यं कलायकर्मकपाकबोधेच्छयोच्चरितमित्या-कारकतात्पर्यग्रहस्यैव कलायकर्मकपाकान्वयबोधहेतुत्वमिति प्रत्यक्षोपस्थितेऽपि कलाये उक्ततात्पर्यग्रहाभावादेव कलायकर्मकपा-कान्वयबोधापत्त्यसम्भवात्, प्रमाणान्तरोपस्थितस्यापि च कलायस्योक्ततात्पर्यग्रहसत्त्वेऽन्वयबोधो भवत्येव, यथा श्वश्रूः पुत्रवधूं 'किं पचति भवति!' इत्येवं पृष्टा 'नान्यसन्निधाने स्वामिनां सह वक्तव्यम्, श्वशुरेण समं च न वक्तव्य-मेव' इति लोकमर्यादा परिपालयन्ती न किञ्चिद् वक्ति, किन्त्वङ्गुल्यादिनोपदर्शयति कलायम्, तत्र कलायकर्मकपाकबोध-स्तात्पर्यज्ञानाच्छब्देनानुपस्थितेऽपि कलाये भवतीति तात्पर्यग्रहस्यैवोक्तबोधनियामकत्वादित्यर्थः। तद्ग्रहे च तात्पर्यग्रहे च। तद्ग्रहस्यैव तात्पर्यग्रहस्यैव, एवकारेण पदमात्रजन्योपस्थितेरन्वयबोधनियामकत्वव्यवच्छेदः। अत एव तात्पर्यग्रहे सति पदादनुपस्थितस्यापि प्रमाणान्तरोपस्थितस्य शाब्दबोधविषयत्वाभ्युपगमादेव। तात्पर्येति– तात्पर्यस्य विषयो यः कलाय-कर्मकत्वस्य पाकेऽन्वयः, तत्प्रतियोगि– तन्निरूपकं यत् कलायकर्मत्वम्, तद्वाचकं– तदवबोधकं यत् पदं– द्वितीयाविभक्त्यन्तं कलायमिति पदम्, तदध्याहारापेक्षया– उक्तवाक्यघटकतया तत्स्मृतिकल्पनापेक्षया। अर्थाध्याहारे प्रमाणान्तरेण कलाय-रूपार्थोपस्थितौ। एवकारेण पदाध्याहारे लाघवस्य व्यवच्छेदः, पदाध्याहारपक्षे पूर्वं पदं कल्पनीयं ततोऽर्थोपस्थितिस्त-तोऽन्वयबोध इति गौरवम्, अर्थाध्याहारपक्षे प्रमाणान्तरादर्थोपस्थितावनन्तरमेवान्वयबोध इति लाघवमित्येवमर्थाध्याहार-वादिन आमनन्ति। 'द्वारम्' इत्युक्ते 'पिधेहि' इत्यादिक्रियाबोधकवाक्योपस्थितिकल्पनामन्तरेणैव पिधानादिक्रिया-लक्षणार्थोपस्थितित एव द्वारकर्मकपिधानबोध इति न पदार्थोपस्थितौ पदजन्यत्वप्रवेशस्यावश्यकता, पदमन्तरेण संस्कारोप-स्थितस्य शाब्दबोधाभावस्तु तात्पर्यग्रहाभावादेवेत्याशयेनाह–अत एवेति– अस्य 'निरस्तम्' इत्यनेनान्वयः, अत एव– तात्पर्यग्रहस्य शाब्दबोधनियामकत्वादेव, संस्कारोपस्थितस्य पदग्रहमन्तरेणैवान्यत उद्बुद्धसंस्कारादुपस्थितस्य, तेन पदोपस्थितस्यापि संस्कारोपस्थितत्वस्यावश्यभावेन तथाभूतस्य शाब्दबोधसम्भवेऽपि न क्षतिः। तात्पर्यस्यैव तात्पर्य-ग्रहस्यैव। ननु समभिरूढनये पङ्कजशब्दस्य पद्मत्वे समुदायशक्त्यनभ्युपगमेऽवयवशक्त्या पङ्कजनिकर्तृत्वस्यैवोपस्थितिरिति 'पङ्कजमस्ति' इत्यत्र पद्मत्वस्योपस्थापकस्य नियतस्याभावान्न भवेदपि पद्मत्वस्योपस्थितिरिति तदुपस्थित्यनियमे तदनुभव-नियमोऽपि ततो न भवेदित्याशङ्क्य प्रतिक्षिपति– न चेति। यथा जातिशक्तिवादिमते आनन्त्याद् व्यक्तौ शक्त्यभावेऽपि जातिर्व्यक्तिमन्तरेण न भासत इत्यतो नियतव्यक्तिस्मृतितो नियतव्यक्त्यनुभवो भवति तथा तात्पर्यग्रहबलादेवाशक्य-स्यापि पद्मत्वस्य स्मृतितोऽनुभवनियमः स्यादेवेति निषेधहेतुमुपदर्शयति– शक्तिं विनेति, 'शक्तेरिव' इति स्थाने 'व्यक्तेरिव' इति पाठो युक्तः। तस्य पद्मत्वस्य। लक्ष्यार्थे शक्त्यभावे क्वचित् कस्यचित् कदाचिदनुभव इत्येवं योऽनुभवानियमस्तस्योपस्थित्यनियमप्रयोज्यत्वमेव, नहि लक्ष्यार्थस्योपस्थितिनियमोऽस्ति, पद्मत्वस्य तु शक्त्यभावेऽप्युपस्थितिनियमस्तात्पर्यबलात् समस्त्येवातोऽनुभवनियमोऽपि युज्यत इत्याह– लक्षादेरिति– अत्र 'लक्ष्यादे' इति पाठो युक्तः, अत्रादिपदाद्व्यञ्जनावृत्तिपक्षे व्यङ्ग्यार्थोपग्रहोऽपि ततो बोध्यः।

त्पर्यविषयस्यापि शक्यतयाऽनियतानुभवविषयताप्रसङ्गात्, शक्यानेकोपस्थितौ तात्पर्यं नियामकमिति चेत्? न- अशक्योपस्थितावपि तस्यैव तथात्वात्, न च कुमुदाद्यप्रतीत्यर्थं समुदायशक्तिकल्पनमित्यपि युक्तम्, तत्राशक्तेरेव तदप्रतिपत्तेः, नहि घट-पटादावपि पटाद्यप्रतिपत्त्यर्थं शक्तिकल्पनम्, न च योगस्य कुमुदादिसाधारणत्वात् तत्रापि प्रयोगप्रसङ्गः, योगपुरस्कारेणेष्टत्वात्, नहि 'पङ्कजशैवालमानय' 'पङ्कजकुमुदमानय' इति प्रयोगं कश्चिद् बाध्यतया व्यवहरति, अस्तु वा परस्य समुदायशक्तिरिव मम पद्मत्वस्मरणस्य कुमुदादौ प्रयोगप्रतिबन्धकत्वम्, यद्वा पङ्कज(पङ्क)पदोत्तर'ज'पदस्यैव कुमुदादिस्मरण-

---

**अन्यथा** तात्पर्यविषयत्वस्यानुभवविषयत्वनियामकत्वमनभ्युपगम्य शक्यत्वस्यैवानुभवविषयत्वनियामकत्वाभ्युपगमे। '**शक्यतयाऽनियत**' इति स्थाने 'शक्यतया नियत' इति पाठो युक्तः, यदि शक्यत्वमेव शाब्दबोधात्मकानुभवविषयत्वनियामकं तर्हि अश्वानयनबोधेच्छयोच्चरिते 'सैन्धवमानय' इति वाक्येऽपि सैन्धवपदस्याश्व इव लवणेऽपि शक्यत्वस्य भावेनाश्वानयनबोधवल्लवणानयनबोधोऽपि प्रसज्येतेत्यर्थः। ननु नानार्थस्थले शक्यत्वाविशेषात् सर्वेषां शक्यार्थानामुपस्थितावपि यस्य शक्यार्थस्यान्वयबोधे तात्पर्यस्य ग्रहस्तस्यैव शक्यार्थस्यान्वयबोधो नान्यस्य शक्यार्थस्योपस्थितस्यापीत्याशङ्कते- **शक्यानेकोपस्थिताविति**। **तात्पर्यं** तात्पर्यग्रहः। **नियामकं** शाब्दबोधविषयत्वनियामकम्। नानार्थस्थले तात्पर्यग्रहविषयत्वस्य शाब्दबोधविषयत्वनियामकत्वव्यवस्थितौ लाघवात् सर्वत्रैव तस्य तन्नियामकत्वमित्यशक्यानेकोपस्थितावपि यस्यैवाशक्यस्यान्वयबोधेच्छयोच्चरितत्वग्रहस्तस्यैवान्वयबोधो नान्यस्येति नियमोपपत्तेरिति समाधत्ते- **नेति**। **तस्यैव** तात्पर्यग्रहस्यैव। **तथात्वात्** शाब्दबोधविषयत्वनियामकत्वात्। ननु पङ्कजपदस्य यथा न पद्मत्वे शक्तिस्तथा कुमुदत्वेऽपि एवं सत्यपि यथाऽशक्यस्यापि पद्मत्वस्यान्वयबोधस्तथा कुमुदत्वस्यापि स्यात्, तदापत्तिपरिहारार्थं पङ्कजपदस्य पद्मत्वे समुदायशक्तिकल्पनमावश्यकम्, एवं सति समुदायशक्त्योपस्थितस्य पद्मत्वस्यान्वयबोधो न तु कुमुदत्वस्य, तत्र समुदायशक्त्यभावादित्याशङ्क्य प्रतिक्षिपति- **न चेति**- अस्य 'युक्तम्' इत्यनेनान्वयः। शक्तौ सत्यामपि कस्यचिदेव शक्यस्य भानमित्यत्र तात्पर्यं नियामकम्, शक्यभिन्नस्यापि कस्यचिदर्थस्य भाने तात्पर्यमेव नियामकम्, कुमुदत्वे तु न शक्तिर्नवा तात्पर्यम्, पद्मत्वे तु शक्त्यभावेऽपि तात्पर्यं समस्तीति पद्मत्वप्रतीतिः सम्भवति, न तु कुमुदत्वप्रतीतिरिति निषेधहेतुमुपदर्शयति- **तत्रेति**- कुमुदत्वे इत्यर्थः। **तदप्रतीतेः** कुमुदत्वेन पङ्कजनिकर्तुरप्रतीतेः। समभिरूढनये घटादिपदेनापि जलाहरणादिलक्षणक्रियात्मकचेष्टावत्त्वरूपयोगार्थमुपादायैव घटाद्यर्थप्रतीतिः, तत्र घटत्वस्याशक्यस्य भानं तात्पर्यबलादेव, तात्पर्याभावादेव न घटादिपदतः पटाद्यर्थप्रतीतिरित्येतावतैवोपपत्तौ न घटादिपदस्य घटत्वादौ शक्तिकल्पनमित्याह- **नहीति**- अस्य 'शक्तिकल्पनम्' इत्यनेनान्वयः। '**घट-पटादावपि**' इति स्थाने 'घटपदादावपि' इति पाठो युक्तः। ननु पङ्कजपदस्यावयवशक्तिलक्षणयोगतो लभ्यस्य पङ्कजनिकर्तृत्वरूपार्थस्य कुमुदादावपि पङ्कजाते सत्त्वात् कुमुदादिकमुपादायापि पङ्कजमस्तीति प्रयोगः स्यादित्याशङ्कामिष्टापत्त्या परिहरति- **न चेति**। **तत्रापि** कुमुदादावपि। **प्रयोगप्रसङ्गः** पङ्कजपदप्रयोगप्रसङ्गः। निषेधे हेतुमाह- **योगपुरस्कारेणेति**- पङ्कजनिकर्तृरूपार्थे या पङ्कजपदस्यावयवशक्तिस्तदालम्बनेनेत्यर्थः। **इष्टत्वात्** कुमुदादौ पङ्कजपदप्रयोगस्येष्टत्वात्। इष्टापत्तिमेव द्रढयति- **नहीति**- अस्य 'व्यवहरति' इत्यनेनान्वयः, 'पङ्कजशैवालमानय' इत्यत्र पङ्कजपदस्य पङ्कजनिकर्तृरूपार्थादरणे सत्येव तस्याभेदेन शैवालपदार्थेऽन्वयो घटते, एवं 'पङ्कजकुमुदमानय' इत्यत्रापि, पद्मरूपसमुदायशक्त्यार्थाश्रयणे तु तदभेदस्य शैवालादौ बाधात् 'पङ्कजशैवालमानय' इत्यादिप्रयोगस्य बाधितार्थकत्वेन बाध्योऽयं प्रयोग इत्येवं व्यवहारः स्यात्, न च कश्चिदेवं व्यवहरतीत्यतो ज्ञायते योगपुरस्कारेणायं प्रयोग इष्ट एवेत्ययमित्यर्थः। पङ्कजपदस्य पद्मे शक्तिरित्यभ्युपगन्तृमते यथा समुदायशक्तिग्रहस्य कुमुदादौ पङ्कजपदप्रयोगप्रतिबन्धकत्वं तथा समभिरूढमते पद्मत्वस्मरणस्य तथात्वमित्याह- **अस्तु वेति**। **परस्य** समुदायशक्त्यभ्युपगन्तुः, 'मते' इति शेषः। '**समुदायशक्तिरिव**' इति स्थाने 'समुदायशक्तेरिव' इति पाठो युक्तः, पङ्कजपदस्य पद्मे शक्तिमजानानः कुमुदादौ पङ्कजपदं प्रयुङ्क्त एवेति समुदायशक्तेरित्यस्य समुदायशक्तिग्रहस्येत्यर्थः। लाघवादाह- **यद्वेति**- यद्यपि पङ्कपदोत्तरजपदस्य यथा कमलशक्तत्वेन कमलस्यैव स्मारकत्वेन कुमुदादिस्मरणप्रतिबन्धकत्वं तथा नीरपदोत्तरजपदस्य, एवं जलादिपदोत्तरजपदस्यापि, तथापि कर्दमपदा-

प्रतिबन्धकत्वं कल्पनीयं 'गो-बलीवर्दौ' इत्यत्र बलीवर्दसमभिव्याहृतगोपदस्य बलीवर्दस्मरण इव, तेन न कुमुदप्रियस्य कुमुदस्मरणेन पद्म एव प्रयोगप्रतिबन्धः। न चैवं लक्षणयापि पङ्कजपदात् कुमुदानुपस्थिति-प्रसङ्गः, शक्त्या तदुपस्थितावेव तत्प्रतिबन्धकत्वात्, अत एवावयवशक्तावेव केचित् कौब्ज्यं कल्पयन्ति; न च, पद्मत्वप्रकारकपद्मविषयानुभवजनकत्वात् तादृशस्मरणजनकत्वाद् वान्यत् पदस्य शक्तत्वम्, तदज्ञा-(तज्ज्ञा)नस्य नैयायिक-मीमांसकयोः पदार्थप्रत्यये व्यभिचारेणाकारणत्वात्, तदनुपयुक्तायाश्च शक्तित्वस्य परिभाषामात्रत्वादिति समुदायशक्तेरावश्यकत्वम्, न च तदभावेऽनुभावकत्वस्यैवानुपपत्तिः, असम्बद्धानु-

---

द्युत्तरजपदस्य कुमुदादिस्मारकत्वमपि संभवति, ततो न तस्य कुमुदादिस्मरणप्रतिबन्धकत्वमित्येवकारेण तस्यापि व्यवच्छेदः, एव पद्मत्वस्मरणस्य कुमुदादौ पङ्कजपदप्रयोगप्रतिबन्धकत्वस्य व्यवच्छेद इति लाघवम् । उक्तप्रतिबन्धकत्वकल्पनस्य सम्यक्त्वावगतये दृष्टान्तमाह– गो-बलीवर्दावित्यत्रेति– यत्र 'गौरस्ति' इति वाक्ये केवल गोपदमस्ति तत्र गोपदाद् गोत्वेन रूपेण बलीवर्दस्यापि स्मरणं भवत्येवेति बलीवर्दपदासमभिव्याहृतस्य गोपदस्य न बलीवर्दस्मरणप्रतिबन्धकत्वं किन्तु बलीवर्दसमभिव्याहृतगोपदस्यैवेति बोध्यम् । पद्मत्वस्मरणस्य कुमुदे पङ्कजपदप्रयोगप्रतिबन्धकत्वे यस्य प्रमातुः कुमुदमेव कमलापेक्षयाऽतिप्रियं तस्य पङ्कजपदात् कुमुदस्मरणमपि पद्मे पङ्कजपदप्रयोगप्रतिबन्धकं किमिति न भवेदिति दोषोऽपि पङ्कपदोत्तरजपदस्य कुमुदस्मरणप्रतिबन्धकत्वपक्षे न सम्भवति, ज्ञाते पङ्कपदोत्तरजपदे कुमुदस्मरणस्यैवाभावादित्याह– तेनेति– पङ्कपदोत्तरजपदस्य कुमुदस्मरणप्रतिबन्धकत्वेनेत्यर्थः । नञः 'प्रयोगप्रतिबन्धः' इत्यनेनान्वयः । प्रयोगप्रतिबन्धः पङ्कजपदप्रयोगप्रतिबन्धः । ननु यदि पङ्कपदोत्तरजपदस्य कुमुदस्मरणप्रतिबन्धकत्वं तदा यत्र लक्षणया पङ्कजपदं कुमुदे प्रयुज्यते तत्र लक्षणारूपवृत्तिग्रहसहकारेण पङ्कजपदाद् यत् कुमुदस्मरणं भवति तदपि न स्यात् तत्रापि पङ्कपदोत्तरजपदस्य कुमुदस्मरणप्रतिबन्धकस्य सद्भावादित्याशङ्का प्रतिक्षिपति– न चैवमिति । एवं पङ्कपदोत्तरजपदस्य कुमुदस्मरणप्रतिबन्धकत्वकल्पने । शक्त्यात्मकवृत्तिग्रहजन्यकुमुदस्मरणं प्रत्येव पङ्कपदोत्तरजपदस्य प्रतिबन्धकत्वं कल्प्यते, एवं च लक्षणात्मकवृत्तिग्रहजन्यकुमुदस्मरणस्य निरुक्तप्रतिबध्यतावच्छेदकधर्मानाक्रान्तत्वादेव पङ्कजपदादुत्पत्तावपि न क्षतिरिति निषेधहेतुमुपदर्शयति– शक्त्येति । तदुपस्थितावेव स्मरणात्मककुमुदोपस्थितावेव, एवकारेण लक्षणया कुमुदोपस्थितेर्व्यवच्छेदः । तत्प्रतिबन्धकत्वात् पङ्कपदोत्तरजपदस्य प्रतिबन्धकत्वात् । अत एव शक्तिग्रहजन्यकुमुदस्मरणे पङ्कपदोत्तरजपदस्य प्रतिबन्धकत्वकल्पनादेव । यदि पङ्कजपदस्य पद्मे समुदायशक्तिर्नाभ्युपेयते तदाऽवयवशक्तेः कुमुदे सत्त्वात् किमिति न कुमुदप्रतीतिरिति न वाच्यम्, शक्तिग्रहजन्यकुमुदस्मरणे पङ्कपदोत्तरजपदस्य प्रतिबन्धकत्वेन तत्र सत्या अप्यवयवशक्तेः कुण्ठितत्वादित्येवं केचित् कल्पयन्तीत्यर्थः । ननु पङ्कजपदस्य पद्मे समुदायशक्तिर्नास्तीत्येवमुक्तदिशा व्यवस्थापनमयुक्तम्, यतः पङ्कजपदस्य पद्मत्वप्रकारकपद्मविशेष्यकानुभवं प्रति यत् कारणत्वम्, यद्वा पद्मत्वप्रकारकपद्मविशेष्यकस्मरण प्रति यत् कारणत्वम्, तस्यैव शक्तित्वं न तूक्तकारणत्वादतिरिक्ता शक्तिः समस्ति, तज्ज्ञानाभावेऽपि पदार्थानुभवस्य पदार्थस्मरणस्य वा भावेन व्यभिचारेण तज्ज्ञानस्य कारणत्वासम्भवात्, तथा च निरुक्तानुभवजनकत्वरूपाया निरुक्तस्मरणजनकत्वरूपाया वा समुदायशक्तेः पङ्कजपदे सद्भावात् समुदायशक्तिर्नास्तीति कथनमयुक्तमित्याशङ्क्य प्रतिक्षिपति– न चेति– अस्य 'वाच्यम्' इति व्यवहितेन सम्बन्ध. । 'तादृशस्मरणजनकत्वाद् वाऽन्यत् पदस्य शक्तत्वम्' इत्यस्य स्थाने "तादृशस्मरण जनकत्वाद् वा नान्यत् पदस्य शक्तत्वम्" इति पाठो युक्तः । निरुक्तजनकत्वलक्षणशक्तिश्च स्वरूपसत्येवोपयुक्ता न तु ज्ञाता, तज्ज्ञानाभावेऽपि पदार्थप्रत्ययोदयेन व्यभिचारादित्याह– तज्ज्ञानस्येति– निरुक्तशक्तिज्ञानस्येत्यर्थः । निरुक्तानुभवजनकत्व-निरुक्तस्मरणजनकत्वव्यतिरिक्ता च शक्तिर्न पदार्थप्रत्यये उपयुज्यते इति तां परिकल्प्य तस्याः शक्तित्वस्य परिभाषामात्रत्वेन न परीक्षकैरुपादेयत्वमित्याह– तदनुपयुक्तायाश्चेति– पदार्थप्रत्ययानुपयुक्तायाश्चेत्यर्थः । ननु पद्मत्वप्रकारकपद्मविशेष्यकानुभवजनकत्व पद्मत्वप्रकारकपद्मविशेष्यकस्मरणजनकत्वाभ्यां व्यतिरिक्ता या समुदायशक्तिस्तस्या एवानावश्यकत्वं समभिरूढनयवादिनोऽभिमतम्, यत्तु भवद्भिर्निरुक्तानुभवजनकत्व-निरुक्तस्मरणजनकत्वस्यैव समुदायशक्तित्वमभिप्रेत्य समुदायशक्तेरावश्यकत्वं प्रतिपाद्यते तन्न युक्तं समुदायशक्तेरभावे निरुक्तानुभवजनकत्व-निरुक्तस्मरणजनकत्वयोरेवानुपपत्तेः, नहि यच्छब्दो येनार्थेनासम्बद्धः स शब्दस्तमर्थमनुभावयितुं स्मारयितुं वा समर्थोऽतिप्रसङ्गादिति तटस्थाशङ्कां प्रतिक्षिपति– न

भवेऽतिप्रसङ्गादिति वाच्यम्, पूर्वपूर्वतरज्ञानविषयत्वस्यैव सम्बन्धत्वात्, तस्य चानादित्वादिति वाच्यम्; उक्तानुभव-स्मरणजनकत्वमेव शक्तत्वमित्यभ्युपगमे गङ्गापदादेस्तीरत्वप्रकारकतीराद्यनुभवजनकत्वेन तत्र शक्तिप्रसक्तौ लक्षणामात्रोच्छेदप्रसङ्गात्; अथ लाक्षणिकमननुभावकमेव 'गङ्गायां घोषः' इत्यत्र घोषादिपदस्यैव लक्षणास्मारिततीरान्वयानुभवजनकत्वात्, तस्य च शक्तत्वादेव नोक्तदोष इति चेत्? न– तथापि तत्प्रकारकतद्विषयकज्ञानजनकत्वाप्रतिसन्धानेऽपि 'देवदत्तादिपदादसौ बोद्धव्यः' इत्यभिप्रायप्रतिसन्धानादर्थोपस्थितेर्दर्शनात् सर्वत्र तत्तदर्थविशेषेऽभिप्रायविशेषविषयत्वस्यैव पदानां वाचकत्वस्य व्यवस्थितेः, न च देवदत्तादिपदे सङ्केतज्ञानस्य कारणतावधारणात् पूर्वं गवादिपदेषु सङ्केतकल्पकप्रमाणा-

---

चेति– अस्य 'वाच्यम्' इत्यनेनान्वय.। **तदभावे** अतिरिक्तशक्त्यभावे। असम्बद्धस्यानुभावकत्वं स्मारकत्वं वा नाङ्गीक्रियते येनातिप्रसङ्गः स्यात्, किन्तु पूर्वपूर्वतरज्ञानविषयत्वमेवार्थेन सह पदस्य सम्बन्धः, ज्ञानं च समूहालम्बनं पदार्थयोर्ग्राह्यमिति नातिप्रसङ्ग इति निषेधहेतुमुपदर्शयति– **पूर्वेति**। **तस्य च** पूर्वपूर्वतरज्ञानविषयत्वलक्षणसम्बन्धस्य पुनः। **अनादित्वात्** ज्ञानस्य सादित्वे तत्समानकालीनस्य तद्विषयत्वस्यापि यद्यपि सादित्वमेव तथापि पूर्वपूर्वतरज्ञानपरम्पराया अनादित्वेन तदाश्रयणेन तद्विषयत्वस्य प्रवाहतोऽनादित्वमिति बोध्यम्। पद्मत्वप्रकाररूपद्मविशेष्यकानुभवजनकत्व-तथाविधस्मरणजनकत्वयोः शक्तित्वप्रतिषेधे हेतुमुपदर्शयति– **उक्तानुभवेति**– पद्मत्वप्रकारकपद्मविशेष्यकानुभवेत्यर्थः। **गङ्गापदादेरिति**– 'गङ्गायां घोष.' इत्यत्र 'गङ्गातीरे घोष' इति शाब्दबोधानुरोधेन गङ्गापदस्य गङ्गातीरत्वप्रकारकतीरविशेष्यकानुभवजनकत्वमवश्यमेषितव्यमिति गङ्गापदस्योक्तानुभवजनकत्वलक्षणं गङ्गातीरशक्तत्वमेव भवेत्, एवं यस्य पदस्य यस्मिन्नर्थे लक्षणा शाब्दानुभवानुरोधेनोपेयते तस्य पदस्य तदर्थविषयकानुभवजनकत्वलक्षणतच्छक्तत्वमेव स्यादिति लक्षणात्मकशब्दवृत्तेरुच्छेदप्रसङ्गादित्यर्थः। ननु पदाना शक्ति लक्षणान्यतरसम्बन्धेनेतरपदार्थान्वितस्वशक्यार्थबोधं प्रति जनकत्वमेवानुभावकत्वम् 'गङ्गाया घोषः' इत्यत्र गङ्गापदस्य घोषपदार्थान्वितस्वशक्यार्थशाब्दबोधजनकत्वाभावेन नानुभावकत्वं किन्तु घोषपदस्यैव गङ्गापदार्थगङ्गातीरान्वितस्वशक्यार्थघोषविषयकशाब्दबोधजनकत्वेनानुभावकत्वमिति तत्र घोषपदस्यैव शक्तत्वं न तु गङ्गापदस्य, किन्तु तस्य गङ्गातीररूपार्थे लाक्षणिकत्वमेवेति न लक्षणोच्छेद इति शङ्कते– **अथेति**। लाक्षणिकस्याननुभावकत्वे कथं लाक्षणिकार्थस्य शाब्दबोधे भानमित्यपेक्षायामाह– **गङ्गायां घोष इत्यत्रेति**– तथा च यस्मिन् वाक्ये सर्वाण्येव पदानि शक्तानि तत्र सर्वेषामेव पदाना तद्घटकानामनुभावकत्वम्, यत्र तु किञ्चिदेव पद शक्त तत्र तस्यैव शक्तस्य पदस्यानुभावकत्वम्, तथा च गङ्गायां घोष.' इत्यत्र घोषपदस्य लक्षणया गङ्गापदस्मारितगङ्गातीररूपार्थान्वयानुभवजनकत्वाल्लाक्षणिकार्थस्य शाब्दबोधे भान सभवतीत्यर्थ.। **तस्य च** घोषपदस्य च। **नोक्तदोषः** न लक्षणामात्रोच्छेदप्रसङ्गः। समाधत्ते– **नेति**। **तथापि** उक्तदिशा लक्षणोच्छेदप्रसङ्गपरिहारेऽपि, पदस्य शक्तिलक्षणवृत्तिज्ञानसहकारेणार्थोपस्थितिद्वारा शाब्दबोधजनकत्व भवति, तथा च यज्ज्ञानमर्थोपस्थितौ पदस्य सहकारि भवति तस्यैव शक्तित्वं कल्पयितुमुचितम्, तथा च देवदत्तपदादसौ बोद्धव्य इत्याकारकस्याभिप्रायस्य ज्ञानाद् देवदत्तपदाद् देवदत्तरूपार्थोपस्थित्या देवदत्तरूपार्थान्वयबोधो भवतीति तादृशाभिप्रायस्य शक्तित्वम्, एवमन्यत्रापीति सङ्केत एव शक्ति., देवदत्तत्वप्रकारक-देवदत्तविषयकानुभवजनकत्वस्य ज्ञानाभावेऽपि निरुक्ताभिप्रायज्ञानाद् देवदत्तान्वयानुभवोत्पादेन व्यभिचारेण नोक्तानुभवजनकत्वज्ञानस्यार्थोपस्थितौ पदस्य सहकारित्वमिति नोक्तानुभवजनकत्वं निरुक्तस्मृतिजनकत्वं वा शक्तिरिति पङ्कजपदस्य पद्मत्वप्रकारकपद्मविषयकानुभवजनकत्वेऽपि तथाविधस्मृतिजनकत्वेऽपि वा न समुदायशक्तेरावश्यकत्वं शक्तेर्निरुक्तानुभवजनकत्वादितो भिन्नत्वादित्याशयेनाह– **तत्प्रकारकेति**– देवदत्तत्वप्रकारकेत्यर्थः। **तद्विषयकेति**– देवदत्तविषयकेत्यर्थः। **सर्वत्र** घट-पटादिपदेऽपि। ननु देवदत्तादिपदे उक्ताभिप्रायविशेषलक्षणसङ्केतज्ञानस्य देवदत्तपदाद् देवदत्तोपस्थितौ कारणत्वेऽवधृते एव तद्दृष्टान्ताद् गवादिपदाद् गवाद्यर्थोपस्थितावपि निरुक्तसङ्केतज्ञानस्य कारणत्वावधारणतो गवादिपदस्य गवाद्यर्थे सङ्केतलक्षणा शक्तिः सिद्ध्येत्, यदा तु देवदत्तादिपदस्यानुपस्थितया न ततोऽर्थोपस्थितौ निरुक्तशक्तिज्ञानस्य कारणत्वमवधृत तदानीं प्रमाणाभावान्न निरुक्ताभिप्रायविशेषलक्षणसङ्केतस्य गवादिपदेषु सिद्धिः, अथापि गवादिपदादर्थविशेषप्रतिपत्तिरनुभूयत इति व्यभिचारेण नोक्ताभिप्रायविशेषज्ञानस्यार्थोपस्थितौ हेतुत्वमिति नोक्ताभिप्रायस्य शक्तित्वमित्याशङ्कां प्रतिक्षि-

भावादर्थप्रतीतेश्चानुभवसिद्धत्वाद् व्यभिचारेण नेदं हेतुः, किन्तु तद्विषयानुभवजनकत्वज्ञानमेव, न च देवदत्तादिपदे व्यभिचारान्न तस्यापि हेतुत्वम् 'एतदर्थज्ञानमेतत्पदजन्यत्वेनेच्छाविषयः' इति ज्ञानेऽर्थज्ञाने पदजन्यत्ववैशिष्ट्यभाने ध्रुवे पदेऽपि तज्जनकत्वज्ञानसम्भवादिति वाच्यम्, सङ्केतत्वेन रूपेण तद्ज्ञा- (तज्ज्ञा) नस्य हेतुत्वानभ्युपगमेन तेन रूपेण व्यभिचारज्ञानेऽप्यदोषात्, तद्धीजनकतावच्छेदकतावच्छेद-

पति–न चेति–अस्य 'वाच्यम्' इत्युत्तरेण योगः । अर्थप्रतीतेश्च गवादिपदाद् गवादिरूपार्थप्रतीतेश्च । व्यभिचारेणेति– 'गोपदाद् गोरूपार्थो बोद्धव्यः' इत्याकारकाभिप्रायरूपस्य सङ्केतस्य ज्ञानाभावेऽपि गोरूपार्थप्रतीतेर्भावे इत्येवं व्यतिरेक-व्यभिचारेणेत्यर्थः । नेदं हेतुः निरुक्ताभिप्रायरूपसङ्केतज्ञानं नार्थप्रतीतिनिबन्धनम्, तथा च नाभिप्रायविशेषलक्षणसङ्केतः शक्तिरित्याशयः । यदि नोक्तसङ्केतज्ञानमर्थप्रतीतिनिबन्धनं तर्हि किमर्थप्रतीतिनिबन्धनमिति पृच्छति– किन्त्विति । उत्तरयति– तद्विषयेति– गोत्वप्रकारकगोविषयकानुभवजनकत्वज्ञानमेव गोरूपार्थप्रतीतिजनकमिति तद्विषयकानुभवजनकत्वमेव तत्र शक्तत्वमित्याशयः । ननु देवदत्तोऽस्तीत्यादिवाक्यस्थले 'देवदत्तपदादसौ बोद्धव्यः' इत्यभिप्रायविशेषस्य ज्ञानादेव देवदत्तरूपार्थप्रतीतिर्न तु 'देवदत्तत्वप्रकारक-देवदत्तविषयकानुभवजनकं देवदत्तपदम्' इत्याकारकाद् देवदत्तविषयकानुभवजनकत्व-ज्ञानादिति व्यभिचारेण तद्विषयकानुभवजनकत्वज्ञानमपि नार्थप्रतीतिनिबन्धनमिति तद्विषयकानुभवजनकत्वमपि न पदस्य तत्र शक्तत्वमित्याशङ्क्य प्रतिक्षिपति–न चेति । न तस्यापि हेतुत्वं तद्विषयकानुभवजनकत्वज्ञानस्यापि न तदर्थ-प्रतीतिजनकत्वम्, एवं च न तद्विषयकानुभवजनकत्वस्य शक्तिरूपत्वमित्याशयः । निषेधे हेतुमाह– एतदर्थेति– 'देवदत्त-पदादसौ बोद्धव्यः' इत्यभिप्रायविशेषज्ञानस्य तत्रार्थप्रतीतिनिबन्धनत्वं यदुपेयते ततोऽपि 'तद्विषयकानुभवजनकमेतत् पदम्' इति ज्ञानस्यार्थप्रतीतिनिबन्धत्वमायात्येव, यतो 'देवदत्तरूपार्थज्ञानं देवदत्तपदजन्यत्वेनेच्छाविषयः' इत्येवं खल्व-पर्यवसिते 'देवदत्तपदादसौ बोद्धव्यः' इत्यभिप्रायस्य ज्ञाने देवदत्तरूपार्थविषयकज्ञाने देवदत्तपदजन्यत्ववैशिष्ट्यस्य भाने सति देवदत्तपदेऽपि देवदत्तरूपार्थविषयकज्ञानजनकत्वस्य ज्ञानसम्भवादित्यर्थः । निरुक्ताशङ्काप्रतिक्षेपहेतुमुपदर्शयति– सङ्केतत्वेन रूपेणेति । तज्ज्ञानस्य सङ्केतज्ञानस्य । हेतुत्वानभ्युपगमेन अर्थप्रतीतौ कारणत्वानभ्युपगमेन । तेन रूपेण सङ्केतत्वेन रूपेण । व्यभिचारज्ञानेऽपि सङ्केतत्वेन रूपेण सङ्केतज्ञानाभावेऽपि गवादिपदाद् गवाद्यर्थप्रतीतिभावेन व्यतिरेकव्यभिचारज्ञानेऽपि । अदोषात् देवदत्तादिपदे सङ्केतज्ञानस्येत्यादिनोपदर्शितस्य दोषस्याभावात् । तदर्थसङ्केतितपद-ज्ञानतोऽतिप्रसङ्गभयतस्तदर्थविषयकानुभवस्यानभ्युपगन्तव्यत्वेन तदर्थसङ्केतितपदज्ञानमेव तदर्थप्रतीतिकारणमिति तदर्थप्रतीति-जनकता तदर्थसङ्केतितपदज्ञाननिष्ठा, विषयतासम्बन्धेन तन्निरूपिताऽवच्छेदकता पदनिष्ठा, तन्निरूपितावच्छेदकता सङ्केत-निष्ठेति तद्रूपेण सङ्केतज्ञानस्यार्थोपस्थितितः प्राग् गवादिपदतो गवाद्यर्थानुभवस्थले सम्भवेन तद्रूपेण सङ्केतज्ञानस्यार्थप्रतीतौ कारणत्वे व्यभिचाराभावादित्याह– तद्धीजनकतेति– अर्थप्रतीतिजनकतेत्यर्थः । तज्ज्ञानस्य सङ्केतज्ञानस्य । पूर्वमपि देवदत्तादिपदे सङ्केतज्ञानस्य कारणत्वावधारणात् पूर्वमपि, यद्यपि सङ्केतितपदज्ञानत्वेनार्थोपस्थितौ पदज्ञानस्य कारणत्वे सङ्केतत्वेन सङ्केतज्ञानस्य पूर्वं सत्त्वमावश्यकमेवेति तेन रूपेण व्यभिचारज्ञानात् तद्रूपेण तज्ज्ञानस्य न कारणत्वमिति दोषः स्यादेव, तथापि शक्तिपदज्ञानत्वेनैव कारणत्वम्, शक्तिश्च तदर्थविषयकानुभवजनकत्वरूपा परेण स्वीक्रियते, तदति-रिक्तशक्तिरादिना च निरुक्ताभिप्रायविशेषलक्षणसङ्केतरूपा सा स्वीक्रियते, तज्ज्ञानं च सङ्केतत्वज्ञानं विनापि शक्तित्वेन रूपेण सम्भवतीति बोध्यम् । ननु यथोक्तदिशा सङ्केतज्ञानस्यार्थानुभवे व्यभिचारपरिहारो भवता क्रियते तथा 'एतदर्थज्ञान-मेतत्पदजन्यत्वेन' इत्यादिग्रन्थेनैतदर्थविषयकानुभवजनकत्वज्ञानस्यापि व्यभिचारः परिह्रियते एवेति विनिगमनाविरहात् किमित्यर्थविषयकानुभवजनकत्वज्ञानस्यार्थविषयकप्रतीतौ न कारणत्वमित्याशङ्क्य परिहरति–न चेति । 'पूर्वोक्तरीत्याऽ-नुभवजनकत्वस्य' इति स्थाने 'पूर्वोक्तरीत्याऽनुभवजनकत्वज्ञानस्य' इति पाठो युक्तः । निषेधहेतुमाह– इदमिति । 'स्वातन्त्र्येण' इत्यनेन 'एतदर्थज्ञानमेतत्पदजन्यत्वेनेच्छाविषयः' इति, ज्ञाने साक्षादर्थज्ञाने पदजन्यत्ववैशिष्ट्यभाने सति तदनन्तरं पदे यदर्थविषयकानुभवजनकत्वज्ञानं तस्य यत् पारतन्त्र्येण कारणत्वं तस्य व्यवच्छेदः । 'पदेऽनुभवजनकत्वे वैशिष्ट्यज्ञानस्यैव' इति स्थाने 'पदेऽनुभवजनकत्ववैशिष्ट्यज्ञानस्यैव' इति पाठो युक्तः । परेण तदर्थविषयकानुभव-जनकत्वमेव पदे तत्र शक्तत्वमिति वादिना । तस्य च 'इदं पदमेतदर्थविषयकानुभवजनकम्' इत्याकारकस्य स्वातन्त्र्येण पदे तदर्थविषयकानुभवजनकत्ववैशिष्ट्यज्ञानस्य च । आधुनिकसङ्केतस्थले 'देवदत्तपदादसौ बोद्धव्यः'

कत्वादिना तदज्ञा(तज्ज्ञा)नस्य पूर्वमपि गवादिपदे सम्भवेन व्यभिचाराभावात्, न च पूर्वोक्तरीत्यानुभवजनकत्वस्याप्यव्यभिचारः, 'इदं पदमेतदर्थानुभवजनकम्' इति स्वातन्त्र्येण पदेऽनुभवजनकत्वे वैशिष्ट्यज्ञानस्यैव हेतुतायाः परेणाभ्युपेतत्वात् तस्य चाधुनिकसङ्केतस्थले व्यभिचारदर्शनादिति दिक् ।

न च शब्दसम्बन्धमनपेक्ष्य संस्कारमात्रोपस्थितस्य "पङ्कजमानय" इत्यत्रान्वये पद्मत्वव्यापकानां द्रव्यत्वादीनामन्वयः स्यादिति वाच्यम्, शब्दसम्बन्धोपगमेऽपि संस्कारप्राकट्यस्यावश्योपजीव्यत्वात्, 'घटमानय' इत्यत्र छिद्रेतरघटत्वस्येव प्रकारस्यापि भाने न लक्षणोच्छेद इति तूक्तप्रायम्, न च

---

इत्यभिप्रायस्थले । **व्यभिचारदर्शनात्** तत्र प्रथमत 'एतदर्थज्ञानमेतत्पदजन्यत्वेनेच्छाविषयः' इति ज्ञानं यद्यप्यस्ति तथापि तद् 'एतदर्थज्ञानमेतत्पदजन्यम्' इत्याकारालिङ्गितमेव, न तु 'एतत्पदमेतदर्थविषयकानुभवजनकम्' इति स्वरूपाकलितमिति देवदत्तरूपार्थविषयकानुभवजनकत्वज्ञानाभावेऽपि देवदत्तपदाद् देवदत्तरूपार्थविषयकानुभवभावेन व्यतिरेकव्यभिचारदर्शनात्, एवं च पद्मत्वप्रकारकपद्मविषयकानुभवजनकत्व पद्मत्वप्रकारकपद्मविषयस्मरणजनकत्वं वा न पङ्कजपदस्य पद्मरूपार्थे शक्तिर्येन समुदायशक्तिस्तस्य पद्मत्वप्रकारकपद्मविषयकानुभवजनकस्य स्यात्, किन्तु ततो व्यतिरिक्तैव सङ्केतलक्षणा शक्तिः, सा पङ्कजपदस्य पद्मरूपार्थे नेष्यते, किन्तु व्युत्पत्तिग्रहापेक्षितपद्मत्वनियतशक्तिग्रहाहितसंस्कारादेव फलवलकल्प्योद्बोधितात् पद्मत्वोपस्थितिरिति ।

ननु यदि पङ्कजपदस्य न पद्मत्वेन रूपेण पद्मरूपार्थे शक्तिः किन्तु पद्मत्वनियतशक्तिग्रहाहितसंस्कारमात्रादेव पद्मत्वोपस्थितिस्तर्हि पङ्कजनिकर्तृरूपार्थे या तस्यावयवशक्तिः सा यथा पद्मत्वनियता तथा पद्मत्वव्यापकद्रव्यत्वादिनियताऽपीति तादृशशक्तिग्रहाहितसंस्कारात् पद्मत्वस्येव द्रव्यत्वादीनामप्युपस्थितिसम्भवात्-पङ्कजमानयेत्यत्र पङ्कजपदासम्बद्धस्य संस्कारमात्रोपस्थितस्य पद्मत्वस्येव पङ्कजपदासम्बद्धानां पद्मत्वव्यापकाना द्रव्यत्वादीनामपि सस्कारमात्रोपस्थितानामन्वयबोधः स्यादित्याशङ्क्य प्रतिक्षिपति- **न चेति**- अस्य 'वाच्यम्' इत्यत्रान्वय. । पङ्कजपदावयवशक्तेर्यथा पद्मत्वनियतत्वं पङ्कजनिकर्तरि पद्मे पद्मत्वस्य सत्त्वात् तथा पद्मत्वव्यापकद्रव्यत्वादिनियतत्वमपि द्रव्यत्वादीनामपि तत्र सत्त्वादित्यावेदयितुं '**पद्मत्वव्यापकानाम्**' इति 'द्रव्यत्वादीनाम्' इत्यस्य विशेषणम् । शब्दस्य शक्तिलक्षणसम्बन्धस्यार्थे सत्त्वेऽपि पूर्वानुभवाहितशक्तिविषयकसंस्कार. प्राकट्यलक्षणोद्बोधशाली यावन्न भवति तावच्छक्तिस्मरणं न भवतीति शक्तिस्मरणे तत्संस्कारोद्बोधोऽवश्यमपेक्षितव्य. शक्तिस्मरणाच्चार्थस्मरण तदैव भवति यदि तदर्थविषयकसंस्कारः प्रकटो भवति नान्यथेति संस्कारप्राकट्यस्य संस्कारोद्बोधस्वभावस्यावश्यमर्थोपस्थितावुपजीव्यत्वेन पङ्कजपदस्य पद्मत्वे समुदायशक्तिलक्षणसम्बन्धाभावेऽपि पद्मत्वनियतावयवशक्तिग्रहाहितपद्मत्वविषयकात् संस्कारादुद्बोधलक्षणप्राकट्यालिङ्गितात् पद्मत्वोपस्थिति' सम्भवति, द्रव्यत्वादीना चोक्तशक्तिव्यापकत्वेऽपि न तद्विषयक. संस्कारस्तादृगशक्तिग्रहाहितो नवा ततः प्रकटितः स इति 'पङ्कजमानय' इत्यत्र सस्कारमात्रोपस्थितस्य पद्मत्वस्यैवान्वयबोधो न द्रव्यत्वादीनामिति प्रतिक्षेपहेतुमुपदर्शयति- **शब्दसम्बन्धोपगमेऽपीति**- शब्दस्यार्थेन सह शक्तिलक्षणसम्बन्धोपगमेऽपीत्यर्थ. । ननु पङ्कजपदस्य न पद्मत्वे शक्तिर्नवा लक्षणाऽथापि पद्मत्वस्य प्रकारविधयाऽन्वयबोधे भानं यदि तदा 'गङ्गायां घोषः' इत्यत्रापि गङ्गापदस्य गङ्गातीरे लक्षणात्मकसम्बन्धाभावेऽपि तस्यान्वयबोधे भानसम्भवाल्लक्षणोच्छेद इत्यत आह- '**घटमानय**' **इत्यत्रेति**- जलधारणादिकार्यार्थं घटस्यानयनमभिप्रेतम्, न च च्छिद्रघटेन जलधारणादिक सम्भवति ततश्छिद्रेतरघटत्वेन घटे घटपदस्य शक्त्यभावेऽपि 'घटमानय' इति वाक्यजन्यशाब्दबोधे छिद्रेतरघटत्वं प्रकारतया भासते तथा पद्मत्वरूपप्रकारस्य पदासम्बद्धस्य शाब्दबोधे भानेऽपि प्रकारिणो धर्मिणो न पदासम्बद्धस्य शाब्दबोधे भानमिति गङ्गातीरत्वस्य लक्ष्यतावच्छेदकस्य प्रकारीभूतस्य पदासम्बद्धस्य शाब्दबोधे भानसम्भवात् तत्र लक्षणाभावेऽपि धर्मिणो गङ्गातीरस्य पदासम्बद्धत्वे तद्भानासम्भवात् तद्भानाथ गङ्गातीरे गङ्गापदस्य लक्षणाऽऽवश्यकीति न लक्षणोच्छेद इत्यर्थः। **उक्तप्रायमिति**-'अथ लाक्षणिकमननुभावकमेव' इत्यादिग्रन्थेन प्रकारान्तरेण लक्षणाया आवश्यकत्वमुक्तमित्यत उक्तप्रायमित्युक्तम्, 'भाने न' इत्यत्र 'प्रकारस्यापि' इत्यपेः 'भाने' इत्यनन्तरं सम्बन्ध. तेन प्रकारस्य भानेऽपि न लक्षणोच्छेद इत्यन्वये उक्तोऽर्थः स्पष्टमेवावभासत इति । ननु

संस्कारप्राकट्यात् प्रकारिणोऽप्युपस्थितेर्लक्षणोच्छेद एव, अत्रोक्तगङ्गापदान्यथानुपपत्त्याऽशक्यतात्पर्यस्यैव लक्षणाकल्पकत्वात्, यद्यपि 'गच्छ गच्छसि चेत् कान्त!' इत्यादावशक्यमरणतात्पर्यकत्वेऽपि न लक्षणा, अनुमानेनैव निर्वाहात्, तथाप्यसति गत्यन्तरे तात्पर्यस्य लक्षणाकल्पकत्वमित्यदोषः।

ऋजुवस्तु—"घटादिपदानां विशेषतात्पर्यसाहाय्येन नीलघटादिबोधकत्ववत् पङ्कजपदस्यापि पङ्कजनिकर्तृविशेषपद्मतात्पर्यग्रहसाहाय्येन पद्मान्वयबोधकत्वसम्भवादपि न तत्र शक्तिः, न चैवं पङ्कजनिकर्तृत्वेनैव तदुपस्थितिः स्यान्न पद्मत्वेनेति वाच्यम्, इष्टापत्तेः, कथमन्यथा कदाचित् कुमुदेऽपि प्रयोगस्तव लक्षणया, मम तु तत्क्लृप्तयाऽवयवशक्त्यैवाकाङ्क्षादिसमवहितया शक्यार्थविषयी कुमुदबोधसम्भव इति महान् विशेषः" इत्याहुः।

---

यथा प्रकारे लक्षणाभावेऽपि संस्कारप्राकट्यात् तदुपस्थित्या शाब्दबोधे तस्य भानं तथैव धर्मिणोऽपि संस्कारप्राकट्यादुपस्थितितः शाब्दबोधे भानसम्भवात् प्रकारिण्यप्यशक्ये लक्षणा नाश्रयणीयेति लक्षणोच्छेद इत्याशङ्क्य प्रतिक्षिपति—**न चेति**। **प्रकारिणोऽपि** धर्मिणोऽपि। यदि 'गङ्गायां घोषः' इत्यत्र गङ्गापदस्य गङ्गातीरे शक्त्यभाववल्लक्षणाभावोऽपि तर्हि गङ्गापदं तत्रानर्थक्यान्नोच्चारणीयं स्यात्, उच्चार्यते च वृद्धपरम्परया तत्र गङ्गापदमिति तदन्यथानुपपत्त्या तत्प्रयोक्तुर्यदशक्ये गङ्गातीरे तात्पर्यं 'गङ्गापदं गङ्गातीररूपार्थं बोधयतु' इत्याकारकं तदेव गङ्गापदस्य गङ्गातीररूपार्थे लक्षणां कल्पयतीति न लक्षणोच्छेद इति प्रतिषेधहेतुमुपदर्शयति—**अत्रेति**—'गङ्गायां घोषः' इत्यादिवाक्य इत्यर्थः। **अशक्यतात्पर्यस्यैवेति**—'पङ्कजमानय' इत्यादौ तु पद्मत्वाबोधनेऽपि पङ्कजनिकर्तृरूपार्थबोधकतया सार्थकं पङ्कजपदमिति न तस्यान्यथानुपपत्तिरित्यशक्ये पद्मत्वे न तस्य तात्पर्यं किन्तु दर्शितयुक्त्यैव संस्कारप्राकट्यादुपस्थितस्य पद्मत्वस्यान्वयबोधे भानमिति पद्मत्वविषयकतात्पर्याभावान्न तत्र लक्षणा कल्प्यत इत्याशयः। गत्यन्तराभावे सत्यशक्यतात्पर्यस्य लक्षणाकल्पकत्वं न तु अशक्यतात्पर्यमात्रस्येत्याह—**यद्यपीति**। **"गच्छ गच्छसि चेत् कान्त!" इत्यादाविति**—अत्रादिपदात् "पन्थानः सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान्"॥ इति चरणत्रयस्य परिग्रहः, [साहित्यग्रन्थे] इयं च स्वामिनं प्रति तत्परदेशगमनप्रतिषेधार्थं भार्याया उक्तिः, त्वं चेत् गच्छसि चेत् तदानीमेवाहं म्रिये, तस्मान्मम जीवनं वाञ्छसि चेद् मा गच्छेति वक्त्र्या भार्यायास्तात्पर्यम्, इत्थं चोक्तवाक्यघटकस्य कस्यापि पदस्य मरणं न शक्यमित्यशक्ये मरणे उक्तवाक्यस्य तात्पर्यसत्त्वेऽपि न तत्र लक्षणा, तामन्तरेणैव मरणरूपार्थप्रतीतिसम्भवात्, उक्तवाक्यप्रयोगकाले जीवन्त्यास्तस्या भर्तुर्यत्र गमनं तत्र जन्म तदैव सम्भवति यदि तद्गमनसमनन्तरमेव तस्या मरणं भवेदिति भर्तृगन्तव्यदेशीयतज्जन्मना तदीयमरणमनुमीयत इत्यनुमानादेव मरणावगतिसम्भवान्न तत्र लक्षणया प्रयोजनमिति न मरणतात्पर्यस्य लक्षणाकल्पकत्वमित्यर्थः। **तथापि** तत्रानुमानेन तात्पर्यविषयीभूताशक्यमरणरूपार्थावगतिसम्भवेऽपि। **असतीति**—यस्य तात्पर्यविषयीभूताशक्यार्थस्य नानुमानादितोऽवगतिसम्भवस्तस्मिन्नर्थेऽशक्ये तात्पर्यस्य गत्यन्तरविरहेण तदवगतये लक्षणाया आवश्यकत्वमिति तादृशतात्पर्यस्य लक्षणाकल्पकत्वेन न लक्षणोच्छेदलक्षणो दोष इत्यर्थः।

पङ्कजपदस्य पद्मत्वेन पद्मबोधने समुदायशक्तिं प्रकारान्तरेण निराकुर्वतामृजूनां मतमुपदर्शयति—**ऋजवस्त्विति**—अस्य 'आहुः' इत्यनेन सम्बन्धः। **विशेषतात्पर्यसाहाय्येनेति**—'घटपदं नीलघटं बोधयतु, पीतघटं बोधयतु' इत्यादिविशेषतात्पर्यसहकारेणेत्यर्थः। **न तत्र शक्तिः** न पङ्कजपदस्य पद्मरूपार्थे समुदायशक्तिः। ननु पङ्कजपदस्य यदि पद्मत्वेन पद्मरूपार्थे न समुदायशक्तिः, किन्तु पङ्कजनिकर्तृत्वेन रूपेणावयवशक्तिरेव तर्हि पङ्कजनिकर्तृत्वेनैव रूपेण पद्मोपस्थितिः स्यान्न तु पद्मत्वेन रूपेण पद्मोपस्थितिरित्याशङ्कामिष्टापत्त्या प्रतिक्षिपति—**न चेति**—अस्य 'वाच्यम्' इत्यनेनान्वयः। **एवं** पङ्कजपदस्य पद्मत्वेन रूपेण पद्मे समुदायशक्त्यनभ्युपगमे। **तदुपस्थितिः** पद्मोपस्थितिः। **इष्टापत्तेरिति**—पङ्कजपदात् पङ्कजनिकर्तृत्वेनैव पद्मस्य बोधो न तु पद्मत्वेनेत्यापादनस्येष्टापत्तिरूपत्वेनादोषत्वादित्यर्थः। यदि भवन्मते पङ्कजपदात् पद्मत्वेन रूपेण बोधस्तदा पद्मत्वस्य कुमुदे बाधात् कुमुदे पङ्कजपदप्रयोगः कदाचिज्जायमानो विरुध्येत, अतः कुमुदे लक्षणया तत्प्रयोगः कल्पनीयः, अस्मन्मते तु पङ्कजनिकर्तृत्वस्य कुमुदेऽपि सत्त्वाच्छक्त्यैव तत्र तत्प्रयोगस्य सम्भवाल्लक्षणाश्रयणं न कर्तव्यमिति भवन्मतापेक्षयाऽस्मन्मते विशेषोऽपीत्याह—**कथमिति**। **अन्यथा** पङ्कजपदात् समुदायशक्त्या पद्मत्वेन

**नैगमनयानुसारिणो नैयायिकास्तु-"संस्कारमात्रवशात् पद्मत्वभाने नियमतः कल्प्यमानेऽगृहीतसमुदाया(य)शक्तेरप्यनुभूतपद्मत्वस्य तद्भानापत्तिः, पङ्कोत्तरजपदस्यैव संस्कारोद्बोधकस्य त्वया वाच्यत्वात्, न च प्रत्येकव्युत्पन्नस्य समुदायव्युत्पत्तिं विना पद्मत्वप्रकारकपद्मानुभवो जायते, न च पद्मत्वान्वयतात्पर्यग्रहे स जायत एव, तदग्रहे तु तत एव स न स्यादिति वाच्यम्, तथापि प्रत्येकाव्युत्पन्नस्य पङ्कजपदात् पद्मत्वप्रकारकप्रतीतेः, कोशेषु पङ्कज-पद्मपदयोः पर्यायताकीर्तनस्य च समुदायशक्तिसाधकत्वात्, शब्दानुपस्थितस्य शाब्दविषतयाऽभ्युपगमे च घटादावव्युत्पन्नस्य घटविषय(क)प्रबलसंस्कारात्**

रूपेण पद्मबोधाभ्युपगमे। 'कुमुदेऽपि प्रयोगस्तत्र लक्षणया' इत्यस्य स्थाने 'कुमुदेऽपि प्रयोगः स्यादतः कुमुदे प्रयोगस्तव लक्षणया' इति पाठः समीचीनः, पङ्कजपदस्य पद्मे समुदायशक्तिरपीत्यभ्युपगन्तुस्तव मते पद्मानधिकरणे सरोविशेषे कुमुदवति पङ्कजनिकर्तृकुमुदरूपार्थमुपादाय पङ्कजमस्तीति प्रयोगः शक्त्या कथं स्यादपि तु न स्यात्, किन्तु पङ्कजपदस्य लक्षणया कुमुदरूपार्थमाश्रित्य तथा प्रयोगो भवेत्, तस्यावयवशक्तिमात्रमभ्युपगच्छतः समभिरूढनयावलम्बिनो मम पुनः पङ्कजनिकर्तृत्वस्य कुमुदेऽपि सत्त्वात् पङ्कजनिकर्तृत्वेन कुमुदरूपार्थमुपादाय शक्त्यैव तत्र पङ्कजमस्तीति प्रयोग उपपद्यत इति न तत्र लक्षणाश्रयणमिति भवन्मतापेक्षयाऽस्मन्मते महान् विशेष इति सरला वदन्तीत्यर्थः।

पङ्कजपदस्य पद्मे समुदायशक्तिमभ्युपगच्छतां नैगमनयानुसारिणां नैयायिकानां मतमुपदर्शयति-**नैगमनयानुसारिणो नैयायिकास्त्विति**- अस्य व्यवहितेन 'येन योगत्यागेऽपसिद्धान्तः स्यात्' इत्यनन्तरम् 'आहुः' इति कलितेनान्वयः। **पद्मत्वभाने** पङ्कजपदजन्यान्वयबोधे पद्मत्वभाने। **अगृहीतसमुदायशक्तेरपि** येन प्रमात्रा पङ्कजपदस्य पद्मे समुदायशक्तिः पूर्वं न गृहीता तस्यापि। **अनुभूतपद्मत्वस्य** प्रत्यक्षादितः पूर्वं गृहीतं पद्मत्वं येन तस्य, एतावता पद्मत्वविषयकसंस्कारस्तस्य प्रमातुः पद्मत्वविषयकस्मरणप्रयोजकः समस्तीत्यावेदितम्। **तद्भानापत्तिः** पङ्कजमस्तीत्यादिवाक्यजन्यशाब्दबोधे पद्मत्वभानापत्तिः। ननु संस्कारमात्रान्न स्मरणं किन्तूद्बुद्धसंस्कारादेवेत्युद्बोधकाभावात् सतोऽपि पद्मत्वविषयकसंस्कारस्य प्राकट्याभावान्न पद्मत्वस्मरणमतो न तस्य प्रमातुः पङ्कजमस्तीति वाक्यजन्यशाब्दबोधे पद्मत्वस्य भानमित्यत आह-**पङ्कपदोत्तरजपदस्यैवेति**। **त्वया** समुदायशक्त्यनभ्युपगन्त्रा, तथा च पङ्कपदोत्तरजपदस्य पद्मत्वसंस्कारोद्बोधकस्य तत्र सत्त्वात् संस्कारप्राकट्यं स्यादेवेति ततः स्मृतस्य पद्मत्वस्य शाब्दबोधे भानं प्रसज्यत इत्यर्थः। उक्तप्रसङ्गस्येष्टापत्तिरूपताश्रयणेनादोषत्वं नाभ्युपगन्तुं शक्यमित्याह-**न चेति**- अस्य 'जायते' इत्यनेनान्वयः। **प्रत्येकव्युत्पन्नस्य** पङ्कपदस्य कर्दमे शक्तिः, जपदस्य जनिकर्तरि शक्तिरित्येवं जानानस्य। **समुदायव्युत्पत्तिं विना** पङ्कजपदं पद्मत्वावच्छिन्ने शक्तमित्याकारकसमुदायशक्तिग्रहणमन्तरेण। ननु पङ्कजमस्तीत्यत्र 'पङ्कजपदं पद्मत्वावच्छिन्नविषयकबोधेच्छयोच्चरितम्' इत्याकारकतात्पर्यज्ञाने सति समुदायशक्तिग्रहाभावेऽपि पद्मत्वप्रकारकपद्मविषयकानुभवो भवत्येव, निरुक्ततात्पर्यग्रहाभावे तु निरुक्ततात्पर्यग्रहरूपकारणाभावादेव निरुक्तानुभवाभावो न तु समुदायशक्तिग्रहाभावादित्याशङ्कां प्रतिक्षिपति-**न चेति**- अस्य 'वाच्यम्' इत्यनेनान्वयः। **सः** पद्मत्वप्रकारकपद्मविषयकानुभवः, एवमग्रेऽपि। **तदग्रहे तु** पङ्कजपदं पद्मत्वप्रकारकपद्मविषयकानुभवेच्छयोच्चरितमिति तात्पर्यग्रहाभावे पुनः। **तत एव** निरुक्ततात्पर्यग्रहाभावादेव। प्रतिक्षेपहेतुमुपदर्शयति-**तथापीति**- उक्तदिशा समुदायशक्तिग्रहमन्तरेणापि निरुक्ततात्पर्यग्रहभावाऽभावाभ्यां पद्मत्वप्रकारकपद्मविषयकानुभवभावाऽभावयोरुपपादनेऽपीत्यर्थः। **प्रत्येकेति**- यस्य प्रमातुः पङ्कपदं कर्दमे शक्तं जपदं जनिकर्तरि शक्तमित्येवमवयवशक्तिग्रहो नास्ति तस्यापि प्रत्येकाव्युत्पन्नस्य प्रमातुः पङ्कजपदात् पद्मत्वप्रकारकपद्मविषयकानुभवस्य भावात् पङ्कजपदस्य पद्मे शक्तिरवश्यमभ्युपेया, अन्यथा तस्य प्रमातुः पङ्कजपदे शक्तिसामान्यस्यैव ग्रहाभावाच्छक्तिग्रहरूपसहकारिणोऽभावात् पङ्कजपदात् पद्मप्रतीतिरेव न भवेत्, नहि शक्ति-लक्षणान्यतरवृत्तिग्रहमन्तरेण शब्दादर्थानुभव उपेयते, न च कस्मिन्नप्यर्थे शक्तिग्रहमन्तरेण शक्यसम्बन्धरूपलक्षणाग्रहस्यापि सम्भव इति। **कोशेष्विति**- कोशेष्वेकार्थवाचकतया पङ्कज-पद्मपदयोः कीर्तनमस्ति तत्र पद्मपदं न पङ्कजनिकर्तरि शक्तं किन्तु पद्मत्वावच्छिन्नशक्तमेवेति पङ्कजपदमपि यदि पद्मत्वावच्छिन्नशक्तं भवेत् स्यात् तदैकधर्मावच्छिन्नवाचकत्वलक्षणपर्यायतेति तद्बलात् पङ्कजपदस्य पद्मे शक्तिरिति समुदायशक्तिसिद्धिरित्यर्थः। पङ्कजपदेनानुपस्थितस्य पद्मस्य संस्कारमात्रोपस्थितस्य शाब्दबोधविषयत्वाभ्युप-

तद्भानप्रसङ्गः, पशु(त्व-)गोत्वयोः प्रयोगोपाधित्वं शक्त्युपाधित्वं चेति तु परिभाषामात्रम्, घटादिपदे घटत्वादेरपि तत्त्वापत्तेः, उपाधिभूतेन घटत्वादिना संस्कारोपस्थितेरप्रकारेण निर्विकल्पकापत्तिनिरासस्यापि शक्यभाषणत्वात्, 'पद्मत्वस्मरणस्य पङ्कपदोत्तरजपदस्य वा कुमुदादिप्रयोगप्रतिबन्धकत्वं शक्तिकौण्ठ्यं-(ण्ठ्यं) वा कल्प्यते' इत्यपि यदुक्तं तदयुक्तम्, अगृहीतपद्मशक्तेः पङ्कजपदात् पङ्कजनिकर्तृत्वेन रूपेण कुमुदादिबोधदर्शनात्, अत एवाव्युत्पन्नः 'पङ्कजमानय' इति वाक्यश्रवणानन्तरं कुमुदानयने दोलायते, सामान्यशब्दत्वादमीषाम्; 'विशेषतात्पर्यवशाद् विशेषबोधकत्वम्' इति यदुक्तं तत्रापि वस्तुगत्या यो विशेषस्तद्बोधकत्वं वा विशेषाकारेण वा? आद्ये पद्मत्वाननुभवापत्तिः, द्वितीये लक्षणाप्रसङ्गः, न चेष्टा-

गमेऽतिप्रसङ्गदोषं सङ्गमयति-शब्दानुपस्थितस्येति । घटादावव्युत्पन्नस्येति- घटादौ घटादिपदशक्तिमजानानस्येत्यर्थः । तद्भानप्रसङ्गः शाब्दबोधे घटादिभानप्रसङ्गः । पशुपदस्य न लोमवल्लाङ्गूलवत्त्वलक्षणपशुत्वावच्छिन्ने शक्तिः, गोपदस्य च न गोत्वावच्छिन्ने शक्ति', किन्तु पश्वादिपदव्युत्पत्तिनिमित्तावच्छिन्ने एव, एवमपि लोमवल्लाङ्गूलवति यत् पशुपदं प्रयुज्यते, गोत्ववति गोपद च प्रयुज्यते, तत् पशुत्व-गोत्वयोः प्रयोगोपाधित्व-शक्त्युपाधित्वयोरुपगमादित्यपि युक्तिरिक्तं स्वेच्छामात्रनिर्मितमेव, एवं सति घटत्वादेरपि घटादिपदप्रयोगोपाधित्व-शक्त्युपाधित्वयोरेव प्रसक्त्या घटादिपदानामपि घटत्वाद्यवच्छिन्ने शक्तेरुच्छेदापत्तेरित्याह-पशुत्व-गोत्वयोरिति । परिभाषामात्रं स्वेच्छामात्रकल्पितम् । तत्त्वापत्तेः प्रयोगोपाधित्व-शक्त्युपाधित्वयोरापत्तेः । ननु घटादिपदस्य यदि घटत्वाद्यवच्छिन्ने न शक्ति. किन्तु यस्या व्यक्तौ घटत्वादिकं वर्तते तस्यामेव व्यक्तौ घटादिपदं प्रयुज्यते, घटादिपदस्य च शक्तिरित्येवं घटत्वादेः प्रयोगोपाधित्व-शक्त्युपाधित्वयोरुपगमे घटादिपदान्निर्विकल्पकघटादिव्यक्तिप्रतीतिः स्यादित्यत आह- उपाधिभूतेनेति- 'संस्कारोपस्थितेरप्रकारेण' इति स्थाने 'सस्कारोपस्थितौ प्रकारेण' इति पाठो युक्त., यद्यपि घटत्वेन रूपेण घटे घटपदस्य न शक्तिः, किन्तु यस्यां व्यक्तौ घटत्वं तस्यामेव घटपदस्य शक्तिरिति शक्त्युपाधिभूते घटत्वे घटपदशक्त्यभावान्न शक्त्या घटत्वस्योपस्थितिः, तथापि संस्कारमात्रेण घटोपस्थिते सम्भवेन संस्कारप्रभवोपस्थितौ प्रकारेण घटत्वेन घटस्य प्रतीतितो न घटस्य निर्विकल्पकापत्तिरित्येव गदितु शक्यत्वादित्यर्थः । शक्यभाषणत्वाद् इत्यस्य शक्यं गदितुं योग्य भाषण वचनं यस्य तत्त्वादित्यर्थ. । यच्च समुदायशक्तपनभ्युपगन्त्रा परेण "अस्तु वा परस्य समुदायशक्तेरिव मम पद्मत्वस्मरणस्य कुमुदादौ प्रयोगप्रतिबन्धकत्वम्, यद्वा पङ्कपदोत्तरजपदस्यैव कुमुदादिस्मरणप्रतिबन्धकत्वम्" इत्युक्त तदपि न समीचीनमित्युपदर्शयति-पद्मत्वस्मरणस्येति । शक्तिकौण्ठ्यं चेति- एतच्च "अत एवावयवशक्तावेव केचित् कौण्ठ्यं कल्पयन्ति" इति ग्रन्थेनोक्तम्, तदयुक्तत्वे हेतुमुपदर्शयति- अगृहीतपद्मशक्तेरिति- एतावता पङ्कजपदेन पद्मत्वस्मरण न भवति, सस्कारमात्रेण भवतोऽपि पद्मत्वस्मरणस्य पङ्कजनिकर्तृत्वेन रूपेण कुमुदादिबोधदर्शनेन न तत्र तस्य प्रतिबन्धकत्वम्, पङ्कपदोत्तरजपदस्य तत्र भावेऽपि पङ्कजनिकर्तृत्वेन रूपेण कुमुदादिबोधस्य भावेन न तस्यापि तत्र प्रतिबन्धकत्वम्, अत एवावयवशक्तिकौण्ठ्यमपि न सम्भवदुक्तिकमित्यर्थः । अत एव पङ्कजपदात् पङ्कजनिकर्तृत्वेन रूपेण कुमुदादिबोधभावादेव । अव्युत्पन्नः पङ्कजपदस्य पद्मे समुदायशक्तिमजानानः प्रमाता, पङ्कजपदस्य पद्मे शक्तिं जानानस्तु प्रमाता 'पङ्कजमानय' इति वाक्यश्रवणानन्तर पङ्कजनिकर्तृपद्मानयनस्य कार्यत्वं निश्चिनोत्येवेति न स कुमुदानयने दोलायत इत्यत उक्तम्- अव्युत्पन्न इति । नव्यानां यदपि मतम्- घटादिपदाना विशेषतात्पर्यसाहाय्येन नीलघटादिबोधकत्ववत् पङ्कजपदस्यापि पङ्कजनिकर्तृविशेषपद्मतात्पर्यग्रहसाहाय्येन पद्मान्वयबोधकत्वसम्भवादपि न तत्र शक्तिः, इति तदपि न समीचीनमित्यावेदयति-सामान्यशब्दत्वादिति- पद्मकुमुदादिसाधारणधर्मावच्छिन्नवाचकत्वादित्यर्थः । अमीषां पङ्कजादिशब्दानाम् । विशेषतात्पर्यवशात् पङ्कजनिकर्तृविशेषपद्मं पङ्कजपदं बोधयतु' इति तात्पर्यवशात्, 'पङ्कजपदं पङ्कजनिकर्तृविशेषपद्मविषयकबोधेच्छयोच्चरितम्' इति तात्पर्यग्रहसहकारेणेति यावत् । विशेषबोधकत्वं पङ्कजनिकर्तृविशेषपद्मबोधकत्वम् । उक्तस्यायुक्तत्वं भावयितुं विकल्पयति- तत्रापीति । आद्ये वस्तुगत्या पङ्कजनिकर्तृरूपसामान्यस्य यः पद्मव्यक्तिलक्षणविशेषस्तद्बोधकत्वमिति पक्षे । पद्मत्वाननुभवापत्ति. पद्मत्वेन रूपेण पद्मस्यानुभवो न स्यात्, किन्तु पङ्कजनिकर्तृत्वेनैव विशेषस्य पद्मव्यक्तिलक्षणस्य प्रतीतिर्भवेत् । द्वितीये पङ्कजनिकर्तृविशेषपद्मस्य पद्मत्वरूपविशेषाकारेण बोधकत्वमिति पक्षे ।

पत्तिः, मुख्यार्थविशेषितस्यैव पद्मत्वस्य भानात्, तथा च वृत्तिद्वयविरोधस्य जागरूकत्वात्, 'पङ्कजं कुमुदमानय' इत्यत्र च पङ्कजपदे न लक्षणा, किन्तु पद्मत्वमुपस्थितमप्यन्वयायोग्यत्वान्नालमित्यवयवार्थ एव परमन्वेतीति न किञ्चिदनुपपन्नम्, न च रूढ्या शीघ्रोपस्थितेन पद्मेनावरुद्धतयोपस्थितस्य पङ्कजनिकर्तृत्वस्य कुमुदान्वये निराकाङ्क्षत्वात् स्वतन्त्रोपस्थितये लक्षणावश्यम्भावः, योगार्थस्य रूढ्यर्थविशेषणतायां तथाभावेऽपि विशेष्यतायां स्वातन्त्र्यानपायात्, अन्यथा 'श्येनेन यजेत' इत्यत्र बलवद्-

लक्षणाप्रसङ्ग इति– पङ्कजपदस्य पद्मत्वेन पद्मे समुदायशक्त्यभावेऽवयवशक्तिः पङ्कजनिकर्तृरूपसामान्य एव, न तु पद्मत्वेन रूपेण पद्म इति पङ्कजपदस्य पद्मत्वेन पद्मे लक्षणाश्रयणादेव तथा बोध इति लक्षणाप्रसङ्ग इत्यर्थ.। भवतु पङ्कजपदात् पद्मत्वेन रूपेण पद्मबोधो लक्षणया का नो हानिरिति लक्षणाप्रसङ्ग इष्टापादनत्वान्न दोषावह इत्याशङ्कां प्रतिक्षिपति— **न चेष्टापत्तिरिति**। निषेधे हेतुमाह– **मुख्यार्थविशेषितस्यैवेति**– पङ्कजपदस्यावयवशक्त्या प्रतिपाद्यत्वान्मुख्यो य. पङ्कजनिकर्तृत्वरूपोऽर्थस्तद्विशेषितस्य तत्सहितस्यैव पद्मत्वस्य पङ्कजपदजन्यबोधे भानादित्यर्थः। भवत्वेवं का क्षतिरित्यत आह— **तथा चेति**– पङ्कजपदजन्यबोधे पङ्कजनिकर्तृरूपमुख्यार्थविशेषितपद्मत्वरूपलक्ष्यार्थभाने चेत्यर्थः। **वृत्तिद्वयेति**– एकं पदमेकदैकस्य प्रमातु· स्वशक्यार्थमात्रबोधं स्वलक्ष्यार्थमात्रबोध वा जनयति, न तु स्वशक्यलक्ष्योभयार्थबोधमिति नियमेन वृत्तिद्वयविरोधस्य शक्तिलक्षणोभयवृत्तिग्रहसहकारेण शाब्दबोधाजनकत्वस्य। **जागरूकत्वात्** वादिकदम्बकाविप्रतिपत्त्या सद्भावात्। ननु पङ्कज कुमुदमानय' इत्यादौ पङ्कजपदशक्यार्थस्य पङ्कजनिकर्तृपद्मस्याभेदेन कुमुदरूपार्थे नान्वयसम्भव इति तत्र पङ्कजपदलक्ष्यार्थस्यैव कुमुदेऽन्वय इति लक्षणाऽप्यावश्यकीति वृत्तिद्वयविरोधस्तत्रापि स्यादित्यत आह– **'पङ्कजं कुमुदमानय' इत्यत्र चेति**– तत्र समुदायशक्त्योपस्थितस्यापि पद्मत्वस्य बाधात् कुमुदपदार्थे नान्वय., किन्त्ववयवशक्त्योपस्थितस्य पङ्कजनिकर्तुरेव तत्रान्वय इति पङ्कजपद तत्रैकयैव शक्तिलक्षण. वृत्त्याऽर्थ बोधयतीति लक्षणाश्रयणाभावान्न वृत्तिद्वयविरोधस्यावकाश इत्यर्थ.। ननु पङ्कजपदाद् यदैवावयवशक्त्या पङ्कजनिकर्तुरुपस्थितिस्तदैव समुदायशक्त्या पद्मस्याप्युपस्थितिरिति समानकालीनोपस्थितिकत्वेन पद्म एवान्वेति पङ्कजनिकर्तृरूपोऽर्थ इति पद्मरूपार्थे विशेषणतयाऽन्वितस्य पङ्कजनिकर्तुर्निराकाङ्क्षतया न कुमुदपदार्थेन सममन्वयः सम्भवतीति पद्माविशेषणतया स्वातन्त्र्येण पङ्कजनिकर्तुरुपस्थितये तत्र लक्षणाऽऽवश्यकीति वृत्तिद्वयविरोधः स्यादेवेत्याशङ्क्य प्रतिक्षिपति– **न चेति**। **रूढ्या** समुदायशक्त्या, **अवरुद्धतया** एकत्र विशेषणत्वेनोपस्थितस्य नान्यत्र विशेषणतयाऽन्वय इति नियमात् पद्मे विशेषणतयोपस्थितस्य पङ्कजनिकर्तुर्न कुमुदेऽन्वय इति विशेष्यीभूतेन पद्मेन स्वातिरिक्ते विशेषणतया पङ्कजनिकर्तुः स्वविशेषणस्यान्वयप्रतिबन्धकेनात्र रुद्धतयाऽन्यत्रान्वेतुमयोग्यतयोपस्थितस्यावयवशक्त्योपस्थितस्येत्यर्थ.। **स्वतन्त्रोपस्थितये** पद्माविशेषणतया पङ्कजनिकर्तुरुपस्थितये। प्रतिक्षेपहेतुमुपदर्शयति–**योगार्थस्येति**– अवयवशक्तिजन्योपस्थितिविषयस्य पङ्कजनिकर्तुरित्यर्थः। **रूढ्यर्थविशेषणतायां** समुदायशक्तिजन्योपस्थितिविषयपद्मरूपार्थविशेषणताया सत्याम्। **तथाभावेऽपि** कुमुदपदार्थे विशेषणतयाऽन्वये निराकाङ्क्षत्वेऽपि। **विशेष्यतायां** पङ्कजनिकर्तृरूपयोगार्थस्य समुदायशक्त्यर्थपद्मनिरूपितविशेष्यतायाम्। **स्वातन्त्र्यानपायात्** अन्यत्र विशेषतयाऽनुपस्थितत्वलक्षणस्य स्वातन्त्र्यस्यानपायात् सत्त्वात्, तथा च स्वातन्त्र्येणोपस्थितस्य पङ्कजनिकर्तृरूपयोगार्थस्य कुमुदपदार्थेऽभेदेन विशेषणतयाऽन्वये साकाङ्क्षत्वमनाकुलमेव, एकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषणतया नान्वय इति नियमस्य विरोधाभावादित्यर्थः। ननु यथाऽवयवशक्त्या पङ्कजनिकर्तुः पृथगेवोपस्थितत्वात् स्वातन्त्र्य तथा समुदायशक्त्या पद्मस्यापि पृथगेवोपस्थितत्वात् स्वातन्त्र्यमेव, तस्य च बाधादभेदेन न कुमुदरूपार्थेऽन्वयसम्भव·, न च रूढ्यर्थं पद्म परित्यज्य योगार्थस्य केवलस्यैव कुमुदपदार्थे योग्यत्वादन्वय इति वक्तु युक्तं तथा कुत्राप्यदृष्टत्वादित्यत आह– **अन्यथेति**– अन्वयायोग्यमेकमर्थं परित्यज्य योग्यस्यापरार्थस्य पदार्थान्तरेऽन्वयबोधस्यानभ्युपगमे इत्यर्थ। **श्येनेन यजेतेति**– 'दर्श-पूर्णमासाभ्या स्वर्गकामो यजेत' इत्यादौ सर्वत्र बलवदनिष्टाननुबन्धित्वमिष्टसाधनत्व कृतिसाध्यत्व चेत्येतत्त्रयं विध्यर्थः, नहि प्रयोजनमनुद्दिश्य मन्दोऽपि प्रवर्तत इति प्रवृत्ति प्रतीष्टसाधनताज्ञानमवश्यं कारणमभ्युपगन्तव्यम्, तथेष्टसाधनेऽपि चन्द्रमण्डलानयने कृत्यसाध्ये न प्रवर्तत इति कृतिसाध्यताज्ञानमपि प्रवृत्तिं प्रति कारणं स्वीकर्तव्यम्, तथा मधुविषसम्पृक्तान्नभक्षणे इष्टसाधने कृतिसाध्येऽपि च मरणरूपबलवदनिष्टानुबन्धिनि न प्रवृत्तिरतो बलवदनिष्टाननुबन्धित्वज्ञानमपि प्रवृत्तिकारणम्, एव च प्रवर्तकत्वानुरोधाद् विधे-

निष्टानुबन्धित्वमयोग्यत्वान्नान्वेतीति सिद्धान्तभङ्गप्रसङ्गात्, यत् तूक्तम्–' प्रत्यक्षोपस्थितेनापि कलापेन तात्पर्यग्रहं सहकारिणमासाद्य ' पचति ' इत्यत्रान्वयबोध इष्यत ' इति, तत् तदा शोभते यदि तात्पर्यग्रहस्य वाक्यार्थप्रतिपत्तावङ्गत्वमीक्षामहे, तदेव तु नास्ति प्रमाणाभावात्, प्रत्युत तात्पर्यमस्य न ज्ञायते अस्माद् वाक्यादयमर्थस्तावदवगम्यत एवेति विचिन्त्य परावृत्त्य कुत्रास्य तात्पर्यमिति पृच्छति (प्र)योज्यवृद्ध इति; न लाक्षणिकपदार्थोपस्थितान्वय-व्यतिरेकाभ्यां तात्पर्यग्रहस्य हेतुत्वावधारणादन्यत्रापि तत्कल्पनं युक्तम्, सत्यां पदार्थोपस्थितौ तात्पर्यग्रहविलम्बेन वाक्यार्थानुभवविलम्बानुपलब्धेः; न पुरुषान्तरोदीरितकलायपदार्थोपस्थितावपि तात्पर्यग्रहसत्त्वा-ऽसत्त्वाभ्यामन्वयबो( धा-ऽबो )धदर्शनाद् वाक्यार्थानुभवेऽपि तद्धेतुत्वम्, आसत्तिसत्त्वा-ऽसत्त्वाभ्यामेव तौ, न तात्पर्यग्रहसत्त्वासत्त्वाभ्यामिति, पुरुषान्तरोदीरितकला-

---

रुक्तत्रितयार्थकत्वं व्यवस्थितम्, एवमपि ' श्येनेनाभिचरन् यजेत ' इत्यादौ शत्रुवधकामनया क्रियमाणस्य श्येनयागस्य मरणोद्देश्यकमरणानुकूलव्यापारात्मकहिंसारूपतया बलवदनिष्टनरकसाधनत्वेन बलवदनिष्टाननुबन्धित्वाभावेन विधिशक्त्योपस्थितस्यापि बलवदनिष्टाननुबन्धित्वस्य परित्यागेनैव विध्यर्थयोरिष्टसाधनत्वकृतिसाध्यत्वयोः श्येनयागेऽन्वय इत्येवं बलवदनिष्टाननुबन्धित्वमयोग्यत्वाच्छ्येनयागे बाधितत्वान्नान्वेतीति सिद्धान्तस्य भङ्गप्रसङ्गात्, अतो यथा तत्र बलवदनिष्टाननुबन्धित्वरूपविध्यर्थपरित्यागेनेष्टसाधनत्व-कृतिसाध्यत्वरूपविध्यर्थस्य श्येनयागेऽन्वयस्तथा 'पङ्कजं कुमुदमानय' इत्यत्र कुमुदेऽन्वयानर्हत्वात् समुदायशक्त्योपस्थितस्यापि पद्मरूपार्थस्य परित्यागेनावयवशक्त्योपस्थितस्य पङ्कजनिकर्तृरूपार्थस्य कुमुदपदार्थेऽन्वय उपपद्यते इत्यर्थः। यदपि समुदायशक्त्यनभ्युपगन्तुः पद्मत्वस्य पदानुपस्थितस्य संस्कारमात्रोपस्थितस्य शाब्दबोधे भानमित्यस्योपपत्तये ' न च संस्कारोपस्थितस्य शाब्दबोधेऽप्रवेशोऽन्यथा किं पचतीत्युक्ते प्रत्यक्षोपस्थितं कलायमादाय ' इत्यादिग्रन्थेन प्रमाणान्तरोपस्थितस्यापि शाब्दबोधे भानमिति मतमुपपादितं शङ्का-समाधानाभ्यां तदपि न युक्तमित्युपदर्शयति– **यत् तूक्तमिति** । **तत्** तात्पर्यग्रहसहकारेण पचतीत्यत्र प्रत्यक्षोपस्थितस्य कलायस्य कर्मतया पाकेऽन्वयबोधाभ्युपगमनम् । **तदेव तु नास्ति** तात्पर्यग्रहस्य वाक्यार्थप्रतिपत्तावङ्गत्वमेव नास्ति । न केवलं तात्पर्यग्रहस्य वाक्यार्थप्रतिपत्त्यङ्गत्वे प्रमाणाभावः, अपि तु तात्पर्यग्रहं विनापि वाक्यार्थप्रतिपत्तिर्जायमानाऽनुभूयते, यतः कस्यचिद् वाक्यस्यार्थं तात्पर्यग्रहमन्तराऽप्यवगत्यानन्तरं प्रयोज्यवृद्धः प्रयोजकवृद्धं पृच्छतीत्थं भवदुक्तवाक्यादयमर्थो मया ज्ञायते, भवतस्तु कुत्र तात्पर्यमित्याह– **प्रत्युतेति** । **अस्य** प्रयोजकवृद्धोच्चरितस्य श्रूयमाणविशेषस्य । **अस्माद् वाक्यात्** प्रयोजकवृद्धोच्चरिताच्छ्रूयमाणाद् वाक्यविशेषात् । **अयमर्थः** स्वीयतद्वाक्यजन्यशाब्दबोधेऽवभासमानोऽर्थः । **परावृत्य** प्रयोजकवृद्धाभिमुखीनः प्रयोजकवृद्धसम्मुखो भूत्वा । **कुत्र** कस्मिन्नर्थे । **अस्य** निरुक्तवाक्यस्य । ननु लाक्षणिकपदघटितवाक्यस्थले यत्रार्थे वक्तृतात्पर्यग्रहस्तत्रार्थे लक्षणावृत्तिज्ञानाल्लक्ष्यार्थोपस्थित्या लक्ष्यार्थविषयकान्यबोधो भवतीति लक्षणात्मकवृत्तिजन्योपस्थितिजन्यशाब्दबोधे तात्पर्यग्रहस्य कारणत्वमवश्यमेषितव्यम्, तत्र लक्षणात्मकवृत्तिग्रहप्रयोज्यशाब्दत्वावच्छिन्नं प्रति तात्पर्यज्ञानं कारणमित्येवं कार्यकारणभावकल्पनापेक्षया लाघवात् सामान्यतः शाब्दत्वावच्छिन्नं प्रति तात्पर्यज्ञानं कारणमित्येव कार्यकारणभावः कल्प्यत इत्यस्त्येव तात्पर्यग्रहस्य वाक्यार्थप्रतिपत्त्यङ्गत्वे प्रमाणमित्याशङ्क्य प्रतिक्षिपति– **न चेति** । **' न लाक्षणिकपदार्थोपस्थितान्वय-व्यतिरेकाभ्याम् '** इत्यस्य स्थाने ' न च लाक्षणिकपदार्थोपस्थितान्वय-व्यतिरेकाभ्याम ' इति पाठो युक्त, **' न च '** इत्यस्य युक्तमित्यनेनान्वयः, तात्पर्यग्रहसत्त्वे लाक्षणिकार्थस्योपस्थितिर्भवति तात्पर्यग्रहाभावे लाक्षणिकार्थस्योपस्थितिर्न भवतीत्येवमन्वय-व्यतिरेकाभ्यामित्यर्थः । **अन्यत्रापि** शक्तपदमात्रघटितवाक्यस्थले शक्यपदार्थोपस्थितिजन्यशाब्दबोधे संस्कारमात्रप्रयोज्योपस्थितिजन्यशाब्दबोधेऽपि च । **तत्कल्पनं** तात्पर्यग्रहस्य कारणत्वकल्पनम्, यद्विलम्बाद् यस्य विलम्बस्तस्यैव त प्रति कारणत्वम्, तात्पर्यग्रहविलम्बेऽपि पदार्थोपस्थितौ सत्यां शाब्दबोधो भवत्येव न तु शाब्दबोधविलम्ब उपलभ्यत इत्यर्थः । ननु एकेन पचतीत्युक्तौ परेण किं पचतीति प्रश्ने तदन्येन कलायमित्युक्तौ कलायपदात् कलायरूपार्थोपस्थितावपि ' कलायमिति पदं कलायकर्मकपाकान्वयबोधपरम ' इति तात्पर्यग्रहसत्त्वे कलायकर्मकपाकान्वयविषयकशाब्दबोधो भवति, निरुक्ततात्पर्यग्रहाभावे निरुक्तशाब्दबोधो न भवतीत्यन्वय-व्यतिरेकाभ्या तात्पर्यग्रहस्य वाक्यार्थबोधं प्रति कारणत्वं सिद्ध्यत्येवेत्याशङ्क्य प्रतिक्षिपति– **न चेति** । ' न

यपदेनापि 'पचति' इत्यस्य समभिव्याहारप्रतिसन्धानेन पुरुषैः खण्डने क्रियमाणे श्लोक इवान्वयबोधदर्शनाद् वाक्यार्थानुभवे समभिव्याहारप्रतिसन्धानस्यैव हेतुत्वात्; अर्थाध्याहारपक्षोऽप्ययुक्त एव, 'विमतो द्वारान्वयबोधो द्वारोपस्थापकपदजन्यः शब्दद्वारान्वयबोधत्वात् सम्प्रतिपन्नवत्' इत्यनुमानात् 'पिधेहि' इत्यत्र 'द्वारम्' इति शब्दाध्याहारस्यैव सिद्धेः, किञ्च, विभक्तिविशेषसमभिव्याहारमासाद्यैव पदानामर्थानुभावकत्वम्, तथैवाकाङ्क्षादर्शनादिति एव पदार्थो न शाब्दः, तदंश एवाकाङ्क्षाऽसम्भवेनान्वयबोधानुपपत्तेः, गौरवस्य प्रामाणिकत्वे यावदन्वयप्रतियोग्युपस्थितेः शाब्दत्वस्य शाब्दबोधे तन्त्रत्वादिति दिक्। स्यादेतत्, 'पङ्कजमानय' इत्यत्र पङ्कजशब्देन वाक्यार्थज्ञानानुकूलं कीदृक् पदार्थज्ञानं जन्यते ? 'पद्मं पङ्कजनिकर्तृ' इत्याकारमिति चेत् ? तत् किम् अनुभवरूपं स्मरणरूपं वा ? नाद्यः— सामग्रीविरोधात्, पङ्कजनिकर्तृत्वांशे ह्यनुभवसामग्री, पद्मांशे स्मरणसामग्री, ते च मिलित्वा कथमेकं

पुरुषान्तरोदीरित' इति स्थाने 'न च पुरुषान्तरोदीरित' इति पाठो युक्तः। तद्धेतुत्वं तात्पर्यग्रहस्य कारणत्वम्। निषेधे हेतुमुपदर्शयति– आसत्तिसत्त्वाऽसत्त्वाभ्यामेवेति। तौ अन्वयबोधाऽन्वयाबोधौ, पुरुषान्तरेण 'कलायम्' इत्युक्तौ 'कलायं पचति' इत्येव 'कलायम्' इत्यस्य 'पचति' इत्यनेन सहाव्यवहितपूर्वापरीभावलक्षणासत्तिसत्त्वे कलायकर्मकपाकान्वयबोधो भवति, निरुक्तासत्त्यभावे च निरुक्तवाक्यार्थबोधो न भवतीत्यन्वय-व्यतिरेकाभ्यामासत्तेरेव वाक्यार्थबोधं प्रति कारणत्वं न तु तात्पर्यग्रहस्य। 'पुरुषैः खण्डने क्रियमाणे' इत्यस्य स्थाने 'पुरुषैरन्वये क्रियमाणे' इति पाठो युक्तः। श्लोक इवेति–यत्पदद्वयार्थयोरन्वयबोधोऽपेक्षितस्तयो पदयो. श्लोके समभिव्याहृतयोरभावे यथाश्रुतश्लोकवाक्यात् तत्पदद्वयार्थान्वयबोधाभावेऽपि तत्पदयोरासत्तिकल्पनया यद् वाक्यान्तरं तत एव पदद्वयासत्तिसहकारादन्वयबोधो यथा दृश्यते तथाऽन्यत्राप्यासत्तित एवान्वयबोधभावेन वाक्यार्थानुभवे समभिव्याहारलक्षणासत्तिप्रतिसन्धानस्यैव हेतुत्वादित्यर्थः। यदपि 'अत एव तात्पर्यविषयान्वयप्रतियोगिवाचकपदाध्याहारापेक्षयाऽर्थाध्याहार एव लाघवमामनन्ति' इति ग्रन्थेन समभिरूढनयमतेऽर्थाध्याहारस्यैव युक्तत्वमावेदितं तदपि न युक्तमित्याह– अर्थाध्याहारपक्षोऽप्ययुक्त एवेति। कथमयुक्त इत्यपेक्षायां तत्र हेतुमुपदर्शयति– विमत– इति– 'द्वारकर्मकपिधानक्रियाकर्तृविषयकशाब्दबोध. पदजन्यद्वारकर्मत्वोपस्थितिजन्य एव, पदाजन्यद्वारकर्मत्वोपस्थितिजन्योऽपि' इत्येवं विप्रतिपत्तिविषयः, द्वारकर्मकपिधानक्रियाकर्तृविषयक शाब्दबोध इत्यर्थः। सम्प्रतिपन्नवदिति– यथा वादि-प्रतिवाद्युभयसम्मतो 'द्वार पिधेहि' इति वाक्यजन्यो द्वारकर्मकपिधानक्रियाकर्तृबोधस्तथेत्यर्थः। पिधेहीत्यत्रेति– यत्र 'पिधेहि' इत्येतावन्मात्रमुक्त न तु द्वार तत्रेत्यर्थ। पदाध्याहारस्यावश्यकत्वे युक्त्यन्तरमाह– किञ्चेति। तथैव- विभक्तिविशेषसमभिव्याहारत एव। 'एव' इत्यस्य स्थाने 'पद एवाकाङ्क्षा,' इति पाठः सम्यग्, 'पदार्थो न शाब्दः' इत्यस्य स्थाने 'पदार्थो न शब्द.' इति पाठो युक्त। तदंश एव पदार्थांश एव, एवं च पदाध्याहारपक्षे प्रथम पदज्ञान तत पदार्थोपस्थितिस्तत. शाब्दबोध., अर्थाध्याहारपक्षे तु प्रथमत एवपदार्थोपस्थितिस्ततः शाब्दबोध इत्यर्थाध्याहारापेक्षया पदाध्याहारे गौरवमिति यत् पराभिप्रेतं तत्राह– गौरवस्येति– अप्रामाणिकमेव गौरवं दोषाय न तु प्रामाणिकम्, प्रकृते तु पदाध्याहाराभावे अर्थे आकाङ्क्षाऽभावादेव न तत. शाब्दबोध इति शाब्दबोधानुरोधेन पदाध्याहार आवश्यक इति पदाध्याहारे गौरवस्य प्रामाणिकत्वे सुव्यवस्थिते यावदन्वयप्रतियोगिनामुपस्थितेः शब्दजन्यत्वस्य शाब्दबोधे प्रयोजकत्वादित्यर्थ.। पङ्कजपदस्य समुदायशक्तिमसहमान पर. शङ्कते– स्यादेतदिति। पङ्कजशब्देन पदार्थज्ञानं कीदृश जायते इति पृच्छायामुत्तरमाशङ्कते– पद्ममिति। आशङ्कितमुत्तरं विकल्प्यापहस्तयति– तदिति– 'पद्म पङ्कजनिकर्तृ' इत्याकारक ज्ञानमित्यर्थ.। नाद्य इति– 'पङ्कजनिकर्तृ पद्मम्' इत्याकारकमनुभवरूप ज्ञान पङ्कजपदेन जायत इति प्रथमकल्पो न समीचीन इत्यर्थ.। निषेधहेतु सामग्रीविरोधादित्युपपादयति– पङ्कजनीति– पङ्कजनिकर्तृत्वं पङ्कजशब्देनावयवशक्त्या प्रतिपाद्यते, तत्र पङ्कपदेन पङ्करूपार्थस्योपस्थितिः, जपदेन जनिकर्तुरुपस्थितिरित्युपस्थितिद्वयेन पङ्कजनिकर्तुरवगतिरिति पङ्कजशब्दो वाक्यविधयैव पङ्कजनिकर्तुरवबोधक इति पङ्कजनिकर्तृज्ञानं शाब्दबोधात्मकानुभव एव, न तु स्मरणमिति पङ्कजनिकर्तृत्वांशेऽनुभवसामग्रीत्यर्थ.। पद्मांश इति– पद्मे पङ्कजपदं रूढत्वात्

कार्यं जनयेताम् ? न द्वितीयः–उपपद-धातु-प्रत्ययप्रत्येकसङ्केतप्रतिसन्धानजस्मरणानि(नां) समुदायार्थ-स्मृतिकालेऽसत्त्वादुत्तरोत्तरेण पूर्वपूर्वनाशात्, न च प्रत्येकस्मरणजन्यसंस्कारसमुदायात् पङ्क-जनिकर्तृत्व-पद्मत्वानामेकमेव समूहालम्बनं स्मरणं कार्यदर्शनात् कल्प्यत इत्यपि युक्तम्, एवमपि हि पङ्कज-निकर्तृ-पद्मानयनान्वयः प्रत्येकं स्यात्, न तु विशिष्टवैशिष्ट्येन; किञ्च, द्वयेनान्वये वाक्यभेदप्रसङ्गः कथङ्कारं वारणीयः ? कथं वा न गवादिपदेऽपि योगरूढिः ? को हि " गमेर्डो " [ पा० उणा० २२५ ] " सप्तम्यां जनेर्डः " [ पा० ३. २. ९७. ] इत्यनयोर्विशेषः ? अनुशासनावधृतविभागप्रकृति-प्रत्ययशक्ति-भिरुभयत्र योगरूढेरेव सम्भवादिति, उ(अत्रो)च्यते–' पङ्कजमानय ' इति वाक्यात् पङ्कजनिकर्तारं पद्मं समानयेति प्रतीतेः पङ्कजपदेन प्रत्येक-समुदायशक्तिप्रतिसन्धानसहकारिवशाद् मिलितगोचरमेकमेव

पदरूपमेव, न तु वाक्यरूपमतः पङ्कजपदात् पद्मरूपार्थस्य स्मरणमेव, न त्वनुभव इति पद्मांशे स्मरणसामग्री, न त्वनु-भवसामग्रीत्यर्थः । ते च निरुक्तानुभवसामग्रीनिरुक्तस्मरणसामग्र्यौ च, अनुभवसामग्री अनुभव जनयति, स्मरणसामग्री स्मरणं जनयति; अनुभवत्वस्मरणत्वयोश्च विरोधान्नैक ज्ञानमनुभवस्मरणात्मकं संभवतीति निरुक्तसामाग्र्यौ मिलिते अपि नैक कार्यं कर्तुमर्हत इति कथमेकं ज्ञान निरुक्तसामग्र्यौ जनयेतामित्यर्थ । पङ्कजपदेन ' पङ्कजनिकर्तृ पद्मम् ' इत्या-कारक ज्ञान स्मरणरूपमुपजायत इति द्वितीयपक्षोऽपि न समीचीन इत्याह–**न द्वितीय** इति । निषेधे हेतुमाह–**उपपदे**ति–पङ्कजशब्दे पङ्कपदमुपपद तस्य कर्दमरूपार्थे सङ्केतः, जन्धातुस्तस्योत्पत्तौ सङ्केतः, डप्रत्ययस्तस्य कर्तरि सङ्केत इति निरुक्तपदत्रयसङ्केतप्रतिसन्धानानि क्रमिकाणि, तेभ्यो जायमानानि कर्दमादिरूपार्थस्मरणान्यपि क्रमिकाणि, तेषां चैकदा पङ्कजनिकर्तृपद्मात्मकसमुदायार्थस्मृतिकालेऽसत्त्वाज्जन्धात्वर्थोत्पत्तिस्मरणसमये जन्धातुसङ्केतस्मरणेनोपपदपङ्कार्थ-कर्दमस्मरणस्य डप्रत्ययार्थकर्तृस्मरणसमये डप्रत्ययसङ्केतप्रतिसन्धानेन धात्वर्थोत्पत्तिस्मरणस्य च विनाशान्न पङ्कजनिकर्तृ-पद्मरूपसमुदायार्थस्मरणं संभवतीत्यर्थः । ननु उपपदादिप्रत्येकपदसङ्केतप्रतिसन्धानप्रभवक्रमिकस्मृतिभ्य. पङ्कजेत्यखण्डपद-समुदायसङ्केतप्रतिसन्धानप्रभवपद्मरूपार्थस्मृत्या च प्रत्येक क्रमिकाः स्वसमानविषयकाः संस्काराः समुत्पन्नास्तेषां च युगपत् सद्भावात् तत्समुदायेनैककालवर्तिना पङ्कजनिकर्तृपद्मरूपार्थस्मरण समूहालम्बन भविष्यतीत्याशङ्क्य प्रतिक्षिपति–**न चे**ति–अस्य ' युक्तम् ' इत्यनेनान्वयः । **कार्यदर्शनादि**ति–यदि तत्तदर्थस्मरणप्रभवसंस्कारसमुदायो न भवेन्न पङ्कजनिकर्तृपद्मानां समूहालम्बनात्मकस्मरणमुपलभ्येतेति तादृशसमूहालम्बनस्मरणरूपकार्यदर्शनादेव कल्प्यत इत्यर्थः । भवतूक्तदिशा पङ्क-जनि-कर्तृ-पद्मत्वाना समूहालम्बनस्मरणं तथाप्यानयनरूपपदार्थान्तरेण सम स्मृताना तेषा प्रत्येकमेवान्वयः, यद्रूपेणैकपदार्थस्मरण तद्रूपेणैव तस्यापरपदार्थेन समन्वय इति नियमात्, पङ्कपदार्थस्य कर्दमस्य धात्वर्थजनने तस्य च प्रत्ययार्थकर्तरि तस्य च समुदायार्थपद्मेऽन्वयतो नियमतो निष्पन्नस्य पङ्कजनिकर्तृपद्मरूपार्थस्य विशिष्टस्यानयनरूपपदार्थान्तरेण समन्वयः स्यात्, पङ्कजनिकर्तृपद्मत्वेन रूपेण निरुक्तविशिष्टरूपार्थस्य पदादनुपस्थितेरिति निषेधहेतुमुपदर्शयति–**एवमपी**ति–निरुक्तसंस्कार-समुदायाज्जिदक्तार्थानां समूहालम्बनैकस्मरणसम्भवेऽपीत्यर्थ. । पङ्कजपदस्यावयवशक्तिसमुदायशक्त्योरुपगमे दोषान्तरमुपदर्शयति–**किञ्चे**ति । **द्वयेने**ति–' पङ्कजमानय ' इत्यत्रानयनरूपपदान्तरार्थस्य पङ्कजनिकर्तृरूपावयवार्थेन पद्मरूपसमुदायार्थेन च समन्वये द्वितीयाविभक्त्यर्थकर्मत्वं मध्ये सन्निवेश्य तद्द्वारा स्वीक्रियमाणे पङ्कजनिकर्तृकर्मकानयनबोध पद्मकर्मकानयन-बोधश्च ततो भवेदिति साक्षात् परम्परया परस्परानन्वितविभिन्नार्थबोधकत्वलक्षणवाक्यभेदात्मकदोषोऽत्र भवन् कथङ्कारं वारणीय. ? न कथञ्चित् स वारयितुं शक्य इत्यर्थः । यथा च पङ्कजपदेऽवयवशक्ति-समुदायशक्त्योः सद्भावाद् योगरूढिस्तथा गवादिपदेऽपि तयोः सद्भावाद् योगरूढि किं न भवद्भिरुपेयते ? इत्याह–**कथं वे**ति–गमनार्थकगमिधातोर्डोप्रत्यये सति गौरिति पदं निष्पद्यते, तत्र गमिधातोर्गमनमर्थः, डोप्रत्ययस्य च कर्ताऽर्थः, तथा च गमनकर्ताऽवयवशक्त्याऽर्थः समुदा-यशक्त्या गोत्ववानर्थ, एवं च गमनकर्ता गौरिति गोशब्दार्थ., पङ्कजपदेऽपि पङ्कपदार्थः कर्दमः जनिधातोर्जननमर्थः, डप्रत्ययस्य कर्ताऽर्थ., समुदायशक्त्या च पद्ममर्थ इति पङ्कजनिकर्तृ पद्ममित्यर्थः पङ्कजपदस्य, इत्थं चानयोर्न कश्चिद् विशेष इति गवादिपदं रूढमेव पङ्कजादिपद योगरूढमिति विभागकल्पना नैयायिकाना दुष्कल्पनैवेत्याह– **को ही**ति । **अनयोः** गोपिधायक-प्रविभागकयो । अत्र उक्ताशङ्कानाम् । उच्यते प्रतिविधानं कथ्यते । **मिलितगोचरं** पङ्कजनिकर्तृ–

स्मरणं जन्यते, तत्रासत्तिवशेन 'विशेष्ये विशेषणम्' इति रीत्या पङ्कजनिकर्तृत्व-पद्मत्वविशिष्टानयन-स्यैकदैवान्वयबोधः, यद्वा पङ्क-जनि-कर्तृत्वादीनां प्रत्येकपदोपस्थितानां प्रथमस्तावदन्वयबोधस्तदनन्तरं तेन समं पद्मत्वस्यानन्तरमानयनान्वय इत्याद्यूह्यम्; न चैकस्य पङ्कजपदस्य पद-वाक्यभावविरोधः, समुदायापेक्षया पदत्वम्, अवयवापेक्षया च वाक्यत्वमित्येवमविरोधात्; न च गवादिपदेऽपि योगरूढेः(ढिः), 'डो' प्रत्यये शक्त्यवधारकाभावान्नियतैकप्रकृतिकत्वेनावापोद्वापकल्पनासम्भवात्, अनुशासनं तु रेखा-गवयेन सत्यगवयज्ञानवत् साधुत्वाद् व्याख्यानमात्रपरम्; न च वेन्वादिपदेऽप्येवं स्यात्, जानु-दानु-

पद्मद्वयविषयकम्। भवतु मिलितविषयकमेकं स्मरणं योगरूढिप्रतिसन्धानलक्षणसहकारिसहकृतात् पङ्कजपदादेवमपि कथमेकदैव पङ्कजनिकर्तृत्वविशिष्टपद्मान्वयबोध इत्यपेक्षायामाह–तत्रेति–मिलितगोचरैकस्मरणे सतीत्यर्थः। **आसत्तिवशेन** पङ्कजेत्येकपदोपस्थाप्यत्वलक्षणासत्तिबलेन। **विशेष्य** इति–विशेष्ये आनयने कर्मताद्वारा पद्मस्य तत्र कर्तुस्तत्र जनेस्तत्र पङ्कजस्यान्वय इत्येव 'विशेष्ये विशेषणं तत्रापि विशेषणान्तरम्' इति रीत्या पङ्कजनिकर्तृत्वविशिष्टपद्मत्वविशिष्टानयन-स्यैकदैवान्वयबोधः सम्भवति, यतो विशिष्टवैशिष्ट्यबोध एव विशेषणतावच्छेदकप्रकारकनिश्चयस्य कारणत्वम्, प्रकृतान्वय-बोधोऽपि यदि विशिष्टवैशिष्ट्यावगाहिबोधः स्यात् तदा विशेषणतावच्छेदकप्रकारकनिश्चयस्य तत्र कारणत्वे भवेदिति पङ्क-जनिकर्तृत्वविशिष्टपद्मत्वलक्षणविशेषणतावच्छेदकप्रकारकनिश्चयो निरुक्तपद्मत्वप्रकारकस्मरणरूप इति निरुक्तपद्मत्वविशिष्टे पङ्कजपदसङ्केतप्रतिसन्धानाभावान्निरुक्तपद्मत्वप्रकारकस्मरणाभावे निरुक्तशाब्दबोधो न भवेदपि, 'विशेष्ये विशेषणम्' इति रीत्या निरुक्तबोधाभ्युपगमे तु स बोध उपलक्षितवैशिष्ट्यावगाह्येव, तत्र च न विशेषणतावच्छेदकप्रकारकनिश्चयस्य कारणत्वं किन्तु विशिष्टबुद्धिरूपं तं प्रति विशेषणज्ञानमेव कारणम्, मिलितगोचरमेकं स्मरणं च विशेषणज्ञानं भवत्येवेति तत उक्तरीत्याऽन्वयबोधः स्यादेवेत्यर्थः। अथवा पङ्कजपदसन्निविष्टानामुपपद-धातु-प्रत्ययपदानां प्रत्येकशक्त्योपस्थितानां पङ्क-जनि-कर्तृत्वानां प्रथमं पङ्कजनिकर्तेत्येवमन्वयबोधस्तदनन्तरं समुदायशक्त्योपस्थितेन पद्मत्वविशिष्टेन समं पङ्कजनिकर्तुरभेदेनान्वय-बोधस्तदनन्तरं पङ्कजनिकर्तृत्वविशिष्टपद्मस्य कर्मत्वरूपद्वितीयार्थद्वाराऽऽनयनान्वयबोध इत्येवमभ्युपगमेऽपि न किञ्चिदनुपपन्न-मित्याह–यद्वेति। **तेन समं** पङ्कजनिकर्तृत्वविशिष्टेन समम्। '**पद्मत्वस्य**' इत्यनन्तरम् 'अन्वयबोध' इत्यस्यानुकर्षेण सम्बन्धः। '**आनयनान्वयः**' इत्यस्य पद्मत्वविशिष्टस्य कर्मत्वद्वाराऽऽनयनेन सममन्वयबोध इत्यर्थ.। नन्वेकस्यैव पङ्कजपदस्योपपद-धातु-प्रत्ययैः प्रत्येकं स्वस्वशक्त्युपस्थितार्थानामन्वयबोधजनकत्वेन वाक्यत्वं समुदायशक्त्या च पद्मरूपै-कार्थोपस्थितिमात्रजनकत्वेन पदत्वमित्येवं पदत्व-वाक्यत्वयोरेकस्मिन् समावेशो विरोधान्न सम्भवतीत्याशङ्क्य प्रतिक्षिपति–**न चेति**। पदत्व-वाक्यत्वयोरेकापेक्षयैकत्रावृत्तित्वमेव विरोधो न त्वपेक्षाविनिर्मोकेणैकत्रावृत्तित्वम्, पङ्कजपदे च समुदाया-पेक्षया पदत्वमवयवापेक्षया च वाक्यत्वमित्येकापेक्षयैकत्रावृत्तित्वलक्षणस्य विरोधस्यापेक्षाभेदेनैकत्र सत्त्वेऽपि न हानिरिति निषेधहेतुमुपदर्शयति–**समुदायापेक्षये**ति। ननु गोपदेऽपि गमिधातु-डोप्रत्ययाभ्यां गमनकर्तृत्वान्वयबोधकत्वस्य समुदाय-शक्त्या गोरूपार्थोपस्थितिजनकत्वस्य च सम्भवेन योगरूढिः स्यादित्याशङ्क्य प्रतिक्षिपति–**न चेति**। निषेधे हेतुमाह–**डोप्रत्यय** इति–डोप्रत्ययस्य कर्तरि शक्तिरित्येवं निश्चयकारणं नास्ति, 'गमेर्डो' [पा० उणा० २२५] इत्यनेन गमिधातुत एव डोप्रत्ययस्य विधानमिति नियतैकप्रकृतिकत्वेन गोपदसाधुत्वार्थमेव डोप्रत्ययविधानम्, न तु डोप्रत्ययसद्भावे गमनकर्तृ-रूपार्थप्रत्ययभावः, डोप्रत्ययभावे गमनकर्तृरूपार्थप्रत्ययाभाव इत्येवमन्वय-व्यतिरेकलक्षणावापोद्वापकल्पनायाः शक्तिग्राहिकाया अभावात्, यतः पदे गमिधातुर्नास्ति, अथ च डोप्रत्यय इत्येव गमिधातोरभावे डोप्रत्ययसद्भावे गमनातिरिक्तार्थकर्तृत्वाव-बोधस्यादर्शनेन डोप्रत्यये कर्तृत्वे शक्त्यवधारणासम्भवादित्यर्थः। यदि डोप्रत्ययस्य न कर्तृत्वरूपार्थे शक्तिः, तर्हि किमर्थं गमिधातुतो डोप्रत्ययविधानमित्यपेक्षायामाह–**अनुशासनं** त्विति–गवयानभिज्ञस्य सत्यगवयस्वरूपावगतये यथा गवयाकृतिं रेखया दर्शयति ततो रेखागवयेन सत्यगवयस्वरूपमवगच्छति पुरुषस्तथा गमिधातुतो डोप्रत्ययविधानतो गोपदसाधुत्वमात्रा-वगतिर्भवति, तदर्थमेव तु "गमेर्डो" इति गौरिति व्याख्यानमात्रम्, अर्थाद् धातुप्रत्ययार्थसमाश्रयणेन गौरित्यस्य गच्छतीति गौरिति व्याख्यानमात्रपरं प्रकृतिप्रत्ययविभागसमाश्रयणम्, न तु वस्तुगत्या गमनकर्तेति गोपदात् प्रतीयते,

शानु-शब्दादावावापोद्वापक्रमेण तत्र शक्तिः कल्प्या, तद्वरं रूढिरेव, नहि धेन्वादिपदे योगरूढिरिति गौतमवचनमस्ति, येन योगत्यागेऽपसिद्धान्तः स्याद् ” इति ।

व्यवहारनयानुसारिणस्तु–“ पङ्कजादिपदेऽपि रूढिरेव, व्युत्पत्तेः सर्वत्र साधुत्वार्थत्वात्, अत एव योगत्यागेन स्थलपद्मे पङ्कजपदस्य(प्रयोगः) ” इत्याहुः ।

वयं तु ब्रूमः–व्युत्पत्तिरहितत्वं रूढित्वम्, व्युत्पत्तिसहिष्णुत्वं यौगिकत्वम्, तदसहिष्णुत्वं च मिश्रत्वम्, इति पदानां यौगिकादिविभागः पारिभाषिक एव, परमार्थतस्तु योग-रूढिनययोः स्वस्वजन्यशाब्दबोधे मिथः प्रतिबन्धकत्वेन ‘ स्याद् यौगिक एव शब्दः, स्याद्रूढ एव ’ इत्यादिरीत्या सप्तभङ्गीप्रवृत्तिरेव युक्ता, नयद्वयजन्याकाङ्क्षयोः सप्तभङ्ग्युत्थापकत्वस्य सर्वसिद्धत्वात्, अत एवावयव-समुदायशक्तिभ्यां बोधकत्वम्; पङ्कजादिपदे योगरूढित्वमिति न्यायनयैकान्तो न युक्तः, तन्नये नाम-धात्वोः सम्भूयार्थबोधकत्वेन तयोस्तात्पर्यग्राहकतायाः, ‘ड’प्रत्ययस्यैव च पङ्कजनिकर्तरि लक्षणायाः स्वीकारात्, न

लौकिक-परीक्षकाभ्यां गौरित्यनेन गोत्वविशिष्ट एवार्थः प्रतीतिगोचरीक्रियत इति । नन्वेवं धेन्वादिपदस्यापि गोत्वविशिष्ट एव रूढिः स्यान्न तु धानकर्मत्वविशिष्टे योगोऽपीत्याशङ्कामिष्टापत्त्या परिहरति–न चेति । एवं स्यात् गवादिपदवद्रूढिरेव स्यान्न तु योगोऽपि । अत्रेष्टापत्तिरेव निषेधहेतुरित्याह–जान्विति–जान्वादिपदे नुशब्दसत्त्वेऽपि धेशब्दासत्त्वे धानकर्मत्वं न प्रतीयते, तत्रैव जादिस्थाने धेशब्दोपादाने धानकर्मत्वं प्रतीयते इत्यन्वय-व्यतिरेकलक्षणावापोद्वापाभ्यां धानकर्मत्वविशिष्टे धेनुपदस्यावयवशक्तिः प्रकल्पनीया, तदपेक्षया गोत्वविशिष्टे समुदायशक्तिमात्रमेव तस्य वरमित्यर्थः, यथा च पङ्कजादिपदं योगरूढमिति नैयायिकवृद्धानामनुशासनं नैव धेन्वादिपदं योगरूढमित्यनुशासनं तेषां समस्ति यद्बलाद्योगरूढिरपि तस्याभ्युपेया स्यादित्याह–नहीति । कस्यचिन्नव्यनैयायिकस्य धेन्वादिपदे योगरूढोक्तिर्न न्यायदर्शनसिद्धान्तो येन तस्य योगत्यागेऽपसिद्धान्तो भवेत्, न्यायदर्शनप्रणेतुर्महर्षेर्गौतमस्यैव वचनं न्यायसिद्धान्तः, न च धेन्वादिपदं योगरूढमिति गौतमवचनमस्तीति योगपरित्यागेऽप्यपसिद्धान्तो नात्र पदं धत्ते इत्यावेदनाय ‘ गौतमवचनम् ’ इत्युक्तिः ।

पङ्कजपदं योगरूढमित्यभ्युपगच्छतां नैगमनयानुसारिणां नैयायिकानां मतमुपदर्श्य पङ्कजादिपदं रूढमेवेत्यभ्युपगन्तॄणां व्यवहारनयानुसारिणां मतमुपदर्शयति–व्यवहारनयानुसारिणस्त्विति–अस्य ‘ आहुः ’ इत्यनेन सम्बन्धः । ननु पङ्कजपदे रूढिरेव चेत् पङ्काज्जायत इति पङ्कजमिति व्युत्पत्तिरनर्थिका स्यादित्यत आह–व्युत्पत्तेरिति–यथा गच्छतीति गौरित्येवं गवादिपदव्युत्पत्तिर्गौरित्यादिपदस्य साधुत्वार्थिका न तु ततो गमनकर्त्राद्यर्थः परिकल्प्यते एवं पङ्कजादिपदेऽप्यर्थः । अत एव ‘पङ्काज्जायते इति व्युत्पत्तिः साधुत्वार्थिकैव, न त्ववयवार्थबोधिकेत्यभ्युपगमादेव, अन्यत् सुगमम् ।

अत्र जैनानां सिद्धान्तं ग्रन्थकृदावेदयति–वयं तु ब्रूम इति । ‘ तदसहिष्णुत्वं च ’इति स्थाने ‘ तत्सहिष्णुत्वे सति तदसहिष्णुत्वं च ’ इति पाठो युक्तः । ‘ रूढित्वम् ’ इत्यत्र रूढत्वमिति पाठः सम्यग् । मिश्रत्वं योगरूढत्वम्, तथा च व्युत्पत्तिसहितत्वे सति व्युत्पत्तिरहितत्वं योगरूढत्वमित्यर्थः । इति एवंप्रकारेण । पारिभाषिक एव स्वेच्छाकल्पित एव । नहि कोऽत्र वास्तविक इत्यपेक्षायामाह–परमार्थतस्त्विति । योग-रूढिनययोः अवयवशक्त्यभ्युपगन्तृ-समुदायशक्त्यभ्युपगन्तृनययोः । स्वस्वेति–अवयवशक्त्यभ्युपगन्तृनयस्य समुदायशक्तिमात्रजन्यशाब्दबोधे प्रतिबन्धकत्वेन समुदायशक्त्यभ्युपगन्तृनयस्यावयवशक्तिमात्रजन्यशाब्दबोधे प्रतिबन्धकत्वेन च यौगिक एव शब्दो रूढ एव च शब्द इत्येवमेकान्तवचनप्रवृत्तिर्न सम्भवति, किन्तु स्याद् यौगिक एव शब्दः १ स्याद्रूढ एव शब्दः २ स्याद् यौगिक एव स्याद्रूढ एव च शब्दः ३ स्यादवक्तव्य एव शब्दः ४ स्याद् यौगिक एव स्यादवक्तव्य एव च शब्दः ५ स्याद्रूढ एव स्यादवक्तव्य एव च शब्दः ६ स्याद् यौगिक एव स्याद्रूढ एव स्यादवक्तव्य एव च शब्दः ७ इत्येवं सप्तभङ्गीवचनप्रवृत्तिरेव युक्तेत्यर्थः । कथमित्थमत्र सप्तभङ्गीप्रवृत्तिरित्यपेक्षायामाह–नयद्वयेति–योगाभ्युपगन्तृनयरूढ्यभ्युपगन्तृनयद्वयेत्यर्थः । अत एव नयद्वयजन्याकाङ्क्षयोः सप्तभङ्ग्युत्थापकत्वादेव । ‘ योगरूढित्वमिति ’ इति स्थाने ‘ योगरूढत्वमिति ’ इति पाठो

चावयवद्योत्य-समुदायशक्यार्थबोधकत्वेन तथात्वं युक्तम्, एवं सति 'प्रजयति' इत्यत्र प्रोत्तरजित्वेन प्रकृष्टजय इव पङ्कजपदोत्तर'ड'प्रत्ययत्वेन पङ्कजनिकर्तृपद्म एव निरूढलक्षणासम्भवे समुदायशक्तौ मानाभावाद्, अनन्यलभ्यस्यैव शब्दार्थत्वाद्, अन्यथा समासे न शक्तिरिति मतभङ्गप्रसङ्गात्, न चेदेवं राजवाचके भूधनादिशब्दे भूधनवति लक्षणया यौगिके राजत्वेन पृथग् बोधकतया योगरूढत्वप्रसङ्गः कथङ्कारं वारणीयः, विशिष्टरूढ्येकान्तनयो विशिष्टयोगैकान्तनयो वा तत्र समानप्रसर इति तयोर्महायोधयोरिव युद्धं वारयितुं स्याद्वादमहाराजं विना कोऽन्यः समर्थ इति विभावनीयम् ।

एतेन योगार्थस्य नियमतोऽभानप्रसङ्गेन मीमांसकनयैकान्तोऽपि निरस्त; इति नययोजनयैव सर्वा शाब्दी प्रक्रियाऽनाविला ॥ ३९ ॥

युक्त । न्यायनयैकान्ताभ्युपगमस्यायुक्तत्वे हेतुमाह- **तन्नय** इति- न्यायनये इत्यर्थः । **नाम-धात्वोः** पङ्कनाम जनिधात्वोः । **सम्भूयाबोधकत्वेन** मिलित्वाऽर्थबोधकत्वाभावेन, पङ्केति नाम कर्दमरूपार्थं बोधयति, जनिधातुश्चोत्पत्तिरूपार्थं बोधयति, न तु मिलितयोस्तयोः पङ्कविशिष्टोत्पत्तिरूपार्थबोधकत्व नामार्थ-धात्वर्थयोरभेदातिरिक्तसम्बन्धेनान्वयस्याव्युत्पन्नत्वात्, प्रकृते च पङ्कपदार्थस्य नाभेदसम्बन्धो जनिधात्वर्थोत्पत्तौ घटतेऽतो जन्यजनकभाव एव सम्बन्धः, स च व्युत्पत्तिविरोधान्न शाब्दे भासितुमर्हतीति । **तयो** नाम-धात्वो. । **तात्पर्यग्राहकतायाः** पङ्कोपपदकजनिधातूत्तरडप्रत्ययस्य पङ्कजनिकर्तृरूपार्थे यत् तात्पर्यं तद्ग्राहकतायाः, अस्य '**स्वीकाराद्**' इत्यनेनान्वयः, कर्तृरूपार्थे डप्रत्ययविधानं न तु पङ्कजनिकर्तृरूपार्थे इति डप्रत्ययस्य न पङ्कजनिकर्तरि शक्तिः किन्तु तस्य तत्र लक्षणैवेति डप्रत्ययस्य पङ्कजनिकर्तरि लक्षणायाः स्वीकारादित्यर्थः । '**न च**' इत्यस्य 'युक्तम्' इत्यनेनान्वयः । **अवयवद्योत्ये**ति- नाम-धातु-प्रत्ययलक्षणावयवद्योत्येत्यर्थः । **समुदायशक्त्या** उपपद-धातु-प्रत्ययनिष्पन्नपङ्कजपदशक्त्या, **शक्ये**ति पाठे अवयवद्योत्यो य. समुदायशक्यार्थस्तद्बोधकत्वेनेत्यर्थोऽत्र ग्राह्य. । **तथात्वं** पङ्कजपदस्य योगरूढत्वम् । युक्तत्वनिषेधे हेतुमाह- **एवं सती**ति- अवयवानां द्योतकत्वं समुदायस्यार्थबोधकत्वमित्यभ्युपगमे सतीत्यर्थः । **प्रकृष्टजय इ**वेति- प्रकृष्टजयरूपार्थे प्रइत्युपसर्गोत्तरजित्वेन जयार्थकजिधातोर्यथा लक्षणा तथेत्यर्थः । ननु पङ्कजनिकर्तृपद्मरूपार्थप्रतीतिरेव समुदायशक्तौ मानमित्यत आह- **अनन्यलभ्यस्यैवे**ति, **शब्दार्थत्वात्** शब्दशक्यार्थत्वात्, तेन लक्षणया लक्ष्यस्य शब्दजन्योपस्थितिविषयत्वलक्षणशब्दार्थत्वेऽपि न क्षतिः, यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदाद् गङ्गातीररूपार्थप्रतीतावपि न गङ्गापदस्य गङ्गातीररूपार्थे शक्ति, गङ्गातीररूपार्थस्य तत्र लक्षणयैवावगतिसम्भवेन तस्य शक्तिभिन्नलक्षणालभ्यत्वेनानन्यलभ्यत्वाभावात्, तथा प्रकृतेऽपि पङ्कजनिकर्तृपद्मरूपार्थस्य शक्तिभिन्नलक्षणया प्रतीतिसम्भवेनान्यलभ्यस्य तस्यानन्यलभ्यत्वाभावेन पङ्कजपदशक्यार्थत्वाभावेन न पङ्कजपदस्य समुदायशक्तिरित्यर्थः । **अन्यथा** अन्यलभ्येऽपि समुदायशक्तेरभ्युपगमे । **समास** इति- समासघटकप्रत्येकपदकलृप्तशक्त्यैव समासप्रतिपाद्यार्थस्यावगतिसम्भवात् समासे न शक्तिरिति नैयायिकमतस्य भङ्गप्रसङ्गात्, तथा च समासशक्त्यभ्युपगन्तारो वैयाकरणा एव विजयेरन्नित्याशयः । लक्षणया निर्वाहे सत्यपि पङ्कजपदस्य योगरूढत्वाभ्युपगमे भूर्धनं यस्य स भूधन इत्येव व्युत्पन्नस्य भूधनशब्दस्य भूस्वामिराजरूपार्थकत्वतो योगरूढत्वं प्रसज्यत इत्याह- **न चेदेवमि**ति- उक्तदिशोपपादितमर्थं नाभ्युपैति यदा तदेत्यर्थः । **राजत्वेन पृथग्बोधकतया** राजत्वेन राजनि भूधनपदस्य समुदायशक्तिरित्युपगमतो राजत्वेन राजरूपार्थस्य भूधनवद्रूपार्थत पृथग्बोधकतयेत्यर्थः । **कथङ्कारं वारणीयः?** न कथञ्चिद्वारयितु शक्यः । **विशिष्टरूढ्येकान्तनयः** पङ्कजपदस्य पङ्कजनिकर्तृत्वविशिष्टपद्मे रूढिरेवेत्येकान्ताभ्युपगन्तृनय । **विशिष्टयोगैकान्तनयः** पङ्कजनिकर्तृत्वविशिष्टपद्मेऽवयवशक्तिरेवेत्येकान्ताभ्युपगन्तृनय. । **तत्र** पङ्कजपदे । **समानप्रसरः** तुल्ययुक्त्योपपादयितु शक्यः । **इति** एतस्मात् कारणात् । **तयोः** विशिष्टरूढ्येकान्तनय-विशिष्टयोगैकान्तनययोः, अस्य 'युद्धम्' इत्यनेनान्वय. । अत्र दृष्टान्तमाह- **महायोधयोरिवे**ति- यथा महायोधयोर्मल्ल-प्रतिमल्लभावेन युद्ध कुर्वतोः सामन्त-महीपत्योर्युद्धं वारयितु तदधिकशक्तिमान् महाराज एव प्रभुस्त विनाऽन्यो न तयोर्युद्धं वारयितु समर्थस्तथा प्रकृतेऽपि निरुक्तनययोरन्योऽन्यमतखण्डनलक्षणयुद्धं वारयितु 'स्याद् यौगिक एव शब्द., स्याद्रूढ एव शब्दः' इत्यादिसप्तभङ्गीलक्षणस्याद्वादमहाराज एव समर्थो न तु तदन्यः कश्चित् समर्थ इत्यर्थः ।

तदेवं नयमतस्य विचित्रत्वात् प्रसिद्धधात्वर्थपुरस्कारेणैवम्भूतनयप्रवृत्तिरिति व्यवस्थापितम्, एवं च सति यत् सिद्धं तदाह—

**सिद्धो न तन्मते जीवः, प्रोक्तः सत्त्वादिसंज्ञ्यपि ।**
**महाभाष्ये च तत्त्वार्थभाष्ये धात्वर्थबाधतः ॥ ४० ॥**

**नयामृत०**—सिद्ध इति । तन्मते- एवम्भूतनयमते, सत्त्वादिसंज्ञ्यपि- 'सत्तायोगात् सत्त्वः, अतति स्वान् पर्यायानित्यात्मा' इत्यादिसंज्ञाधार्यपि, सिद्धो महाभाष्ये- विशेषावश्यके, तत्त्वार्थभाष्ये च, धात्वर्थबाधतो- 'जीव प्राणधारणे' इति धात्वर्थानन्वयाज्जीवो न प्रोक्तः, तथा च विशेषावश्यक-वचनम्- "एवं जीवं जीवो संसारी पाणधारणानुभवो । सिद्धो पुणो अजीवो जीवणपरिणामरहिउ त्ति" [ विशेषावश्यकभाष्यगाथा-२२५६ ] ॥ ४० ॥

एतदेव तत्त्वार्थवचनमनूद्य व्यवस्थापयति—

**जीवोऽजीवश्च नोजीवो, नोअजीव इतीहिते ।**
**जीवः पञ्चस्वपि गतिष्विष्टो भावैर्हि पञ्चभिः ॥ ४१ ॥**

**नयामृत०**—जीव इति । जीवोऽजीवो नोजीवो नोअजीवश्चेति चतुर्भिः समैः पदैः कोऽर्थः प्रतिपाद्य इति ईहिते- प्रश्नयोग्यविचारविषयीकृते, सिद्धान्तिना गतिमार्गणायां पञ्चस्वपि गतिषु- नारक-

---

रूढिज्ञानस्य योगार्थभानप्रतिबन्धकत्वमिति मीमांसकमतमपि न युक्तम्, तथा सति पङ्कजपदजन्यशाब्दबोधे नियमतः पङ्कजनिकर्तृरूपयोगार्थस्य भानं न स्यात्, 'स्याद् यौगिक एव शब्दः, स्याद्रूढ एव शब्दः' इत्यादिसप्तभङ्गीलक्षण-स्याद्वादजन्यशाब्दबोधे तु कथञ्चिद्योगार्थ कथञ्चिद्रूढ्यर्थयोरुभयोरपि भानस्यानुभवसिद्धत्वादित्याह- **एतेनेति**- स्याद्वादमहा-राजस्य नयद्वययुद्धवारणसमर्थत्वेनेत्यर्थः, अस्य 'निरस्तः' इत्यनेनान्वयः। उपसंहरति- **इतीति**- एवंप्रकारेणेत्यर्थः, **नययोजनयैव** स्यात्पदलाञ्छितनयवाक्यघटितसप्तभङ्गीप्रवृत्तिलक्षणनययोजनयैव ॥ ३९ ॥

चत्वारिंशत्तमपद्यमवतारयति- **तदेवमिति**। '**प्रसिद्धधात्वर्थपुरस्कारेणैवम्भूत**' इति स्थाने 'प्रसिद्धधात्वर्थ-पुरस्कारेणैवैवम्भूत' इति पाठो युक्तः, **व्यवस्थापितमित्यन्तोक्तिः** पूर्वपद्येन सहोत्तरपद्यस्य सङ्गतिप्रदर्शनार्था। **एवं च सति** प्रसिद्धधात्वर्थपुरस्कारेणैवैवम्भूतनयप्रवृत्तिरित्यस्य व्यवस्थापने च सति। "**सिद्धो न तन्मते जीवः**" इति चत्वारिंशत्तमपद्यं विवृणोति- **सिद्ध इतीति**- सत्त्वादिसंज्ञ्यपि सिद्धो धात्वर्थबाधतस्तन्मते न जीव इति महाभाष्ये तत्त्वार्थभाष्ये चोक्त इत्यन्वयः। '**तन्मते**' इत्यस्य '**एवम्भूतनयमते**' इति विवरणम्, एवमग्रेऽपि मूलमुल्लिख्य विवृतम्। सत्त्वसंज्ञाधारी कथं सिद्ध इत्याकाङ्क्षानिवृत्तये उक्तम्- **सत्तायोगादिति**। '**सत्त्वादि**' इत्यादिपदग्राह्यात्म-संज्ञाधारित्वप्रतिपत्तये **अततीत्यादि** तद्व्युत्पत्त्युपदर्शनम्, '**अतति स्वान् पर्यायान्**' इत्यस्य स्थाने 'अतति तांस्तान् पर्यायान्' इति पाठः सम्यग्, तांस्तान् पर्यायानित्यस्य प्रसिद्धान् ज्ञान-दर्शन-सुखादिपर्यायानित्यर्थः, अततीत्यस्य गच्छतीत्यर्थः। सिद्धो जीवो न प्रोक्तः कुत्रेत्यपेक्षायामाह- **महाभाष्य इति**। तस्य विवरणम्- **विशेषावश्यक इति**। '**धात्वर्थबाधतः**' इत्यस्य विवरणम्- "**जीव प्राणधारणे**" **इति धात्वर्थानन्वयादिति**। विशेषावश्यकवचन-मुल्लिखति- **एवमिति**- 'एवं जीवन् जीवः संसारी प्राणधारणानुभवः। सिद्धः पुनर्न जीवो जीवनपरिणामरहित इति" इति संस्कृतम् ॥ ४० ॥

एकचत्वारिंशत्तमपद्यमवतारयति- **एतदेवेति**- जीवनपरिणामरहितत्वात् सिद्धस्याजीवत्वमेवेत्यर्थः, अस्य 'व्यवस्थापयति' इत्यनेनान्वयः। '**जीवोऽजीवश्चेति**' इति पद्यं विवृणोति- **जीव इतीति**। '**ईहिते**' इत्यस्य विवरणम्- '**प्रश्नयोग्य**

तिर्यग्-नरा-ऽमर-सिद्धिगतिलक्षणासु, हि- निश्चितम्, पञ्चभिर्भावैः- औदयिक क्षायिक-क्षायोपशमिकौपशमिक-पारिणामिकलक्षणैः, जीव इष्टः, व्युत्पत्तिनिमित्तजीवनलक्षणौदयिकभावोपलक्षितात्मत्वरूपपारिणामिकभावविशिष्टस्य जीवस्य भावपञ्चकात्मनो जीवपदार्थत्वात्, न चात्मत्वप्रवृत्तिनिमित्तोपादानेनैवानतिप्रसङ्गे किं व्युत्पत्तिनिमित्तोपलक्षणग्रहणेन ? इति वाच्यम्, संभवति तदुपलक्षकभावे तत्त्यागस्यान्याय्यत्वात्, अन्यथा मण्डपा-ऽश्वकर्णादिपदतुल्यताप्रसङ्गादिति दिक् ॥ ४१ ॥

**नञि सर्वनिषेधार्थे पर्युदासे च संश्रिते ।**

**पुद्गलप्रभृति द्रव्यमजीव इति संज्ञितम् ॥ ४२ ॥**

**नयामृत०—**नञीति । सर्वनिषेधार्थे- जीवत्वावच्छिन्नान्योन्याभाववदर्थे, नञि- विवक्षिते,

---

**विचारविषयीकृते**' इति । '**सिद्धान्तिना**' इत्यस्य 'इष्ट.' इत्यनेनान्वयः । **गतिमार्गणायां** कस्या गतौ केन भावेनालिङ्गितो जीव इष्ट इत्यन्वेषणायाम् । **व्युत्पत्तीति**-जीवपदव्युत्पत्तिनिमित्तो यो जीवनलक्षण.-प्राणधारणस्वरूप औदयिकभावस्तेनोपलक्षित:-प्रतियोगिव्यधिकरणतदभावासमानाधिकरणो यदा कदाचित्तेन सममेकाधिकरणवृत्तिर्य आत्मत्वरूपपारिणामिकभावस्तद्विशिष्टस्येत्यर्थ· । **भावपञ्चकात्मन** अनन्तरोपदर्शितौदयिकादिभावपञ्चकस्वरूपस्य, जैनराद्धान्ते धर्मधर्मिणोः कथञ्चित्तादात्म्यमिति भावपञ्चकात्मकत्वं जीवस्य युज्यते, '**न** च' इत्यस्य 'वाच्यम्' इत्येनेनान्वयः । **आत्मत्वेति**- आत्मत्व यज्जीवपदस्य प्रवृत्तिनिमित्तं तदुपादानेनैव-तद्ग्रहणेनैव, अर्थादात्मत्वविशिष्टो जीवपदार्थ इत्युक्त्यैव । **अनतिप्रसङ्गे** आत्मभिन्ने घट-पटादिपदार्थे जीवपदार्थत्वप्रसङ्गाभावे । '**किम्**' इति काकूक्त्येन किञ्चिद् व्युत्पत्तिनिमित्तोपलक्षणग्रहणेनेत्यर्थो लभ्यते, व्युत्पत्तिनिमित्तं यज्जीवपदस्य जीवनं तदात्मकोपलक्षणग्रहणेन न किञ्चित् प्रयोजनमित्यर्थः । निषेधे हेतुमाह-**संभवतीति**-जीवनलक्षणं यदात्मत्वस्योपलक्षक-ज्ञापक तद्भावे सभवति सति, जीवनस्यात्मत्वोपलक्षकत्वे सम्भवतीति यावत्, जीवपदार्थस्वरूपव्यावर्णने **तत्त्यागस्य** जीवनलक्षणव्युत्पत्तिनिमित्तत्यागस्य । **अन्याय्यत्वात्** न्यायापेतत्वात्, यत्रार्थे व्युत्पत्तिनिमित्तधर्मो न घटते तत्र वाधात् तत्परित्यागस्य न्यायादनपेतत्वेऽपि जीवपदार्थे आत्मनि प्राणधारणस्वरूपजीवनस्य घटमानत्वात् तत्त्यागोऽनुचित इत्याशय.। **अन्यथा** व्युत्पत्तिनिमित्तस्य प्रवृत्तिनिमित्तोपलक्षकभावे सम्भवत्यपि तत्परित्यागेन प्रवृत्तिनिमित्तविशिष्टस्यैव पदार्थत्वाभ्युपगमे । **मण्डपेति**-मण्डपे-गृहविशेषे मण्डपानकर्तृत्वस्य वाधात् तत्परित्यागेन गेहत्वव्याप्यमण्डपत्वविशिष्टस्य वाचकं यन्मण्डपपदम्, यच्चाश्वस्य पशुविशेषस्य कर्णोऽश्वकर्ण इति व्युत्पत्तिनिमित्तमश्वसम्बन्धि कर्णत्वं तस्यौषधिविशेषे वाधात् तत्परित्यागेनौषधित्वव्याप्याऽश्वकर्णत्वविशिष्टस्य वाचक यदश्वकर्णपदम्, तदादितुल्यत्वस्य जीवपदे प्रसङ्गादित्यर्थः । एतेनात्मा पञ्चस्वपि गतिपु वर्तमानो जीवपदार्थ इति भावितम् ॥ ४१ ॥

अजीवपदार्थः क इत्यत्रोत्तरप्रतिपादकं "**नञि सर्वनिषेधार्थे**" इति द्विचत्वारिंशत्तमपद्य विवृणोति-**नञीति**ति । '**सर्वनिषेधार्थे**' इति मूलस्य विवरणम्-'**जीवत्वावच्छिन्नान्योन्याभाववदर्थे**' इति । **नञि** जीवो नेत्यजीव इति समस्तेऽजीवशब्दे अकारस्य नञ्स्थानीयत्वेन तेन नम्पदमुपस्थाप्यते, तस्मिन् नञ्पदे, यदि नञ एव जीवत्वावच्छिन्नप्रतियोगिताकभेदवानर्थस्तदा जीवपदमनर्थक प्रसज्यत इति न शङ्कनीयम्, यतो नञोऽन्योऽन्याभाव एवार्थः अन्योऽन्याभाववति तु तस्य लक्षणैव, तदेकदेशेऽन्योऽन्याभावे जीवत्वविशिष्टस्य जीवपदार्थस्य प्रतियोगितासम्बन्धेनान्वये जीवत्वस्यापि स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वय इति तद्बलादेव जीवत्वावच्छिन्नप्रतियोगिताकभेदवानित्यर्थ , अथवा नञो लक्षणाया आवश्यकत्वे जीवत्वावच्छिन्नप्रतियोगिताकभेदवत्येव तस्य लक्षणा, उक्तार्थे नञ्पदस्य तात्पर्यग्राहकत्वाच्च जीवपद सार्थकमिति । 'नञि' इत्यस्य 'संश्रिते' इत्यनेनान्वय प्रतिसन्धाय '**विवक्षिते**' इत्युक्तम्। '**पर्युदासे**' इति मूलस्य विवरणम्-'**सादृश्ये**' इति, 'पर्युदास. सदृग्ग्राही इति वचनात् । **तत्र** जीवत्वावच्छिन्नप्रतियोगिताकान्योन्याभाववति । '**संश्रिते**' इति मूलस्य विवरणम्-'तात्पर्यविषयीकृते' इति, '**पुद्गलप्रभृति**' इत्यस्य विवरणम्-पुद्गलादिकमिति, पदेनेति पूरणम्। सादृश्यार्थकस्य पर्युदासनञ. कथमाश्रयणमित्यपेक्षायामाह-**पर्युदासानाश्रयणे** त्विति-भेदग्राहिनयेन द्रव्येण सह गुण-पर्याययोर्भेद इष्यते, अभेदग्राहिनयेन द्रव्येण सह गुण-पर्याययोरभेद इष्यते, इति नयद्वययोजनया स्या

पर्युदासे– सादृश्ये च, तत्र संश्रिते– तात्पर्यविषयीकृते, पुद्गलप्रभृति– पुद्गलादिकं द्रव्यम्, 'अजीव' इति पदेन संज्ञितम्, पर्युदासानाश्रयणे तु जीवस्य गुण-पर्याययोरपि भेदनयाश्रयणेनाजीवपदप्रयोगप्रसङ्ग इति भावः ॥ ४२ ॥

**नोजीव इति नोशब्देऽजीवः सर्वनिषेधके ।**
**देश-प्रदेशौ जीवस्य तस्मिन् देशनिषेधके ॥ ४३ ॥**

**नयामृत०**– नो इति । 'नोजीव' इति शब्दवाच्ये नोशब्दे सर्वनिषेधके विवक्षिते अजीव एव, देशनिषेधके तु नोशब्दे आश्रीयमाणे देशनिषेधस्य देशाभ्यनुज्ञानान्तरीयकत्वाज्जीवस्य देश-प्रदेशावेव नोजीवशब्दव्यपदेश्यावभ्युपगन्तव्यौ ॥ ४३ ॥

**जीवो वाऽजीवदेशो वा, प्रदेशो वाप्यजीवगः ।**
**अनयैव दिशा ज्ञेयो, नोअजीवपदादपि ॥ ४४ ॥**

**नयामृत०**—जीवो वेति । अनयैव –उक्तयैव दिशा, नोअजीवपदादपि नोशब्दस्य सर्वनिषेधकत्वे जीवो– जीवपदार्थो वा बोध्यः, तस्य देशनिषेधकत्वे चाजीवदेशो वा, अजीवगः– अजीवाश्रितः प्रदेशो वा,

---

द्वादे द्रव्येण सह गुण-पर्याययोर्भेदाभेदलक्षणाविष्वग्भावोऽनुमतः, तत्र पर्युदासानाश्रयणे भेदनयाश्रयणेन जीवत्वावच्छिन्नप्रतियोगिताकभेदवान् जीवस्य गुणः पर्यायश्चेति तयोरप्यजीवपदप्रयोगप्रसङ्गः, सादृश्यार्थकपर्युदासाश्रयणे तु जीवद्रव्येण समं पुद्गलादिद्रव्यस्यैव द्रव्यत्वेन सादृश्यमिति जीवसदृशो जीवत्वावच्छिन्नप्रतियोगिताकभेदवान् अजीवपदार्थो न जीवस्य गुणः पर्यायो वेति न तत्र जीवपदप्रयोगप्रसङ्ग इत्यर्थः ॥ ४२ ॥

नोजीवपदार्थः क इत्यत्रोत्तरप्रतिपादक "**नोजीव इति नोशब्दे**" इति त्रिचत्वारिंशत्तमपद्यं विवृणोति– **नो इतीति** । '**नोजीव इति शब्दवाच्ये**' इत्यस्य स्थाने 'नोजीव इति शब्दवाच्यो' इति पाठो युक्तः, तस्य 'अजीव एव' इत्यनेनान्वयः । '**सर्वनिषेधके**' इत्यस्य 'जीवत्वावच्छिन्नप्रतियोगिताकभेदवदर्थके' इत्यर्थः, अत्र पर्युदासाश्रयणं न कृतम्, अजीव एवेति सामान्येनोक्तम्, तेन जीवस्य गुण-पर्याययोरपि नोजीवपदप्रयोगो भेदनयाश्रयणेनेष्ट इति ज्ञायते, यदि च जीवस्य गुण पर्याययोर्नोजीवशब्दप्रयोगो नेष्टस्तदा पूर्ववत् सादृश्याश्रयण कर्तव्यमिति । '**विवक्षिते**' इति '**आश्रीयमाणे**' इति च पूरितम् । '**तस्मिन्**' इत्यत्र तच्छब्देन नोशब्दग्रहणमवलम्ब्य 'तस्मिन्' इत्यस्यार्थकथनम्– **नोशब्द** इति । देशनिषेधके नोशब्दे आश्रीयमाणे नोजीव इत्यनेन जीवदेशनिषेध एव प्रतीयेत जीवदेश-प्रदेशौ कथं नोजीवशब्दव्यपदेश्यावित्यपेक्षायामाह– **देशनिषेधस्येति** । '**नान्तरीयकत्वाद्**' इत्यस्य व्याप्यत्वादित्यर्थः ॥ ४३ ॥

नोजीवपदार्थः क इत्यत्रोत्तरप्रतिपादकं चतुश्चत्वारिंशत्तम "**जीवो वा**" इति पद्यं विवृणोति– **जीवो वेतीति** । नोअजीवपदादुक्तदिशा जीवपदार्थो यथा ज्ञायते तथोपदर्शयति– **नोशब्दस्येति**– नोअजीवशब्दघटकस्य नोशब्दस्य, सर्वनिषेधकत्वे–अजीवत्वावच्छिन्नप्रतियोगिताकान्योन्याभाववदर्थकत्वे, जीवपदार्थो नोअजीवशब्दव्यपदेश्यः, यतोऽजीवशब्दप्रतिपाद्यो जीवत्वावच्छिन्नप्रतियोगिताकभेदवान्, तत्सर्वनिषेधो निरुक्तान्योन्याभाववत्त्वावच्छिन्नप्रतियोगिताकभेदवान्, स च जीव एव, यावन्तोऽजीवास्तद्भेदस्य जीवादन्यत्राभावादित्यर्थ । अजीवदेशो यथा नोअजीवशब्दव्यपदेश्यस्तथोपदर्शयति– **तस्य देशनिषेधकत्वे चेति**– नोअजीवशब्दघटकस्य नोशब्दस्य, देशनिषेधकत्वे– देशनिषेधार्थकत्वे एकदेशनिषेधस्यापरदेशाभ्यनुज्ञानान्तरीयकत्वादजीवदेशो नोअजीवपदाज्ज्ञेय., **वा**– अथवा अजीवदेशो निषिध्यते तेनाजीवदेशनिषेधेनाजीवप्रदेशोऽनुमन्यत इति अजीवप्रदेशो नोअजीवपदाज्ज्ञेय. । '**अजीवगः**' इत्यस्य विवरणम्– '**अजीवाश्रितः**' इति । उक्तमर्थमभिप्रायस्फोरणेन स्पष्टयति– "**अ मा नो ना प्रतिषेधे**" **इत्यनुशासनतौल्येऽपीति**– प्रतिषेधे इत्यत्र सप्तम्यर्थो वाचकत्वम्, तथा च अशब्दो माशब्दो नोशब्दो नाशब्दश्च प्रतिषेधवाचक इति निरुक्तानुशासनार्थः, तथा च निरुक्तानुशासनं

'अ मा नो ना प्रतिषेधे' इत्यनुशासनतौल्येऽपि संसर्गाभावोऽन्योन्याभावश्च नञोऽर्थः, नोशब्दस्य त्वभाव एकदेशो वा, तत्र चान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वं तदेकदेशत्वादि व्युत्पत्तिबललभ्यमिति सिद्धान्तपरिभाषेति निगर्वः ॥ ४४ ॥

उक्तं मतं कियतां नयनामित्याह—

**नैगमो देशसङ्ग्राही, व्यवहारर्जुसूत्रकौ ।**
**शब्दः समभिरूढ-श्चेत्येवमेते प्रचक्षते ॥ ४५ ॥**

**नयामृत०**—**नैगम** इति । नैगमो- नैगमनयः, देशसङ्ग्राही- अवान्तरसङ्ग्रहः, सर्वसङ्ग्रहस्य सन्मात्रार्थत्वात् तत्त्यागः, व्यवहारर्जुसूत्रकौ- व्यवहारनय ऋजुसूत्रनयश्च, शब्दः समभिरूढश्चेत्येते नया एवं प्रचक्षते ॥ ४५ ॥

**भावमौदयिकं गृह्णन्, एवम्भूतो भवस्थितम् ।**
**जीवं प्रवक्त्यजीवं तु, सिद्धं वा पुद्गलादिकम् ॥ ४६ ॥**

**नयामृत०**—**भाव**मिति । एवम्भूतनयस्तु औदयिकं भावं व्युत्पत्तिनिमित्तमेव प्रवृत्तिनिमित्ततया गृह्णन्, भवस्थितं- संसारिणं जीवम्, प्रवक्ति- जीवशब्देन व्यपदिशति, अजीवम्- अजीवपदार्थं तु सिद्धं वा पुद्गलादि द्रव्यं वेच्छत्यसौ ॥ ४६ ॥

---

चतुर्णामपि अमानोनाशब्दानामविशेषेण सामान्यत. प्रतिषेधार्थकत्वमनुशास्तीत्येव निरुक्तानुशासनस्याविशिष्टत्वेऽपीत्यर्थः । **नञोऽर्थः** अजीवशब्दसन्निविष्टनकारस्थानीयाकारस्यार्थः । **'नोशब्दस्य'** अजीवशब्दाव्यवहितपूर्ववर्तिनो नोशब्दस्य । **तत्र च** नोशब्दार्थे अभावे एकदेशे च । **अन्वयिते**ति- यदा अभावो नोशब्दार्थस्तदा अन्वयितावच्छेदकं यज्जीवत्वावच्छिन्नप्रतियोगिताकभेदरूपमजीवत्वं तदवच्छिन्नप्रतियोगिताकत्वमभावे व्युत्पत्तिविशेषबललभ्यम्, यदा तु नोशब्दस्यैकदेशोऽर्थस्तदाऽन्वयितावच्छेदकं यन्निरुक्तमजीवत्वं तदवच्छिन्नैकदेशत्वं तदवच्छिन्नप्रदेशत्वं वा व्युत्पत्तिविशेषबललभ्यमिति **जैन**सिद्धान्तसंकेत इति तदभिज्ञस्य नोअजीवपदव्यपदेश्य उक्तदिशा जीवो वा अजीवदेशो वा अजीवप्रदेशो वा सम्भवतीति भावार्थ इत्यर्थः ॥ ४४ ॥

पञ्चचत्वारिंशत्तमपद्यमवतारयति-**उक्तं मत**मिति- 'जीवः' इत्याकारिते पञ्चस्वपि गतिषु औदयिकादिभावपञ्चकलक्षितो जीवो जीवपदव्यपदेश्यः प्रतीयते, अजीवपदाच्च पुद्गलप्रभृत्यजीवद्रव्यं प्रतीयते, नोजीवपदादजीवो जीवदेशो जीवप्रदेशो वा प्रतीयते, नोअजीवपदाच्च जीवो अजीवदेशोऽजीवप्रदेशो वा प्रतीयत इत्येवमुपदर्शितमत कियता नयानामित्याकाङ्क्षानिवृत्तये वक्तीत्यर्थ. ।

**"नैगमो देशसङ्ग्राही"** इति पञ्चचत्वारिंशत्तमपद्यं विवृणोति- **नैगम** इतीति । **अवान्तरसङ्ग्रहः** महासामान्यसत्ताव्याप्यद्रव्यत्वादिरूपेण सकलद्रव्यादीनामैक्याभ्युपगन्ताऽपरसङ्ग्रह. । सदेवैकमिति महासामान्यसत्तारूपेण सर्ववस्तूनामैक्यमेवेत्यभ्युपगन्तृपरसङ्ग्रहस्तु सन्मात्रग्राहित्वात् प्रत्येकं जीवाजीवादि वस्तु तदर्थकजीवाऽजीवादिशब्द च नाङ्गीकरोतीत्यतस्तत्परित्याग इत्याह- **सर्वसङ्ग्रहस्ये**ति । **तत्त्यागः** सर्वसङ्ग्रहत्याग । अन्यत् स्पष्टम् ॥ ४५ ॥

एवम्भूतनयवक्तव्यप्रतिपादक षट्चत्वारिंशत्तम **"भावमौदयिकं गृह्णन्"** इति पद्यं विवृणोति-**भाव**मितीति । **असौ** एवम्भूतनयः । अन्यत् सुगमम् ॥ ४६ ॥

**नोअजीवश्च नोजीवो, न जीवा-ऽजीवयोः पृथक् ।**
**देश-प्रदेशौ नास्येष्टा–विति विस्तृतमाकरे ॥ ४७॥**

**नयामृत०**—नो इति। नोअजीवो नोजीवश्चैतन्नये जीवा–ऽजीवयोर्वैक्रव्ययोः सतोः, पृथक् न–पार्थक्यं नापद्यते, यतोऽस्य नयस्य देश-प्रदेशौ नेष्टाविति, नोशब्दः सर्वनिषेधार्थ एव वर्तते, इत्येतदाकरे–अनुयोगद्वारादौ विस्तृतम् ॥ ४७ ॥

इत्थं स्वसमयसिद्धामेवम्भूतनयार्थप्रक्रियामुपपाद्य तया दिगम्बरोक्तप्रक्रियां दूषयति—

**सिद्धो निश्चयतो जीव इत्युक्तं यद् दिगम्बरैः ।**
**निराकृतं तदेतेन यन्नयेऽन्त्येऽन्यथा प्रथा॥ ४८ ॥**

**नयामृत०**—सिद्ध इति । एतेन–पूर्वोक्तेन, सिद्धो निश्चयतो जीव इति यद् दिगम्बरैरुक्तम्–
"तिक्काले चदु पाणा इंदियबलमाउ आणपाणो य। ववहारा सो जीवो णिच्छयदो दु चेदणा जस्स ॥"

[ द्रव्यसंग्रहे गाथा–३ ]

इत्यादिना तन्निराकृतम्, यत्–यस्मात्, अन्त्ये–एवम्भूतनये, अन्यथा प्रथा-सिद्धोऽजीव इत्येव प्रसिद्धिः, शुद्धनिश्चयश्च स एव, इति कथं निश्चयतः सिद्धो जीव इति वक्तुं शक्यमिति ॥ ४८ ॥

नन्वेवम्भूतः पर्यायार्थिकेष्वेव शुद्धनिश्चयस्तेनास्मदुक्तानुपपत्तावपि द्रव्यार्थिकप्रभेदेन सर्वसङ्ग्रह-नयेन शुद्धनिश्चयेन तुदुपपादयिष्याम इत्याकाङ्क्षायामाह—

**आत्मत्वमेव जीवत्वमित्ययं सर्वसङ्ग्रहः ।**
**जीवत्वे प्रतिभूः सिद्धसाधारण्यं निरस्य न ॥ ४९ ॥**

जीवशब्दव्यपदेश्य एव नोअजीवशब्दव्यपदेश्यः अजीवशब्दव्यपदेश्य एव नोजीवशब्दव्यपदेश्य इति 'नोअजीवः' 'नोजीव.' इति द्वौ प्रकारौ नैवम्भूतनयसम्मताविप्युपदर्शकं सप्तचत्वारिंशत्तमं "**नोअजीवश्च**" इति पद्यं विवृणोति–**नो इतीति**। **एतन्नये** एवम्भूतनये । **अस्य नयस्य** एवम्भूतनयस्य । **नोशब्दः** 'नोअजीवः' इत्यत्र 'नोजीवः' इत्यत्र च नोशब्दः। अन्यत् स्पष्टम् ॥ ४७ ॥

अष्टचत्वारिंशत्तमपद्यमवतारयति–**इत्थमिति** । **स्वसमयसिद्धां** जैनश्वेताम्बरराद्धान्तप्रसिद्धाम्। "**सिद्धो निश्चयतः**" इत्यष्टचत्वारिंशत्तमपद्यं विवृणोति– **सिद्ध इतीति** । '**एतेन**' इत्यस्य विवरणम्– **पूर्वोक्तेनेति**– अस्य 'निराकृतम्' इत्यनेनान्वयः। 'निश्चयनयतः सिद्धो जीवः' इत्यस्य प्रतिपादकं दिगम्बरवचनमुल्लिखति– **तिक्काले चेति**– "त्रिकाले चत्वार. प्राणा इन्द्रियबलमायुरानप्राणश्च । व्यवहारत. स जीवो निश्चयतो द्वे चेतने यस्य" ॥ इति संस्कृतम्। **इत्यादिना** इत्यादिग्रन्थेन, यद् दिगम्बरैरुक्तं तदेतेन निराकृतमिति सम्बन्धः। **तत्** दिगम्बरोक्तमनन्तरमुपदर्शितम्। निराकरणे हेतुः– **यदिति**– यस्मादिति तदर्थ. । '**अन्त्ये**' इति स्थाने 'अन्त्ये नये' इति पाठो युक्तः, तस्य विवरणम्– **एवम्भूतनये** इति। '**अन्यथा प्रथा**' इति मूलस्य विवरणम्– **सिद्धोऽजीव इत्येव प्रसिद्धिरिति** । ननु निश्चयतः सिद्धो जीव इति दिगम्बरमतम्, तस्यैवम्भूतनये अन्यथाप्रथायामपि कथं निरसनमित्यत आह– **शुद्धनिश्चयश्च स एवेति**– एवम्भूतनय एव शुद्धनिश्चयनयोऽतस्तत्रान्यथाप्रथाऽपहस्तयत्येवोक्तदिगम्बरोक्तमित्यर्थ. । **इति** एतस्मात् कारणात्। **कथमिति**– न कथमपि निश्चयतः सिद्धो जीव इति वक्तुं शक्यमित्यर्थः ॥ ४८ ॥

**नयामृत०**—आत्मत्वमिति । आत्मत्वमेव जीवपदप्रवृत्तिनिमित्तम्, पारिणामिकभावस्य कालत्रयानुगत्वेन सत्यत्वात्, औदयिकभावस्य चौपाधिकत्वेन कालत्रयाननुगतत्वेन च तुच्छत्वात्, इति अयं सर्वसङ्ग्रहनयः सिद्धसाधारण्यं भवस्थतौल्यं निरस्य जीवत्वसाधने न प्रतिभूः, सर्वत्र तुल्यजीवत्वात्, एवम् 'एको व्यवहारतो जीवोऽन्यश्च निश्चय[तः]' इति विभागकरणमसमीक्षिताभिधानमेवापद्येत, सर्वसङ्ग्रह एव हि कर्मोपाधिनिरपेक्षशुद्धद्रव्यार्थिकः, तेन च संसारिचैतन्यमपि निरुपरागं शुद्धमिति परेणेष्यत एव, तदुक्तं द्रव्यसङ्ग्रहे—

"मग्गण-गुणठाणेहि य चउदस य हवंति तह असुद्धणया । विण्णेया संसारी सव्वे सुद्धा उ सुद्धणया॥१३॥" इति

न च संसारिचैतन्यस्य सङ्ग्रहनयेन शक्त्या शुद्धचैतन्यनिश्चयेऽपि व्यक्त्या शुद्धचैतन्यस्य सिद्ध एव निश्चयान्न साधारण्यमिति शङ्कनीयम्, सङ्ग्रहस्य शक्तिग्राहकत्वेन व्यक्तिग्राहकताया व्यवहार एव विश्रान्तेः, निश्चयतो द्विचेतनाशाली सिद्ध एव जीव इत्यस्य व्याघातात् ॥ ४९ ॥

---

एकोनपञ्चाशत्तमपद्यमवतारयति— **नन्विति** । **तेन** पर्यायार्थिकनयेषु शुद्धनिश्चयात्मकेनैवम्भूतनयेन । **अस्मदुक्तानुपपत्तावपि** 'सिद्धो निश्चयतो जीवः' इति दिगम्बरोक्तस्यानुपपत्तावपि । **तदुपपादयिष्यामः** 'सिद्धो निश्चयतो जीवः इति दिगम्बरोक्तमुपपादयिष्यामः, द्रव्यार्थिकेषु शुद्धनिश्चयात्मकेन सङ्ग्रहेण सिद्धो जीव इत्युपपद्यत एवेत्यर्थः ।

"**आत्मत्वमेव**" इत्येकोनपञ्चाशत्तमपद्यं विवृणोति— **आत्मत्वमितीति** । '**जीवत्वम्**' इति मूलस्य '**जीवपदप्रवृत्तिनिमित्तम्**' इति विवरणम् । कथमात्मत्वमेव जीवपदप्रवृत्तिनिमित्त न तु प्राणधारणलक्षण जीवनं यज्जीवपदव्युत्पत्तिनिमित्तमित्यपेक्षायामाह— **पारिणामिकभावस्येति**— आत्मत्व जीवस्य पारिणामिको भावस्तस्य कालत्रयेऽप्यात्मनि सत्त्वेन सत्यत्वात्, प्राणधारणलक्षणं जीवनं च जीवस्यौदयिको भावस्तस्यायुष्कर्मलक्षणोपाधिप्रभवस्यौपाधिकत्वेन यदैवायुष्कर्मात्मनि सम्बद्धं तदैव तस्यात्मनि सत्त्वमिति कालत्रयाननुगतत्वेन तुच्छत्वादित्यस्मात् कारणादात्मत्वमेव सत्यतया जीवपदप्रवृत्तिनिमित्त तुच्छत्वाच्च न जीवन जीवपदप्रवृत्तिनिमित्तमित्यभ्युपगन्ता सर्वसङ्ग्रहनय· सिद्धसाधारण्य निरस्य जीवत्वे न प्रतिभू· । '**सिद्धसाधारण्यम्**' इत्यस्य विवरणम्— **भवस्थतौल्यमिति** । '**जीवत्वे**' इत्यस्य विवरणम्— '**जीवत्वसाधने**' इति । **प्रतिभूरित्यस्य** साक्षीत्यर्थः । कथं न प्रतिभूरित्यपेक्षायामाह— **सर्वत्रेति**—जीवपदप्रवृत्तिनिमित्तमात्मत्वं यथा सिद्धे वर्तते तथा भवस्थेऽपि तेन सिद्धे जीवत्वसाधने भवस्थेऽपि जीवत्वं सिद्ध्यत्येव, तथा च सिद्ध एव निश्चयतो जीव इति न स्यात्, आत्मत्व यदि सिद्ध एव वर्तेत न तु भवस्थे तदा स्यात् तेन सिद्धमात्रवर्तिना सिद्धस्यैव जीवत्वसाधनं सर्वसङ्ग्रहत., न चैवमित्यर्थ. । आत्मत्वस्य जीवपदप्रवृत्तिनिमित्ततया सर्वसङ्ग्रहनयाभिमतस्य सिद्धे ससारिणि च सत्त्वेन ततो जीवपदव्यपदेश्यत्वमात्ममात्र एवेति निश्चयत एव सर्वे आत्मानो जीवा इति व्यवहारनिश्चयाभ्या जीवविभागकरणमपि दिगम्बरस्यासमीक्षिताभिधानमेव स्यादित्याह—**एवमिति** । निश्चयनये यदि ससारिणा जीवपदव्यपदेश्यत्वं नोपपद्येत तदा व्यवहारतस्तेषा जीवपदव्यपदेश्यत्वोपपत्तेश्च विभागकरणमुपपद्येत, न चैवम्, दिगम्बराभिमतेन सर्वसङ्ग्रहलक्षणनिश्चयनयेनैव सर्वेषा जीवपदव्यपदेश्यत्वोपपत्तेरित्याह—**सर्वसङ्ग्रह एव हीति** । **तेन च** सर्वसङ्ग्रहेण च । **निरुपरागं** कर्मोपाधिरूपोपरागमुक्तम्, यद्यपि ससारी कर्ममलदिग्ध एव व्यवहारतः, तथापि शुद्धद्रव्यग्राहिसर्वसङ्ग्रहत· सोऽपि वस्तुगत्या कर्ममलविमुक्त एवेत्याशय. । उक्तार्थे द्रव्यसङ्ग्रहवचनसंवादमाह—**तदुक्तमिति** । **मग्गण०** इति—"मार्गणा-गुणस्थानैश्च चतुर्दशभिश्च भवन्ति तथा अशुद्धनयात् । विज्ञेयाः संसारिणः सर्वे शुद्धास्तु शुद्धनयात्" ॥ इति सस्कृतम् । '**न च**' इत्यस्य '**शङ्कनीयम्**' इत्यनेनान्वयः, ससारिचैतन्यमपि संसारदशाया कर्मावृततयोपलभ्यत इति व्यक्त्याऽशुद्धं कर्ममलापगमे शुद्ध तद्भविष्यतीति शक्त्या सङ्ग्रहस्वरूपनिश्चयनयेन शुद्धचैतन्यत्व निश्चीयते, सिद्धे तु व्यक्त्या शुद्धचैतन्यस्य निश्चयाद् व्यक्त्या शुद्धचैतन्यरूपत्वस्यात्मत्वस्य जीवपदप्रवृत्तिनिमित्तस्य न सिद्धसंसारिसाधारण्यमिति शङ्कितुर्दिगम्बरानुयायिनोऽभिसन्धिः । निषेधहेतुमुपदर्शयति—**संग्रहस्येति**—शक्तिरूपेण शुद्ध चैतन्यं सर्वदाऽवतिष्ठत इति शक्तिर्द्रव्यम्, व्यक्तिस्तु न त्रिकालानुगामिनीति पर्यायरूपाऽशुद्धद्रव्यरूपा वा

नन्वेवं निश्चयतः सिद्धस्याजीवत्वे भवद्भिरिष्यमाणे भवतामेव ग्रन्थे संसारिसिद्धसाधारणजीवपदार्थाभिधानं कथम्? इत्याशङ्कायामाह ।

**यज्जीवत्वं क्वचिद् द्रव्य-भावप्राणान्वयात् स्मृतम् ।**
**विचित्रनैगमाकूतात् तज्ज्ञेयं न तु निश्चयात् ॥ ५० ॥**

**नयामृत०**—यदिति । यज्जीवत्वं क्वचिद् ग्रन्थे, द्रव्यभावप्राणानाम् अन्वयात्—एकीकरणात् स्मृतं संसारि-सिद्धसाधारण्यमिति शेषः, तद् विचित्रः—विविधावस्थो यो नैगमः, तस्याकूतात्—अभिप्रायात् ज्ञेयम्, न तु निश्चयादेवम्भूतनयात्, तथा चैवम्भूतनयेनैव सिद्धमजीवं वयं प्रतिजानीमहे, न तु नयान्तराभिमतेन जीवत्वेऽपि विप्रतिपद्यामहे, इति शुद्धा-ऽशुद्धेन नैगमनयेन साधारणजीवत्वाभ्युपगमेऽपि न क्षतिः, इयाँस्तु विशेषः— प्रसिद्धनैगम औदयिकभावोपलक्षितमात्मत्वाख्यं पारिणामिकभावमेव जीवपदप्रवृत्तिनिमित्तमभ्युपैति, तत्तद्विशेषश्च कश्चिदुपचारोपजीवी द्रव्य-भावप्राणान्यतरवत्त्वेनानुगतमौदयिकक्षायिकभावद्वयमिति, नेदं सिद्धान्तार्णवे नयविकल्पकल्लोलवैचित्र्यं तत्संप्लवव्यसनिनां विक्षोभावहम् ॥ ५० ॥

---

सेति सङ्ग्रहस्य शक्तिग्राहकत्वमेव न व्यक्तिग्राहकत्वम्, व्यक्तिग्राहकत्वं तु व्यवहारस्यैव, तथा च व्यक्तया शुद्धचैतन्यं यदि सिद्धे जीवपदप्रवृत्तिनिमित्त तदा व्यवहारत एव सिद्धो जीवो न निश्चयत इत्यनभिमतमेव दिगम्बरस्यासज्यत इत्युत्तराभिसन्धि. । एवं ज्ञानदर्शनयोर्योगपद्याभावेन सिद्धेऽपि यदा ज्ञानमभिव्यज्यते तदा न दर्शनमभिव्यज्यते, यदा दर्शनमभिव्यज्यते तदा न ज्ञानमभिव्यज्यत इति व्यक्तया द्विचेतनाशालित्वं न सिद्धेऽपीति सिद्धोऽपि न निश्चयतो जीवः स्यादिति सिद्धस्य द्विचेतनाशालित्वेन जीवत्वं निश्चयनयत इत्यपि दिगम्बरस्य व्याहतमेवेत्याह—**निश्चयत** इति ॥ ४९ ॥

पञ्चाशत्तमपद्यमवतारयति—**नन्वेवमिति** । **एवम्** अनन्तरोपदर्शितदिशा । **भवद्भिः** श्वेताम्बरै. । **भवतामेव** श्वेताम्बराणामेव । "**यज्जीवत्वं**" इति पञ्चाशत्तमपद्य विवृणोति—**यदितीति** । **एकीकरणात्** प्राणधारित्व जीवत्वमिति लक्षणे द्रव्यप्राण-भावप्राणसाधारणप्राणत्वेन रूपेणानुगमय्य द्रव्यप्राणभावप्राणयोरुपादानात् । '**संसारि-सिद्धसाधारण्यम्**' इत्यस्य स्थाने 'ससारि-सिद्धसाधारणम्' इति पाठो युक्त, तथा सत्येव तस्य 'जीवत्वम्' इत्यनेनाभेदेनान्वयो घटते । **तथा च** सिद्ध-ससारिसाधारणजीवत्वाभिधानस्य विचित्रनैगमाकूतप्रयुक्तत्वव्यवस्थितौ च । **वयं** श्वेताम्बराः । '**नयान्तराभिमतेन**' इत्यस्य स्थाने 'नयान्तराभिमते' इति पाठ. सम्यग्, तथा च **नयान्तराभिमते** नैगमनयाभिमते, **जीवत्वेऽपि** सिद्ध-संसारिसाधारणजीवत्वेऽपि, **न तु** नैव, **विप्रतिपद्यामहे** विवादमातिष्ठामहे इत्यर्थ. । **इति** एतस्मात् कारणात् । **शुद्धाशुद्धेन** नैगमनयः परसङ्ग्रहसमानाभिप्राय. शुद्धद्रव्यं विषयीकरोतीति शुद्धः, अशुद्धद्रव्यग्राहिव्यवहारसमानाभिप्रायस्त्वशुद्धमपि द्रव्यं विषयीकरोतीत्यशुद्ध इति कृत्वा शुद्धाशुद्धेन । **साधारणेति**— सिद्ध जीवसाधारणेत्यर्थः । **न क्षतिः** न क्वचिदस्मदभियुक्तनिर्मितग्रन्थे सिद्ध-ससारिसाधारणजीवत्वप्रतिपादके सत्यपि श्वेताम्बराणामस्माकमेवम्भूतनयसिद्धस्याजीवत्वं स्वीकुर्वता हानि. । नैगमनयवैचित्र्य तदवान्तराभिप्रायवैचित्र्योपदर्शनेन समर्थयति— **इयाँस्त्विति** । **औदयिकभावोपलक्षितं** जीवपदव्युत्पत्तिनिमित्तजीवनलक्षणौदयिकभावोपलक्षितम् । '**तत्तद्विशेषश्च**' इति स्थाने 'तद्विशेषश्च' इति पाठ सम्यग्, नैगमविशेषश्चेति तदर्थः । '**भावद्वयम्**' इत्यस्यानन्तरं 'जीवपदप्रवृत्तिनिमित्तमभ्युपैति' इत्यनुषज्यते । '**नेदम्**' इत्यत्र नञो 'विक्षोभावहम्' इत्यनेनान्वयः । **इदम्** अनन्तरमेवोपवर्णित नयाभिप्रायवैचित्र्यम् । अस्यैव शिष्यबुद्धिवैशद्यायोपवर्णनम्—**सिद्धान्तार्णवे नयविकल्पकल्लोलवैचित्र्यमिति**—सिद्धान्त एव— जैनागम एव, अर्णवः— समुद्रः, तत्र नयस्य— वस्त्वंशग्राह्यभिप्रायस्य, यो विकल्प.— नैगमादिप्रकारः, स एव कल्लोल.— तरङ्गः, तस्य वैचित्र्य— नानाप्रभेदस्तदेतत्, **तत्संप्लवव्यसनिनां** तस्मिन्— निरुक्तसिद्धान्तसमुद्रे, संप्लवः—मुहुर्मुहुस्तदन्तर्निविष्टतत्त्वज्ञान-

ननु "जीव प्राणधारणे" इत्यत्र भावप्राणधारणमेव धात्वर्थं विवक्षितत्वा( विवक्षित्वा ) निश्चयतः सिद्धस्य जीवत्वं समर्थयिष्याम इत्याकाङ्क्षायामाह—

**धात्वर्थे भावनिक्षेपात्, परोक्तं न च युक्तिमत् ।**
**प्रसिद्धार्थोपरोधेन, यन्नयान्तरमार्गणा ॥ ५१ ॥**

**नयामृत०**—धात्वर्थे इति । धात्वर्थे– जीवत्यर्थे, भावनिक्षेपात्– भावसङ्केतग्रहात्, परोक्तं– 'निश्चयतः सिद्ध एव जीवः' इति दिगम्बरोक्तम्, न च– नैव युक्तिमत्, यत्– यस्मात्, प्रसिद्धः– अनादिधातुपाठादिप्रतीयमानो योऽर्थः, तदनुरोधेन नयान्तरस्य मार्गणा–विचारणा भवति, तथा च यादृशधात्वर्थमुपलक्षणीकृत्येतरनयार्थप्रतिसन्धानं तादृशधात्वर्थप्रकारकजिज्ञासयैवम्भूताभिधानस्य साम्प्रदायिकत्वात्, न तत्र भावनिक्षेपाश्रयणमित्यर्थः, अन्यथा तत्रापि निक्षेपान्तराश्रयणेऽनवस्थानात्, प्रकृतमात्रापर्यवसानादन्ततो ज्ञानाद्वैते शून्यतायां वा पर्यवसानात्, किञ्च, तादृगुपरितनैवम्भूतस्य प्राक्त-

रत्नावाप्तये तत्तात्पर्यावधारणलक्षमवगाहनम्, तदेव व्यसनं तच्छालिनां प्रमातॄणाम्, नयविकल्पकल्लोलवैचित्र्य प्रमोदावहमेव, **न विक्षोभावहं** न चित्तवैकल्यावहमित्यर्थ. ॥ ५० ॥

एकपञ्चाशत्तमपद्यमवतारयति– **नन्विति** । "जीव प्राणधारणे" इत्यत्र निश्चयनयेन प्राणशब्दो भावप्राणपर एव, भावप्राणाश्च ज्ञान दर्शनलक्षणचैतन्यद्वयमेव, तद्वत्त्वात् सिद्धस्यैव जीवत्वं वयं दिगम्बरा समर्थयिष्याम इत्याकाङ्क्षायामेक पञ्चाशत्तमपद्यं तदुत्तरप्रदर्शकमाहेत्यर्थः । विवृणोति– **धात्वर्थे इतीति** । **यादृशेति**– प्रकृते जीवधात्वर्थजीवनलक्षणद्रव्यप्राणधारणमुपलक्षणीकृत्य नैगमनयाभिमतात्मत्वविशिष्टरूपजीवशब्दार्थप्रतिसन्धानं– जीवनलक्षणद्रव्यप्राणधारणरूपव्युत्पत्तिनिमित्तोपलक्षितात्मत्वरूपपारिणामिकभावविशिष्टे जीवशब्दसङ्केतग्रहणात्मकं समस्तीति निरुक्तजीवनरूपजीवधात्वर्थप्रकारकजिज्ञासयैवम्भूतनयाभिधानस्य–'एवम्भूतनयेन निरुक्तजीवनरूपधात्वर्थविशिष्टो जीवपदव्यपदेश्यः' इत्यभिधानस्य **साम्प्रदायिकत्वात्** जैनागमरहस्यवेत्तृप्राचीनसम्मतत्वाच्च तत्र जीवत्यर्थे प्राणधारणे भावनिक्षेपस्य–'प्राणशब्दो भावप्राणसङ्केतित' इत्यस्याश्रयणमिति '**प्रसिद्धार्थोपरोधेन यन्नयान्तरमार्गणा**' इत्यस्याभिप्रेत्योऽर्थ इत्यर्थः । **अन्यथा**.प्रसिद्धार्थानुपरोधेन नयान्तरविचारणया धात्वर्थे भावनिक्षेपाश्रयणे । **तत्रापि** भावनिक्षेपाश्रयणतो लब्धे चैतन्यद्वयरूपभावप्राणधारणरूपजीवधात्वर्थेऽपि । **निक्षेपान्तराश्रयणे** साकार-निराकारोपयोगात्मकचैतन्यद्वयमपि न वस्तुतो भावप्राणस्वरूप साकारत्व-निराकारत्व-द्वित्वादीना तत्र कल्पितत्वात्, किन्तु चैतन्यमात्रं भावप्राणसङ्केतितमित्येव निक्षेपान्तराश्रयणे सति । **अनवस्थानात्** तत्रापि निक्षेपान्तराश्रयणतो विश्रान्त्यसम्भवात् । एवं च **प्रकृतमात्रापर्यवसानात्** द्विचेतनाशालित्वान्निश्चयत· सिद्धो जीव इति प्रकृतस्यात्र प्रक्रान्तस्यान्यत्रान्यस्य प्रक्रान्तस्येत्येवं प्रकृतमात्रस्यापर्यवसानाद् धात्वर्थत्वपर्यवसानासम्भवात्, तथा च सति सत्यत्वाऽऽनन्दत्वादिकमपि तत्र न स्यादित्यतो **ज्ञानाद्वैते** ज्ञानाद्वैतमपि विषयान्तराभावे निर्विषयं न सम्भवतीति **शून्यतायां** वा निश्चयनयतो जीवपदव्यपदेश्यत्वस्य पर्यवसानाद् व्यवस्थितेः शून्यत्वमेव तत्त्वं जीवव्यपदेश्य स्यादित्यर्थः । अपि चैवम्भूतात्मकनिश्चयनयो द्विविधो व्यवहारानुरोधी निश्चयानुरोधी च, तत्र व्यवहाराद्यभिमतधातुव्युत्पत्तिं समाश्रित्य तादृशव्युत्पत्तिनिमित्तमेव शब्दप्रवृत्तिनिमित्तमुपजीवन् धातुव्युत्पत्तिनिमित्तावच्छिन्नार्थे सङ्केतग्राही निश्चय· प्रथमः, व्यवहारनयाभिमतपदार्थाभिधानानन्तर व्यवहारनयोपजीविनोऽस्यैव निश्चयनयस्याभिमतपदार्थाभिधानमुचितं तदनन्तर चोक्तनिश्चयाभिमतधातुव्युत्पत्तिनिमित्ते भवैकनिम्नं विशेपमादृत्य तादृगविशेषात्मकधातुव्युत्पत्तिनिमित्तावच्छिन्नपदार्थसङ्केतग्राही यो निश्चयोपजीवी द्वितीयो निश्चयस्तदभिमतपदार्थाभिधानमुचितमित्यय पदार्थाभिधानक्रमः, तस्य व्यवहारनयाभिमतजीवपदार्थाभिधानानन्तरं निश्चयोपजीविनिश्चयात्मकद्वितीयनिश्चयाभिमतजीवपदार्थाभिधानं कुर्वता दिगम्बरेणातिक्रमः कृत इति सम्प्रदायाभिमतक्रमोल्लङ्घि दिगम्बरमतं न युक्तमित्याह– **किञ्चेति** । **एतादृगुपरितनैवम्भूतस्य** धात्वर्थे भावनिक्षेपाज्जीवपदार्थं चैतन्यद्वयस्वरूपभावप्राणधारणलक्षणजीवनमुररीकुर्वत एवम्भूत-

नैवम्भूताभिधानपूर्वमेवाभिधानं युक्तम्, अन्यथाऽप्राप्तकालत्वप्रसङ्गात्, तस्मात् व्यवहाराद्यभिमत-व्युत्पत्त्यनुरोधेनौदयिकभावमात्रग्राहकत्वमेवास्य सूरिभिरुक्तं युक्तमिति स्मर्त्तव्यम् । न चेन्द्रियरूपप्राणानां क्षायोपशमिकत्वात् कथमेवम्भूतस्यौदयिकभावमात्रग्राहकत्वमित्यप्याशङ्कनीयम्, प्राधान्येनायुःकर्मोदय-लक्षणस्यैव जीवनार्थस्य ग्रहात्, उपहतेन्द्रियेऽप्यायुरुदयेनैव जीवनिश्चयादिति दिक् ॥ ५१ ॥

शङ्काशेषमुपन्यस्य परिहरति—

**शैलेश्यन्त्यक्षणे धर्मो, यथा सिद्धस्तथाऽसुमान् ।**
**वाच्यं नेत्यपि यत् तत्र, फले चिन्तेह धातुगा ॥ ५२ ॥**

**नयामृत०—शैलेश्यन्त्यलक्षण** इति । शैलेश्या–अयोगिगुणस्थानस्य, अन्त्यक्षणे–चरमक्षणे, यथा निश्चयतो धर्मः, तदर्वाक्तनकालभावी तु व्यवहारत एव, तदुक्तं धर्मसङ्ग्रहण्यां हरिभद्राचार्यैः—

"सो उभयक्खयहेऊ सेलेसीचरमसमयभावी जो । सेसो पुण णिच्छयओ तस्सेव पसाहगो नेओ ॥२६॥"

तथाऽसुमान्– जीवोऽपि निश्चयतः सिद्ध एव भविष्यतीत्यपि न वाच्यम्, यतस्तत्र– 'सो उभय-क्खयहेऊ' इति गाथायाम्, धारयति सिद्धिगतावात्मानमिति धर्म इति फले–फलरूपे धात्वर्थे चिन्ता, सा च कुर्वद्रूपत्वेन कारणत्वं वदत एवम्भूतनयस्य मते शैलेश्यन्त्यक्षण एव धर्मपदार्थसिद्धिसाक्षिणी, तदनन्तरं सिद्धिसाधारणरूपा सा फलाऽव्यवधानात्, इह तु धातुगा– धात्वर्थावच्छिन्नस्वरूपविषयिणी

स्वरूपनिश्चयनयस्य । **प्राक्तनेति**– आयुरादिद्रव्यप्राणधारणलक्षणजीवनरूपजीवधातुव्युत्पत्तिनिमित्तावच्छिन्ने जीवपदसङ्केतग्राहिणो व्यवहारनयोपजीव्येवम्भूतस्वरूपनिश्चयस्य यदभिधानं तत् पूर्वं यस्येति बहुव्रीहिणा 'निरुक्ताभिधानपूर्वम्' इत्यस्य 'निरुक्ताभिधानपूर्वकम्' इत्यर्थः, ततश्च निरुक्ताभिधानानन्तरमेव सिद्ध एव चैतन्यद्वयलक्षणभावप्राणधारित्वाज्जीवपद-व्यपदेश्य इत्यभिधानं युक्तमित्यर्थः । अन्यथा व्यवहारनयाभिधानानन्तरं व्यवहारोपजीविनिश्चयाभिधानमकृत्वैव निश्चयो-पजीविनिश्चयाभिधाने । **अप्राप्तकालत्वप्रसङ्गात्** व्यवहारनयानन्तरव्यवहारोपजीविनिश्चयाभिधानोत्तरकालो निश्चयोप-जीविनिश्चयाभिधानकाल, न तु व्यवहाराभिधानाव्यवहितोत्तरकालस्तस्य काल इति अप्राप्त. कालो यस्य सोऽप्राप्तकाल-स्तस्य भावोऽप्राप्तकालत्वं तस्य प्रसङ्गादित्यर्थ । उपसंहरति– **तस्मादिति**–अप्राप्तकालत्वप्रसङ्गभयादित्यर्थ । **अस्य** एवम्भूतनयस्य । 'न च' इत्यस्य । 'आशङ्कनीयम्' इत्यनेनान्वयः । निषेधे हेतुमाह– **प्राधान्येनेति** । शङ्का–प्रति विधानयोरर्थौ सुखावबोधौ ॥ ५१ ॥

द्विपञ्चाशत्तमपद्यमवतारयति–**शङ्काशेषमिति**–दिगम्बराशङ्काऽवशिष्टभागमित्यर्थः । विवृणोति– **शैलेश्यलक्षण इतीति** । **धर्म** इति–धारणाद् धर्म इति व्युत्पत्त्या धारणलक्षणो धर्मपदार्थो निश्चयनयतो यथा शैलेश्यन्त्यक्षणे इत्यर्थः । **तदर्वाक्तनकालभावी तु** शैलेश्यन्त्यक्षणप्राक्तनकालभावी धर्मपदार्थस्तु । **व्यवहारत एव** व्यवहारनयत एव, एवकारेण तस्य निश्चयनयसम्मतत्वस्य व्यवच्छेद. । उक्तार्थे हरिभद्रसूरिवचन पराभिप्रेतप्रमाणतयोपदर्शयति–**तदुक्तमिति** । **सो०** इति–"स उभयक्षयहेतु शैलेशीचरमसमयभावी यः । शेष पुनर्निश्चयतः तस्यैव प्रसाधको ज्ञेयः" ॥ इति संस्कृतम् । 'तत्र' इति मूलस्य विवरणम्– '**सो उभयक्खयहेऊ**' **इति गाथायाम्** इति । '**फले**' इति मूलस्य '**फल-रूपे धात्वर्थे**' इति विवरणम् । **सा च** निरुक्तचिन्ता पुनः, अस्य 'साक्षिणी' इत्यनेनान्वयः । **धर्मपदार्थसिद्धि-साक्षिणी** सिद्धिगतावात्मानं धारयतीति व्युत्पत्त्या धर्मपदार्थः सिद्धिस्तस्या साक्षिणी । **तदनन्तरं** शैलेश्यन्त्यक्षणानन्तरम् । '**सिद्धिसाधारणरूपा**' इति स्थाने 'सिद्धिधारणरूपा' इति पाठः सम्यग्, धारयति धर्म इति, सिद्धिं धारयतीति व्युत्पत्तिपर्यवसायिनी चिन्ता । **फलाव्यवधानात्** सिद्धिरूपफलेन सह व्यवधानाभावात्, शैलेश्यन्त्यक्षणानन्तर सिद्धिरूपफलं

चिन्ता, सा च केन सहाव्यवधानं गवेषयेत ? स्वरूपं तु प्रसिद्ध्यनुरोधेन संसारिण्येव पर्यवसाययेत्, न तु सिद्ध इति महान् विशेषः। स्यादेतत्, धर्मपदेऽपि धात्वर्थो धारणसामान्यमेव, तच्च यथा विशेषतात्पर्यवशात् सिद्धिधारणरूपविशेषे पर्यवस्यति, तथा जीवपदार्थोऽपि विशेषे पर्यवस्यन् सिद्ध एव दत्तपदो भविष्यति ? मैवम्– "जीव प्राणधारणे" इत्यत्र प्राणपदसम(भि)व्याहृतधारणस्य भूरिप्रयोगवशादौदयिकप्राणधारण एव पर्यवसानात्, अत एव गोपदस्य नानार्थत्वेऽपि ततो भूरिप्रयोगवशात् सास्नादिमत एवोपस्थितिः, अश्वादेस्तु पदान्तरसमभिव्याहारादिनेति तु तान्त्रिकाः। तदेवमेवम्भूतनयाभिप्रायेण सिद्धो न जीव इति व्यवस्थापितम्। यदि पुनः प्रस्थकन्यायाद् विशुद्धतरनैगमभेदमाश्रित्य प्रागुक्तस्वग्रन्थगाथा व्याख्यायते परैः, तदा न किञ्चिदस्माकं दुष्यतीति किमल्पीयसि दृढतरक्षोदेन ? ॥ ५२ ॥

---

ऐन्द्री ततिः प्रणयपुण्यमिवाङ्कुराग्रैर्यत्पादपद्मकिरणैः कलयत्युदी(र्ण)तम्।
स्नात्राम्भसा दलितयादवदुष्टकष्टं शङ्खेश्वरं प्रभुमिमं शरणीकरोमि ॥ १ ॥

एवं सामान्यतः सप्तानामपि नयानामर्थानुक्त्वा ततः शुद्ध्यशुद्धिज्ञानोपायं वक्तुं प्रक्रमते—

---

सर्वदा वियत इति तद्धारणमात्मनि धर्मपदार्थ इति। इह तु जीवपदार्थे पुन 'धातुगा' इति मूलस्य विवरणम्– **धात्वर्थावच्छिन्नस्वरूपविषयिणी**ति– जीवधात्वर्थो यः प्राणधारणलक्षणस्तदवच्छिन्न यदात्मस्वरूपं तद्विषयिणीत्यर्थः। **सा च** धात्वर्थावच्छिन्नस्वरूपविषयिणी चिन्ता पुन। **केन सहे**ति–फलस्य कारणप्रभवत्वेन कारणस्य फलसाधनत्वेन तयोरव्यवधानस्यावश्यम्भावेन तत्रैकस्यापरेण सहाव्यवधानचिन्तासम्भवेऽपि प्रकृते चिन्ताविषयस्य धात्वर्थस्वरूपावच्छिन्नस्य फलसाधनभावेन चिन्ताया अविषयत्वेन केनापि सहाव्यवधानाकाङ्क्षाया अनुदयेन व्यवधानगवेषणाया अप्रसरादित्यर्थः। **स्वरूपं त्व**िति–जीवधात्वर्थस्वरूपं पुन', "जीव प्राणधारणे" इत्यत्र प्राणशब्दस्य सामान्यतः प्राणवचनत्वेऽपि लौकिकपरीक्षकाणामविगानेन द्रव्यप्राणवाचित्वेन प्रसिद्धतया तदनुरोधेन द्रव्यप्राणधारणलक्षण तत् संसारिमात्रगतं न तु सिद्धगतमित्यर्थ.। **इति** एवं स्वरूपो धर्मशब्द-जीवशब्दयोर्महान् विशेष.। अत्र पर शङ्कते–**स्यादेतदि**ति। **तच्च** धारणसामान्यं च, अन्यत् सुगमम्,। समाधत्ते– **मैवमि**ति। **अत एव** सामान्यस्य यत्किञ्चिद्विशेषस्वरूपमादाय पर्यवसानसम्भवेऽपि सामान्यवाचिशब्दस्य यस्मिन्नेव विशेषे भूरिप्रयोगस्त विशेषमुपादायैव सामान्यस्य पर्यवसानमित्यस्य युक्तत्वादेव। **नानार्थत्वेऽपि** किरण-वाणीप्रभृत्यनेकार्थवाचकत्वेऽपि। **ततः** गोपदात्। **अश्वादेस्त्व**िति– गच्छतीति गौरिति व्युत्पत्तिलभ्यगमनकर्तृत्वस्याश्वादौ सत्त्वेऽपि तद्वाचकाश्वादिपदासमभिव्याहृतगोपदान्नाश्वादेरुपस्थितिः किन्तु सास्नादिमत एवोपस्थितिः, अश्वादिपदसमभिव्याहृतगोपदात् पुनरश्वादेरुपस्थितिरित्येवं तान्त्रिका आमनन्तीत्यर्थः। उपसंहरति– **तदेवमि**ति। **प्रस्थकन्यायात्** प्रस्थकवसतिप्रदेशादिकं समाश्रित्य नैगमादिनयमननभेदोपपादकयुक्ते.। **प्रागुक्तग्रन्थगाथा** "तिकाले च" इति गाथा। **परैः** दिगम्बरै.। **अस्माकं** श्वेताम्बराणाम् ॥ ५२ ॥

इत्थ नयार्थमननं मम जिनप्रवरश्रीशङ्खेश्वरभक्तिभरादेवेत्यवेदयितु ग्रन्थमध्यमङ्गलस्वरूपा श्रीशङ्खेश्वरप्रभुस्तुतिं प्रथ्नाति– **ऐन्द्री ततिरि**ति– अङ्कुराग्रैरिव यत्पादपद्मकिरणैरुदितं प्रणयपुण्यमैन्द्री ततिः कलयति, तच्छब्दस्य यच्छब्दश्रुतिबलादायातत्वेन तमिमं स्नात्राऽम्भसा दलितयादवदुष्टकष्ट शङ्खेश्वरं शरणीकरोमीत्यन्वयः। **ऐन्द्री** इन्द्रसम्बन्धिनी ततिः– पङ्क्तिः, इन्द्रसमूह इति वक्तव्ये ऐन्द्री ततिरिति यदुक्तं तेन 'ऐँ' इति सरस्वतीमन्त्रस्य स्वगतकवित्वविरवावन्ध्यकारणस्य मङ्गलतयाऽवस्थानमादृतमिति। **यत्पादे**ति–यस्य भगवतः श्रीशङ्खेश्वरस्य पादाविव पद्मं तस्य किरणैस्तत्र नम्रीभूते शिरसि पतितैः, **अङ्कुराग्रैरिव** क्षेत्र-भू-रेणवाच्छादितबीजाङ्कुरस्योपरि किञ्चिद्दृश्यमानाग्रभागसदृशैः, **प्रणयपुण्यं** भक्तिभररचितप्रणतिप्रभवपुण्यम्, **उदितम्(उदीर्णम्)** उदयमागतं फलप्रदानाभिमुखमिति यावत् **कलयति** जानीते, **तमिमं**

**उक्ता नयार्थास्तेषां ये, शुद्ध्यशुद्धी वदेत् सुधीः।**
**ते प्रदेश-प्रस्थकयोर्वसतेश्च निदर्शनात् ॥ ५३ ॥**

**नयामृत०**—उक्ता इति। स्पष्टोऽयम्, नवरं निदर्शनादिति जात्यपेक्षमेकवचनम्, प्रदेश-प्रस्थक-वसतिदृष्टान्तैर्नयानां शुद्ध्यशुद्धी विभावनीये इत्यर्थः ॥ ५३ ॥

तत्र पूर्वं प्रदेशदृष्टान्तं विवेचयति। तथाहि—

**धर्मा-ऽधर्मा-ऽऽकाश-जीव-स्कन्धानां नैगमो नयः।**
**तद्देशस्य प्रदेशश्चेत्याह षण्णां तमुच्चकैः ॥ ५४ ॥**

**नयामृत०**—धर्मेत्यादि। नैगमो नयः धर्मास्तिकाया-ऽधर्मास्तिकाया-ऽऽकाशास्तिकायजीवास्तिकायस्कन्धानां तद्देशस्य [च] प्रदेश इति षण्णां तम्-प्रदेशमुच्चकैः स्वमतनिर्बन्धेनाह ॥ ५४ ॥

**दासेन मे खरः क्रीतो, दासो मम खरोऽपि मे।**
**इति स्वदेशे स्वाभेदात्, पञ्चानामाह सङ्ग्रहः ॥ ५५ ॥**

**नयामृत०**—दासेनेति। सङ्ग्रहनयस्तु 'दासेन मे खरः क्रीतो, दासो मम खरोऽपि मे' इति न्यायात् स्वदेशे—धर्मास्तिकायादिदेशे, स्वाभेदात्—धर्मास्तिकायाद्यभेदात् पञ्चानां प्रदेशमाह, षण्णां भेदानां पञ्चसु सङ्ग्रहादत्र सङ्ग्रहस्यान्वर्थत्वम्, क्रयजन्यं दासनिष्ठं खरस्वामित्वं यथा परम्परासंबन्धेन तत्स्वामिनिष्ठतया सङ्ग्रहीतुं शक्यं तथा धर्मास्तिकायादिदेशवृत्तिप्रदेशाश्रयत्वं परम्परासम्बन्धेन धर्मास्तिकायादिनिष्ठतयेति परमार्थः। पञ्चानां वृक्षाणां तद्देशस्य च 'छाया' इत्यत्रेव देश्यन्वययोग्ये देशा-

---

शङ्खेश्वरं प्रभुम्, स्नात्राऽम्भसा स्नानजलेन, दलितं विनाशितं, यादवानां यदुवंशप्रभवाणा क्षत्रियाणां, दुष्टकष्टं येन तथाभूतम्, शरणीकरोमि तत्प्रसादत एव ममातिगम्भीरनयरहस्याविर्भूतिरतस्तं प्रणतोऽस्मीति ॥ ५२ ॥

त्रिपञ्चाशत्तमपद्यमवतारयति—**एवमिति**— अनन्तरदर्शितप्रकारेणेत्यर्थः। विवृणोति—**उक्ता इतीति**। श्लोकोऽयं स्फुटार्थत्वाद् व्याख्यानमर्हतीत्याह—**स्पष्टोऽयमिति**। **नवरं** केवलम्। प्रदेश-प्रस्थक-वसतीनां निदर्शनानां बहुत्वान्निदर्शनेभ्य इति बहुवचने प्रयोक्तव्ये **निदर्शनादित्येकवचनं** यदुक्तं तज्जात्यपेक्षया, व्यक्त्यपेक्षया तु बहुवचनेनैव भवितव्यम्, ततश्च योऽर्थो भवति तमुपदर्शयति—**निदर्शनादितीति** ॥ ५३ ॥

चतुष्पञ्चाशत्तमपद्यमवतारयति—**तत्रेति**—तेषु प्रदेश-प्रस्थक-वसतिदृष्टान्तेषु मध्य इत्यर्थः। विवृणोति—**धर्मेत्यादीति**। तद्देशस्य धर्मास्तिकायादिदेशस्य ॥ ५४ ॥

देशस्य देशिनोऽभिन्नत्वाद् धर्मास्तिकायादिपञ्चाना प्रदेश इति सङ्ग्रहाभिमतोपदर्शकं **"दासेन"** इत्यादिपञ्चपञ्चाशत्तमपद्य विवृणोति—**दासेनेतीति**। धर्मास्तिकायादिषण्णा प्रदेश इति नैगमोऽभ्युपगच्छति, सङ्ग्रहस्तु देशदेशिनोरभेदाश्रयणात् षण्णा पञ्चसु सङ्ग्रहात् पञ्चाना प्रदेश इत्यभ्युपैति, षण्णा पञ्चसु यत् सङ्ग्रहणं तत एवैतद्विषयेऽन्वर्थत्व तत्प्रतिपादकसङ्ग्रहवचनस्येत्याह—**षण्णां भेदानामिति**। **अत्र** प्रदेशाभ्युपगमे। दासेनेत्यादिन्यायार्थं सङ्गमयति—**क्रयजन्य मिति**। **परम्परासम्बन्धेन** स्वाश्रयदासस्वामित्वसम्बन्धेन, परम्परासम्बन्धेन स्वाश्रयदेशसम्बन्धित्वसम्बन्धेन, तद्घटकसम्बन्धश्च तादात्म्यम्। सङ्ग्रहनयमते षण्णां प्रदेश इति यत्र भवति तत्र देशिनोऽन्वययोग्ये निराकाङ्क्षत्वाद्देशानां नान्वय इति नियमादेव, यथा पञ्चाना वृक्षाणामन्वययोग्याया छायाया निराकाङ्क्षत्वान्न वृक्षदेशान्वय इति पञ्चानां वृक्षाणा तद्देशस्य च छायेति न भवतीत्येवं मन्यमानानामन्याचार्याणा मतमुपदर्शयति—**पञ्चानां वृक्षाणामिति**। **सङ्ग्रहनयमतेन**

न्वयस्य निराकाङ्क्षत्वात् सङ्ग्रहनयमतेन षण्णां प्रदेश इत्यन्ये ॥ ५५ ॥

**व्यवहारस्तु पञ्चानां, साधारण्यं न वित्तवत् ।**
**इति पञ्चविधो वाच्यः, प्रदेश इति मन्यते ॥ ५६ ॥**

**नयामृत०**—व्यवहारस्त्विति । व्यवहारनयस्त्विति मन्यते—यथा पञ्चानां वित्ते साधारण्यं स्वामित्वं, तथा प्रदेशेन साधारण्यं पञ्चवृत्तित्वमिति, पञ्चानां प्रदेश इति न वाच्यम्, किन्तु पञ्चविधः प्रदेश इति वाच्यमिति । पञ्चानां प्रदेश इति यदि पञ्चत्वपर्याप्तिमद्वृत्तित्वमादाय प्रयुज्यते, तदा न तत्र कुत्रापि प्रदेश इत्ययोग्यत्वम् । यदि च पञ्चत्वाश्रयवृत्तित्वमादाय प्रयुज्यते, तदा पञ्चानां धर्मास्तिकायप्रदेश इत्यपि स्यादित्येवं सङ्ग्रहमतं दूषणीयमित्येतत्तात्पर्यम् । नन्वेवं घट-पटयो रूपमित्यपि न स्यादिति चेत्? न स्यादेव, समुदितवृत्तित्वबोधायैव व्यवहारसामर्थ्यात्, घटपटोभयसम्बन्धिना

इत्यत्र 'सङ्ग्रहनयमते न' इत्येव छेदः । यदि देश-देशिनोर्नाभेदः किन्तु भेद एव, तथा सति वृक्षाणा परस्परविभिन्नाना छायाऽपि विभिन्नैव, अथापि छायात्वेनैकरूपेणैकीकृता छाया सर्वेषामन्वययोग्या भवति, न च तत्र निराकाङ्क्षता. तथा देशस्यापि भिन्नस्य भिन्ना छाया स्यादेव तदन्वययोग्या, तत्रापि साकाङ्क्षता न काकभक्षितेति देश-देशिनोरभेदादेव यैव देशिच्छाया सैव देशच्छायेत्यत एव पञ्चाना वृक्षाणा तद्देशस्य च च्छायेति न भवति तथैव प्रकृतेऽपीत्यस्वरस **'अन्ये'** इत्युक्त्या सूचित ॥ ५५ ॥

यथा धनस्यैकस्यानेकस्वामित्वं तथा नैकस्य प्रदेशस्यानेकसम्बन्धित्वमिति धर्मास्तिकायादीना पञ्चानां परस्परविभिन्नप्रदेशाना नैकप्रदेशकत्वमिति धर्मास्तिकायस्य प्रदेशोऽधर्मास्तिकायस्य प्रदेश इत्येव पञ्चविध. प्रदेश इत्येव वक्तव्यम्, न तु धर्मास्तिकायादीनां पञ्चानां प्रदेश इति व्यवहारनयोऽभिमन्यते, तन्मन्तव्योपदर्शकं षट्पञ्चाशत्तमपद्य विवृणोति— **व्यवहारस्त्विती**ति— अस्य 'इति मन्यते' इत्यनेनान्वयमुल्लिखति—**व्यवहारनयस्त्विति मन्यते** इति । 'मन्यते' इत्यस्य कर्म मूलोक्तं स्पष्टयति— यथा दृष्टान्ते साधारण्यं स्वामित्व दार्ष्टान्तिके वृत्तित्वं तदित्याह— **साधारण्यं स्वामित्वमिति** । '**प्रदेशेन** ' इत्यत्र 'प्रदेशे न' इति बोध्यम । प्रदेशे पञ्चाना वृत्तित्वं नेत्यस्य फलितमाह— **पञ्चानां प्रदेश इति न वाच्यमिति** । तर्हि किं वाच्यमिति पृच्छति—**किन्त्विति** । व्यवहारनयतात्पर्यमाविष्करोति— **पञ्चानामिति**— पञ्चाना प्रदेश इति यत् सङ्ग्रहस्य मतं तत्र यदि धर्मास्तिकायादिपञ्चगतपञ्चत्वसङ्ख्यापर्याप्तिमन्निरूपितवृत्तित्ववान् प्रदेश इत्यर्थोऽभिप्रेतस्तदा तस्यायोग्यत्वान्न सम्भवः, यतो धर्मास्तिकायस्य प्रदेशो धर्मास्तिकाय एव वर्तते, नाधर्मास्तिकायादौ, तथाऽधर्मास्तिकायस्य प्रदेशोऽधर्मास्तिकाय एव वर्तते, इत्येवं प्रदेशमात्रस्य धर्मास्तिकायादावेकैकस्मिन्नेव वृत्तित्व न तु धर्मास्तिकायादिपञ्चगतपञ्चत्वसङ्ख्यावच्छिन्ननिरूपितपर्याप्तिसम्बन्धावच्छिन्नवृत्तित्वं कस्यापि प्रदेशस्येति तादृशार्थविवक्षाया पञ्चाना प्रदेश इति न सम्भवति, यदि च पर्याप्तिसम्बन्धमनादृत्य निरुक्तपञ्चत्वाश्रयनिरूपितवृत्तितावान् प्रदेश इत्यर्थ एव परिगृह्यते तदा पञ्चत्वाश्रयधर्मास्तिकायाद्येकैकनिरूपितवृत्तित्वस्य धर्मास्तिकायप्रदेशादावेकैकस्मिन् सम्भवेन योग्यत्वात् पञ्चाना प्रदेश इति प्रयोगः सम्भवति, किन्तु निरुक्तपञ्चत्वाश्रयधर्मास्तिकायनिरूपितवृत्तित्व धर्मास्तिकायप्रदेशे वर्तत इति योग्यत्वाद् धर्मास्तिकायादिपञ्चानां धर्मास्तिकायप्रदेश इति प्रयोगोऽप्यापद्यत इत्यत. पञ्चाना प्रदेश इति सङ्ग्रहमत न समीचीनमिति तात्पर्यमित्यर्थः । ननु यथा नैकस्य कस्यापि प्रदेशस्य धर्मास्तिकायादिपञ्चवृत्तित्वमिति पञ्चाना प्रदेश इति न सम्भवति तथा नैकस्यापि रूपस्य घट-पटोभयनिरूपितवृत्तित्वम्, घटरूप घट एव वर्तते न तु पटे, पटरूप पट एव वर्तते न तु घटे, इति घट-पटयो रूपमित्यपि प्रयोगो व्यवहारनयमते न स्यादित्याशङ्कते— **नन्वेवमिति** । अत्रेष्टापत्तिमेव समाधानमाह— **न स्यादेवेति**— व्यवहारनयमते घट-पटयो रूपमिति न भवत्येवेत्यर्थ. । ननु घट-पटगतद्वित्वाश्रयघटनिरूपितवृत्तित्वस्य घटरूपे निरुक्तद्वित्वाश्रयपटनिरूपितवृत्तित्वस्य पटरूपे च सत्त्वात् कथं न तादृशार्थमुपादाय घट पटयो रूपमिति प्रयोग इत्यत आह— **समुदितेति**— व्यवहारनये घट-पटयो रूपमिति वाक्यस्य घट-पटगतद्वित्वपर्याप्त्यधिकरणनिरूपितवृत्तित्ववद्रूपमित्याकारकबोधमुत्पादयितुमेव सामर्थ्यात्, निरुक्तद्वित्वपर्याप्त्यधिकरणनिरूपितवृत्तित्वं च रूपे न कस्मिन्नपीत्यतो घट-पटयो रूपमिति

उभयप्रकारं रूपमित्याकारस्यैव व्यवहारनयजन्यबोधस्य तत्रोपपत्तेः ॥ ५६ ॥

पञ्चप्रकारः प्रत्येकं, पञ्चविंशतिधा भवेत् ।
प्रत्येकवृत्तौ प्राक्पक्षः, स्याद् गेहेष्विव वाजिनाम् ॥ ५७ ॥

नयामृत०—पञ्चप्रकार इति । पञ्चविधः प्रदेश इति यद् व्यवहारनयेन स्वीक्रियते, तत्र किं पञ्चविधत्वं ? पञ्चप्रकारत्वमिति चेत् ? कः प्रकारः ?, सङ्ख्या वा १, बुद्धिविशेषविषयत्वं वा २, भेदो वा ३ ? । नाद्यः—अनन्तेषु प्रदेशेषु पञ्चसङ्ख्यावधारणाऽसिद्धेः, न द्वितीयः पञ्चत्वप्रकारकबुद्धिविषयत्वस्य प्रत्येकमभाविनः पञ्चस्वप्यभावात्, प्रत्येकं भावे चैकैकः प्रदेश पञ्चविध इति पञ्चविंशतिधा भवेत् । न च सामान्यतस्तदन्वयान्न बाध इति वाच्यम्, विशेषविनिर्मोकेण तदसिद्धेः, यदि च

न प्रयुज्यत इत्यर्थः । यदि घट-पटयो रूपमिति न प्रयुज्यते तर्हि कीदृग्व्यवहारस्तत्र भवतीत्यपेक्षायामाह—घट-पटोभयसम्बन्धिनेति—रूपस्यैकस्य घटात्मक यत् सम्बन्धि यच्चापरस्य रूपस्य पटात्मक सम्बन्धि तद्रूपोभयसम्बन्धिना घटस्य रूपं पटस्य रूपमित्येवमुभयप्रकार रूपमित्याकारकस्यैव बोधस्य व्यवहारनयजन्यस्य घट-पटयो रूपमिति वाक्यस्थले उपपत्तेरित्यर्थः ॥ ५६ ॥

पञ्चाना प्रदेश इति सङ्ग्रहनयमत दूषयित्वा पञ्चविधः प्रदेश इत्येव तत्र वाच्य इति स्वमतं यद् व्यवहारनयेन समर्थित तद् विकल्पकवलितत्वान्न परीक्षकपरीक्षाक्षेत्रमिति ऋजुसूत्रवक्तव्योपदर्शकं सप्तपञ्चाशत्तमपद्य विवृणोति—पञ्चप्रकार इतीति । तत्र प्रदेशे । पञ्चविध प्रदेश इति वाक्येन पञ्चप्रकारत्वलक्षणं पञ्चविधत्वं प्रतिपादयितुमिष्टमित्याशङ्कते—पञ्चप्रकारत्वमिति चेदिति । तत्र किं पञ्चविधत्वमिति पृच्छाया तदुत्तरमाशङ्कितं तद् विकल्प्य दूषयति—कः प्रकार इति—पञ्चप्रकारत्वमित्यत्र प्रकारशब्दवाच्य. क इत्यर्थः । प्रकारपदवाच्या सङ्ख्याऽभिमता, तथा च पञ्चप्रकारः प्रदेश इत्यनेन पञ्चसङ्ख्यकः प्रदेश इत्युक्त स्यात्, तदपि न युक्तमित्याह—नाद्य इति । सर्वं हि वाक्यं सावधारणमिति नियमेन पञ्चसङ्ख्यक एव प्रदेश इत्युक्तवाक्यस्वरूप भवेत्, ततश्च तेन वाक्येन प्रदेशे यत् पञ्चसङ्ख्याऽवधारण तन्न युज्यते प्रदेशानामनन्तसङ्ख्यकत्वादिति निषेधहेतुमुपदर्शयति—अनन्तेष्विति । पञ्चप्रकारत्वमित्यनेन पञ्चत्वप्रकारकबुद्धिविशेषविषयत्वं प्रतिपादयितुमभिलषितमित्यपि न युक्तमित्याह—न द्वितीय इति । प्रत्येकावृत्तिधर्मस्य समुदायावृत्तित्वमिति नियमेन पञ्चत्वस्य प्रत्येकं प्रदेशेऽभावेन प्रदेशपञ्चकेऽप्यभावादिति पञ्चत्वप्रकारकबुद्धिविशेषत्वस्यापि प्रत्येक प्रदेशेऽसत्तस्तत्पञ्चकेऽप्यसत्त्वादिति न पञ्चत्वप्रकारकबुद्धिविशेषविषय. प्रदेश इति सम्भवति, यदि च प्रत्येकमपि प्रदेशे पञ्चत्वप्रकारकबुद्धिविशेषविषयत्वलक्षणं पञ्चविधत्वमिष्टं तदा धर्मास्तिकायस्य प्रदेश. पञ्चविधोऽधर्मास्तिकायस्य प्रदेशः पञ्चविधस्तथाऽऽकाशास्तिकाय-पुद्गलास्तिकाय-जीवास्तिकायाना प्रदेशा अपि प्रत्येकमुक्तपञ्चविधत्वाक्रान्ता इति पञ्चविंशतिविध. प्रदेश इति प्रसज्यत इति निषेधहेतुमुपदर्शयति—पञ्चत्वप्रकारकेति । प्रत्येकमभाविन. एकैकधर्मास्तिकायादिप्रदेशव्यक्तावसतः । पञ्चस्वपि धर्मास्तिकायादिप्रदेशपञ्चकेष्वपि । प्रत्येकं भावे च एकैकधर्मास्तिकायादिप्रदेशव्यक्तौ पञ्चत्वप्रकारकबुद्धिविषयत्वस्य सत्त्वे तु । एकैक इति—धर्मास्तिकायप्रदेशः पञ्चविधः, अधर्मास्तिकायप्रदेश. पञ्चविध इत्येव प्रत्येकं धर्मास्तिकायादिप्रदेशपञ्चकाना पञ्चविधत्वे पञ्चसङ्ख्यावता प्रत्येक पञ्चाख्या गुणिताना पञ्चविंशतिविधत्वं स्यादित्यर्थः । ननु प्रत्येकप्रदेशव्यक्तिगणनयाऽनन्तसङ्ख्यावत्सु प्रदेशेषु पञ्चत्वसङ्ख्याया बाधादन्वयासम्भवेऽपि धर्मास्तिकायप्रदेशत्वेन धर्मास्तिकायप्रदेश एकः, अधर्मास्तिकायप्रदेशत्वेनाधर्मास्तिकायप्रदेशस्तदन्यो द्वितीय., आकाशास्तिकायप्रदेशत्वेनाकाशास्तिकायप्रदेशस्ताभ्यामन्यस्तृतीयः, पुद्गलास्तिकायप्रदेशत्वेन पुद्गलास्तिकायप्रदेशस्तेभ्योऽन्यश्चतुर्थः, जीवास्तिकायप्रदेशत्वेन जीवास्तिकायप्रदेशस्तेभ्योऽन्यः पञ्चम इति कृत्वा प्रदेशेषु पञ्चविधत्वस्यान्वयसम्भवान्न बाध इत्याशङ्क्य प्रतिक्षिपति—न चेति—अस्य 'वाच्यम्' इत्यनेनान्वयः । धर्मास्तिकायस्य यावत्य. प्रदेशव्यक्तयस्ताभ्योऽन्यद् धर्मास्तिकायप्रदेशसामान्यं नास्त्येव, एवमधर्मास्तिकायादिप्रदेशसामान्यमप्यधर्मास्तिकायादिप्रदेशव्यक्तिभ्यो भिन्नं नास्त्येवेत्यनन्ता एव प्रदेशव्यक्तयो न सामान्यतोऽपि पञ्चत्वसङ्ख्यापरिकलिता इति नोक्तदिशा निरुक्तपञ्चविधत्वस्यान्वयसम्भव इति निषेधहेतुमुपदर्शयति—विशेषविनिर्मोकेणेति—

'गेहेषु शतमश्वाः' इत्यत्रेव प्रत्येकवृत्तित्वान्वयः प्रकृते स्वीक्रियते, तदा प्राक्पक्षः—पञ्चानां प्रदेश इति सङ्ग्रहनयपक्ष एव परिष्कृतः स्यात्, तथा च स्वप्रतिज्ञासंन्यासो निग्रहस्थानम् ॥ ५७ ॥

**प्रत्येकवृत्तिः साकाङ्क्षा, बहुत्वेनेति सोऽप्यसत् ।**

**ऋजुसूत्रस्ततो ब्रूते, प्रदेशभजनीयताम् ॥ ५८ ॥**

**नयामृत०**—प्रत्येकेति । किञ्च 'गेहेषु शतमश्वाः' इत्यत्र गेहवृत्तिबहुत्वव्यापकैकत्वावच्छिन्न-पर्याप्तवृत्त्यवच्छेदकैकत्व[वत्]पञ्चकवान् प्रदेश इति बोधो वाच्यः, स च न सम्भवति, पञ्चपद-

विशेषपरित्यागेनेत्यर्थः । **तदसिद्धेः** सामान्यासिद्धेः । नन्वेकस्मिन् गेहे एकोऽश्वो द्वितीयेऽस्मिन् गेहे द्वितीयोऽश्व इत्येवं गृहाणां शतेऽश्वानां शतस्य वृत्तित्वमुपादाय गेहेषु शतमश्वा इति प्रयोगो यथा निर्वहति तथा एकस्मिन् धर्मास्तिकाये एकः प्रदेशोऽधर्मास्तिकाये द्वितीयः प्रदेश इत्येव प्रत्येकं धर्मास्तिकायादिवृत्तित्वं प्रदेशगतमादाय धर्मास्तिकायादीना पञ्चविधः प्रदेश इति प्रयोग उपपद्यत इत्यत आह– **यदि चेति** । **प्रत्येकवृत्तित्वान्वयः** धर्मास्तिकायादिप्रत्येकनिरूपितवृत्ति-त्वस्य प्रदेशेऽन्वयः । **प्रकृते** धर्मास्तिकायादीनां पञ्चविधः प्रदेश इत्यत्र । **'प्राक्पक्षः'** इति मूलस्य विवरणम्– **पञ्चानां प्रदेश इति सङ्ग्रहनयपक्ष एव परिष्कृत** इति– परिष्कारश्च धर्मास्तिकायादीना सम्बन्धिना पञ्चत्वसङ्ख्याकलित-त्वात् प्रदेशानामपि पञ्चविधत्वमिति । भवतु सङ्ग्रहनयपक्षपरिष्कार एव, कोऽत्र दोष इत्यत आह– **तथा चेति**- एवं सतीत्यर्थः । **स्वप्रतिज्ञासंन्यासः** स्वस्य व्यवहारनयस्य या प्रतिज्ञा 'पञ्चाना प्रदेशान्वयित्वासम्भवात् पञ्चाना प्रदेश इति न सम्भवति किन्तु पञ्चविध. प्रदेश इत्येव युज्यते' इत्येवरूपा तस्या सन्यासः परित्याग., यत. प्रत्येकवृत्तित्वान्वया-ङ्गीकारे पञ्चानां प्रदेश इति सम्भवत्येवेति । **निग्रहस्थानं** निग्रहस्थानविशेषः, येन दोषेण वादिनो निग्रहो भवति स दोषो निग्रहस्थानमिति गीयते ॥ ५७ ॥

अपि च, पञ्चानां प्रदेश इत्यत्र धर्मास्तिकायादिप्रत्येकवृत्तित्वस्य प्रदेशेऽन्वयो निराकाङ्क्षत्वान्न सम्भवति, बहुवचनान्त-पदोपस्थितार्थे एव प्रत्येकवृत्तित्वान्वयो भवतीत्यतो बहुवचनान्तविशेष्यवाचकपदघटितवाक्यस्यैव तथाऽन्वयबोधने साकाङ्क्षत्वात् सामर्थ्यम्, गेहेषु शतमश्वा इत्यत्र प्रत्येकगृहवृत्तित्वस्य प्रत्येकाश्वान्वयो युज्यतेऽश्वपदस्य बहुवचनान्तत्वेन साकाङ्क्षत्वात्, प्रकृतेऽपि पञ्चाना प्रदेशा इत्येवं यदि वाक्यस्वरूप भवेद्, भवेत् तदा साकाङ्क्षत्वात् तस्योक्तान्वयबोधन-सामर्थ्यं, न तु पञ्चानां प्रदेश इत्यत्र विशेष्यवाचकप्रदेशपदस्य बहुवचनान्तत्वं समस्तीत्यतः 'स्याद्धर्मास्तिकायस्य प्रदेशः, स्यादधर्मास्तिकायस्य प्रदेशः, स्यादाकाशास्तिकायस्य प्रदेश., स्यात् पुद्गलास्तिकायस्य प्रदेशः, स्याज्जीवास्तिकायस्य प्रदेशः' इत्येव विकल्पनीय इति ऋजुसूत्रे ब्रवीतीत्येतदुपदर्शकमष्टपञ्चाशत्तमपद्य विवृणोति– **प्रत्येकेतीति** । प्रत्येकवृत्तिः साकाङ्क्षेति व्याख्यातुं तदवतारणोपायोपोद्घातावष्टमाश्रयति– **किञ्चेति** । **"गेहवृत्तिबहुत्वव्यापकैकत्वावच्छिन्नपर्याप्तवृत्त्यवच्छेद-कैकत्व(वत्) पञ्चकवान् प्रदेश इति बोधो वाच्यः"** इत्यस्य स्थाने "गेहवृत्तिबहुत्वव्यापकैकत्वावच्छिन्नपर्याप्त-वृत्त्यवच्छेदकैकत्ववन्तः शतत्वसङ्ख्यावन्तोऽश्वा इति बोधवत्, धर्मास्तिकायादीना पञ्चाना प्रदेश इत्यत्र धर्मास्तिकायादि-वृत्तिपञ्चत्वव्यापकैकत्वावच्छिन्नपर्याप्तवृत्त्यवच्छेदकैकत्ववन्तः प्रदेशा इति बोधो वाच्य." इति पाठ· समीचीन., तस्य चायमर्थः– गेहवृत्ति यद् बहुत्व निरूपकत्वसम्बन्धेन तद्व्यापिका या एकत्वावच्छिन्नपर्याप्तिसम्बन्धावच्छिन्ना वृत्तयस्तासाम-वच्छेदकानि यान्येकत्वानि तद्वन्तः शतत्वसङ्ख्यावन्तोऽश्वा इत्याकारको बोधो यथा गेहेषु शतमश्वा इत्यत्र भवति तथा धर्मास्तिकायादिवृत्ति यत् पञ्चत्वं निरूपकत्वसम्बन्धेन तद्व्यापिका या एकत्वावच्छिन्नपर्याप्तिसम्बन्धावच्छिन्ना वृत्तयस्तद-वच्छेदकानि यान्येकत्वानि तद्वन्तः प्रदेशा इत्याकारकबोधो धर्मास्तिकायादीना पञ्चाना प्रदेश इत्यत्र व्यवहारनयमतेन वाच्य इति, एतत्सङ्गमनं चेत्थम्– 'गेहेषु शतमश्वाः' इत्यत्र बहुवचनार्थस्य बहुत्वस्य प्रकृत्यर्थे गेहे पर्याप्तिसम्बन्धेन विशेषणीभूतस्य प्रकृते गेहवृत्तिबहुत्वशब्देन ग्रहणम्, तच्च गेहेषु वर्तते, तत्राश्वगता याः पर्याप्तिसम्बन्धावच्छिन्ना वृत्तितास्ता निरूपकतासम्बन्धेन वर्तन्त इति ता. पर्याप्तिसम्बन्धावच्छिन्नवृत्तितात्वेन रूपेण व्यापिका भवन्ति, वृत्ति-तावच्छेदकपर्याप्तिसम्बन्धश्च तत्तद्गेहगतैकत्वावच्छेदेनेति भवन्ति ता गेहवृत्तिबहुत्वव्यापिकाः, तत्तद्गेहगतैकत्वावच्छिन्न-

समभिव्याहृतबहुवचनान्तप्रदेशपदोपादान एव तथाबोधसम्भवात्, यदि च गृहशतेऽश्वा इतिवदत्र तात्पर्यविशेषेणोक्तबोधसम्भव इतीष्यते तथापि प्रत्येकवृत्तिबहुत्वेन– बहुवचनेन साङ्काङ्क्षेति सोऽपि पक्षोऽसन्, नह्युक्तबोधार्थं 'गृहशतेऽश्वाः' इतिवद् 'गृहशतेऽश्वः' इति कश्चित् प्रयुङ्क्ते, तद्वत् पञ्चानां प्रदेश इत्युपदर्शितदिशाऽपि न युक्तः प्रयोगः, इति निर्गलितार्थः । तृतीयस्तु पक्षो न युक्तः– उक्तातिरिक्तभेदासिद्धेः । तत ऋजुसूत्रनयः प्रदेशभजनीयतां ब्रूते– स्याद्धर्मास्तिकायस्य प्रदेशः स्यादधर्मास्तिकायस्येत्यादि विकल्पयतीत्यर्थः ॥ ५८ ॥

**भजनाया विकल्पत्वाद्, व्यवस्थैवमपैति तत् ।**
**धर्मे धर्मः प्रदेशो वा, धर्म इत्यादिनिर्णयः ॥ ५९ ॥**

पर्याप्तिसम्बन्धावच्छिन्नास्ता. पुनस्तत्तदश्वगतैकत्वावच्छेदेनाश्वेषु वर्तन्त इति तदवच्छेदकानि तत्तद्गेहगततत्तदश्वगतान्येकत्वानि, तद्वन्त. शतत्वसङ्ख्यावन्तोऽश्वा भवन्तीति तद्विषयको बोधो निरुक्तवाक्यादुपपद्यते प्रत्येकं गेहे प्रत्येकमश्वस्य वृत्तित्वमुपादायेति, एव धर्मास्तिकायादीना पञ्चाना प्रदेश इत्यत्र धर्मास्तिकायादिगतं यत् पञ्चत्वं पर्याप्तिसम्बन्धेन तदधिकरणे धर्मास्तिकायादौ पर्याप्तिसम्बन्धावच्छिन्नाः प्रदेशगता वृत्तिता निरूपकतासम्बन्धेन वर्तन्त इति ता धर्मास्तिकायादिगतपञ्चत्वव्यापिका भवन्ति, तदवच्छेदकीभूतपर्याप्तिसम्बन्धस्यावच्छेदकं च धर्मास्तिकायादिगतमेकत्वमिति भवन्ति ता धर्मास्तिकायादिपञ्चत्वव्यापिकाः, एकत्वावच्छिन्नपर्याप्तिसम्बन्धावच्छिन्नास्ताश्च तत्तत्प्रदेशगतैकत्वावच्छेदेन तत्तत् प्रदेशेषु वर्तन्त इति तादृशवृत्त्यवच्छेदकानि यान्येकत्वानि तद्वन्तः प्रदेशा इति तद्विषयको बोध इति । **स च** धर्मास्तिकायादीना पञ्चाना प्रदेश इति वाक्यप्रभवतयाऽनन्तरमुपदर्शितो बोधश्च । **न सम्भवति** धर्मास्तिकायादीना पञ्चानां प्रदेश इति वाक्यतो न सम्भवति । निषेधे हेतुमाह– **पञ्चेति**– निरुक्तवाक्ये यद् बहुवचनान्तं पञ्चपदं तत्समभिव्याहृतं यद् बहुवचनान्त प्रदेशपदं 'प्रदेशाः' इत्येवंस्वरूप तदुपादाने–एव धर्मास्तिकायादीना पञ्चाना प्रदेशा इत्येवंरूपेणोच्चारणे सत्येव, एवकारेणैकवचनान्तप्रदेशपदोपादानस्य व्यवच्छेदः । **तथाबोधसम्भवात्** प्रत्येकं धर्मास्तिकायादिपञ्चसु प्रत्येकं प्रदेशाना वृत्तित्वमाश्रित्य दर्शितो यो बोधस्तस्योपपत्तेः । ननु 'गृहशतेऽश्वाः' इत्यत्र गृहपद न बहुवचनान्तं तथापि प्रत्येक गृहशतवृत्तित्व प्रत्येकमश्वेषूररीकृत्य 'गेहेषु शतमश्वाः' इति वाक्यप्रभवोपपदर्शितबोधसमानाकारो बोधस्तात्पर्यबलाद् यथा भवति तथा तात्पर्यविशेषबलादत्रापि निरुक्तबोध. स्यादित्यत आह–**यदि चेति** । **अत्र** धर्मास्तिकायादीनां पञ्चाना प्रदेश इति वाक्ये । **तथापि** 'गृहशतेऽश्वाः' इत्यत्र 'गेहेषु शतमश्वा.' इति वाक्यप्रभवबोधसमानाकारबोधस्य तात्पर्यविशेषबलात् सम्भवेऽपि । '**प्रत्येकवृत्तिबहुत्वेन**' इत्यस्य स्थाने 'प्रत्येकवृत्तिर्बहुत्वेन' इति पाठो युक्त. । **प्रत्येकवृत्तिः** प्रत्येक धर्मास्तिकायादिपञ्चसु प्रत्येकं या प्रदेशस्य वृत्तिः सा । '**बहुत्वेन**' इत्यस्य मूलस्य विवरणम्– **बहुवचनेनेति**, प्रदेशपदोत्तरबहुवचनेनेत्यर्थः । **साङ्काङ्क्षेति** स्थाने **साकाङ्क्षेति** पाठो युक्तः, धर्मास्तिकायानां पञ्चानामित्यस्य प्रदेशा इति बहुवचनान्तप्रदेशपदसमभिव्याहाररूपाकाङ्क्षाया सत्यामेव निरुक्तप्रत्येकवृत्तित्वान्वयबोध·, न हि निराकाङ्क्षावाक्यात् तात्पर्यविशेषसहकारेणाप्यन्वयबोधः सम्भवतीत्याशयः । **इति** एतस्मात् कारणात् । **सोऽपि पक्षः** 'गृहशतेऽश्वाः' इति वत् तात्पर्यविशेषेण धर्मास्तिकायादीना पञ्चाना प्रदेश इत्यपि प्रत्येकवृत्तित्वान्वयबोध जनयतीति पक्षोऽपि । **असन्**-अयुक्तः, **सोऽप्यसदिति** पद्यघटकस्थाने 'सोऽप्यसन्' इति पाठः सम्यक् । उक्तपक्षस्यायुक्तत्वमुपपादयति– **नहीति**– अस्य 'प्रयुङ्क्ते' इत्यनेनान्वय· । **उक्तबोधार्थं** प्रत्येकमश्वाना प्रत्येक गृहेऽन्वयबोधार्थम् । **तद्वदिति**– यथा 'गृहशतेऽश्वः' इति न प्रयोगस्तथेत्यर्थ. । **तृतीयस्तु पक्ष** इति–पञ्चविधत्वं पञ्चप्रकारत्वमित्यत्र प्रकारो भेद इति तृतीयविकल्पस्त्वित्यर्थः । **उक्तातिरिक्तेति**– सङ्ख्या-बुद्धिविशेषविषयत्वाभ्यामतिरिक्तस्य भेदस्यासिद्धेरित्यर्थः । **ततः** धर्मास्तिकायादीनां पञ्चविध; प्रदेश इति व्यवहारनयाभिमतस्यायुक्तत्वात् । '**प्रदेशभजनीयतां ब्रूते**' इति मूलस्यार्थमुपदर्शयति– **स्याद्धर्मास्तिकायस्येति** । 'स्यादधर्मास्तिकायस्य' इत्यनन्तरमपि 'प्रदेश.' इत्यनुवर्तते, '**इत्यादि**' इत्यादिपदात् स्यादाकाशास्तिकायस्य प्रदेशः, स्यात् पुद्गलास्तिकायस्य प्रदेशः, स्याज्जीवास्तिकायस्य प्रदेश इत्येतत्त्रितयस्य परिग्रहः ॥ ५८ ॥

**नयामृत०**—भजनाया इति। भजनाया विकल्परूपत्वादेवं सत्येकतरमादाय विनिगन्तुं शक्यत्वात्, व्यवस्था—यो यदीयः प्रदेशः स तदीय एवेतिलक्षणा, अपैति—अपगच्छति, धर्मास्तिकायादिप्रदेशस्याधर्मास्तिकायादित्वेनापि भजनीयत्वप्रसङ्गात्। न च वस्तुनि सत्त्वाऽसत्त्वादिस्याद्वादभजनावदत्रोपपत्तिः, तत्राप्येकान्तासम्बलिताऽनेकान्ताश्रयणे विकल्पमात्रस्य दुर्वारत्वात्; तद्वदेवात्र स्यात्पदेनैकान्तसम्बलनमपि भविष्यतीति चेत्? न—उद्देश्य-विधेयविशेषपर्यवसानेन तस्य वक्ष्यमाण एव पर्यवसानात्, तत्—तस्मात् कारणात्, धर्मे—धर्मास्तिकाये, यः प्रदेशः स धर्मो—धर्मास्तिकाय इति सप्तमीतत्पुरुषेण, धर्मास्तिकायश्चासौ प्रदेशो धर्मास्तिकाय इति कर्मधारयेण वा निर्णयः कर्तव्यः।

एकोनषष्टितम-षष्टितमपद्याभ्यां साम्प्रतनयाख्यस्य प्रथमस्य शब्दनयस्य वक्तव्यमावेदितम्, तत्र प्रथमपद्यं विवृणोति—**भजनाया इतीति**—'स्याद्धर्मास्तिकायस्य प्रदेशः, स्यादधर्मास्तिकायस्य प्रदेशः' इत्येवंरूपाया ऋजुसूत्राभिमतभजनायां इत्यर्थः। '**विकल्पत्वाद्**' इति मूलमधृत्वैव विवृतम्—**विकल्परूपत्वादिति**, '**एवम्**' इत्यस्य विवरणम्—**एवं सतीति**—भजनाया विकल्परूपत्वे सतीत्यर्थः। **एकतरमादायेति** यथा 'यवैर्यजेत, व्रीहिभिर्वा यजेत' इति विकल्पस्थले यवकरणकयागाद् यदेवादृष्टं तदेव व्रीहिकरणकयागादपि, न तु यादृशफलजनकं यवकरणकयागप्रभवमदृष्टं तद्विजातीयफलजनकं व्रीहिकरणकयागप्रभवमदृष्टम्, तथा प्रकृतेऽपि य एव प्रदेशो धर्मास्तिकायस्य स एव प्रदेशोऽधर्मास्तिकायस्यैवमाकाशास्तिकायादेरपि प्रसज्येतेत्यर्थः। एवं च व्यवस्थाविलयः स्यादित्याह—**व्यवस्थेति**। किंस्वरूपा व्यवस्थेत्यपेक्षायामाह—**यो यदीय इति**—यः प्रदेशो धर्मास्तिकायसम्बन्धी स धर्मास्तिकायसम्बन्ध्येव नाधर्मास्तिकायादिसम्बन्धी, एवं यः प्रदेशोऽधर्मास्तिकायसम्बन्धी सोऽधर्मास्तिकायसम्बन्ध्येव न धर्मास्तिकायादिसम्बन्धीत्येवंस्वरूपा व्यवस्थेत्यर्थः। **अपैतीत्यस्य** विवरणम्—**अपगच्छतीति**। तत्र हेतुमाह—**धर्मास्तिकायादीति**—धर्मास्तिकायप्रदेशोऽधर्मास्तिकायीय आकाशास्तिकायीय इत्येवं विकल्पनीयत्वप्रसङ्गादित्यर्थः। ननु यथैकस्मिन्नेव वस्तुनि किञ्चिदपेक्षया सत्त्वं किञ्चिदपेक्षयाऽसत्त्वमित्येवं सत्त्वाऽसत्त्वादिस्याद्वादभजना भवति तथैकस्मिन्नपि प्रदेशे धर्मास्तिकायीयत्वादिभजनोपपत्तिः स्यादित्याशङ्क्य प्रतिक्षिपति—**न चेति**—**अत्र** प्रदेशगतधर्मास्तिकायीयत्वादिविमर्शे। **उपपत्तिः** प्रदेशभजनीयत्वोपपत्तिः। सत्त्वाऽसत्त्वाद्यनेकान्तोऽप्येकत्र वस्तुन्येकान्तः, तस्य चानेकान्तत्वं नयापेक्षयैकान्तत्वं प्रमाणापेक्षयाऽनेकान्तत्वमिति कृत्वा, सर्वथाऽनेकान्तस्यानेकान्तस्यानेकान्तत्वे सत्त्वादेरपि सर्वथैव वस्तुनि सत्त्वासत्त्वापत्त्या सत्त्वादिसंवलिताऽसत्त्वादिलक्षणानैकान्ततैव स्यान्न त्वमुकापेक्षया सत्त्वमेवामुकापेक्षया चासत्त्वमेवेत्येवमेकान्ततापीति यस्य यदपेक्षया सत्त्वं तस्य तदपेक्षयाऽसत्त्वादिकमपीत्येवं विकल्पनीयत्वमेव स्यात्, न तु यस्य यदपेक्षया सत्त्वं तस्य तदपेक्षया सत्त्वमेव, तस्य यदपेक्षयाऽसत्त्वं तस्य तदपेक्षयाऽसत्त्वमेवेत्येवमवधारणात्मकैकान्तानुप्रवेशेन याऽनेकान्तव्यवस्था सा भज्येत, अतः सत्त्वासत्त्वादिस्याद्वादभजनाऽप्येकान्तसंवलिताऽनेकान्तरूपतायामेवोपपन्ना नान्यथा, एवं चैकान्तासवलितानेकान्तस्य सत्त्वादावप्यभावान्न तद्दृष्टान्तेन प्रदेशभजनीयत्वोपपत्तिरिति निषेधहेतुमुपदर्शयति—**तत्रापीति**—सत्त्वासत्त्वादिस्याद्वादभजनायामपीत्यर्थः। ननु यथा सत्त्वासत्त्वादिस्याद्वादे एकान्तसवलनं तथा प्रकृतेऽपि भविष्यतीति प्रदेशभजनीयत्वोपपत्त्या व्यवस्था स्यादित्याशङ्कते—**तद्वदेवेति**—सत्त्वासत्त्वादिस्याद्वादभजनायामेकान्तसवलितानेकान्ताश्रयणवदेवेत्यर्थः। **अत्र** प्रदेशभजनीयत्वे। **स्यात्पदेनेति**—'स्याद्धर्मास्तिकायस्य प्रदेशः' इत्यादिवाक्यघटकस्यात्पदेनेत्यर्थः। य एव प्रदेश उद्देश्यः स एव धर्मास्तिकायसम्बन्धित्वाद् धर्मास्तिकायात्मकत्वाद् वा धर्मास्तिकाय इत्येवं विधेयः, एवं य एव प्रदेश उद्देश्यः स एवाधर्मास्तिकायसम्बन्धित्वादधर्मास्तिकायात्मकत्वाद् वा विधेय इत्येवं स्यात्पदमनुशास्तीत्यसन्मतपर्यवसानमेवेति शब्दनयवादी समाधत्ते—**नेति**। **उद्देश्यविधेयविशेषपर्यवसानेन** 'स्याद्धर्मास्तिकायस्य प्रदेशः' इत्यत्र य उद्देश्यो यश्च विधेयस्तस्मादन्य उद्देश्योऽन्यश्च विधेयः 'स्यादधर्मास्तिकायस्य प्रदेशः' इत्यादावित्येवमुद्देश्यविधेयविशेषपर्यवसानेनेत्यर्थः। **तस्य** 'स्याद्धर्मास्तिकायस्य प्रदेशः, स्यादधर्मास्तिकायस्य प्रदेशः' इत्येवं प्रदेशभजनीयत्वस्य। **वक्ष्यमाण एव** धर्मास्तिकाये प्रदेशो धर्मास्तिकायो वा प्रदेशो धर्मास्तिकाय इत्येवमनन्तरमभिधीयमान एव। **तदिति** मूलस्य विवरणम्—**तस्मात् कारणादिति**—प्रदेशभजनीयत्वे व्यवस्थापगमप्रसङ्गलक्षणकारणादित्यर्थः। ततः कोऽत्र निर्णयः स्यादित्यपेक्षायामाह—**धर्मे** इति, अस्य विवरणम्—**धर्मास्तिकाये** इति—धर्मास्तिकाये प्रदेशो धर्मास्तिकाय इति सप्तमीतत्पुरुषेण निर्णयः कर्तव्यः, **वा** अथवा—धर्मास्तिकायश्चासौ प्रदेशो धर्मास्तिकायप्रदेश इति कर्मधारयेण निर्णयः

एवम्-आदिना 'अधर्मेऽधर्म इति वा प्रदेशोऽधर्मः, आकाशे आकाश इति वा प्रदेश आकाशः' इति द्रष्टव्यम् ॥ ५९ ॥

**जीवे स्कन्धेऽप्यनन्ते, नोशब्दाद् देशावधारणम् ।**
**इति शब्दनयः प्राह, समासद्वयशुद्धिमान् ॥ ६० ॥**

**नयामृत०**—जीव इति । जीवे स्कन्धेऽपि—अपिश्चार्थः, जीवे स्कन्धे चानन्ते नोशब्दाद् देशावधारणं कर्त्तव्यम्, जीवे जीव इति वा प्रदेशो नोजीवः, स्कन्ध इति वा प्रदेशो नोस्कन्ध इत्यभिलापः कर्त्तव्य इत्यर्थः, धर्मास्तिकायादेरैक्यात् तत्तत्प्रदेशस्य धर्मास्तिकायादिरूपता अनतिप्रसक्तेति तथोक्तिः, जीव-स्कन्धयोस्तु प्रतिस्वमनन्तत्वात् कथमधिकृतप्रदेशस्य सकलसन्तानात्मकत्वसम्भव इति विवक्षितप्रदेशे सकलसन्तानैकदेशविवक्षितसन्तानात्मकत्वप्रतिपादनाय नोजीवत्व-नोस्कन्धत्वोक्तिरिति

---

कर्तव्य इत्यन्वयः । धर्मे इति मूलस्य विवरणम्- **धर्मास्तिकाय** इति- अत्र धर्मास्तिकायपदस्य प्रदेशपदेन सप्तमी-तत्पुरुषे कर्मधारये वा समासे धर्मास्तिकायप्रदेश इति भवितुमर्हति, तत्र यद् 'धर्मास्तिकाय' इत्येवाभिधीयते तेना-भिलापेन धर्मास्तिकायस्यैकत्वात् तत्सम्बन्धी तदात्मको वा प्रदेशोऽप्येक एव तद्रूप इति ज्ञापयति, तथा च धर्मास्ति-कायप्रदेशस्य धर्मास्तिकायत्वेन रूपेण निर्णय साम्प्रताख्यशब्दनये इत्याशयः । **एवम्** उक्तरीत्या । '**आदिना** 'इत्यादि' इत्यत्रादिपदेन । **अधर्मे** इति- अधर्मास्तिकाये प्रदेशोऽधर्मास्तिकाय इति सप्तमीतत्पुरुषेण, अधर्मास्तिकायश्चासौ प्रदेशोऽ-धर्मास्तिकाय इति कर्मधारयेण वा निर्णयः, आकाशास्तिकाये प्रदेश आकाशास्तिकाय इति सप्तमीतत्पुरुषेण, आकाशास्ति-कायश्चासौ प्रदेश आकाशास्तिकाय इति कर्मधारयेण वा निर्णयः कार्य इत्यर्थः ॥ ५९ ॥

धर्मास्तिकायस्याधर्मास्तिकायस्याकाशास्तिकायस्य चैकैकव्यक्तिरूपत्वात् तत्तत्प्रदेशस्याप्येकस्य तदात्मकत्वसम्भवेन धर्मास्तिकायप्रदेशो धर्मास्तिकायः, अधर्मास्तिकायप्रदेशोऽधर्मास्तिकायः, आकाशास्तिकायप्रदेश आकाशास्तिकाय इत्येवं वदितुं शक्यम्, जीव-पुद्गलस्कन्धयोश्चानन्तत्वादेकस्य कस्यचित् तत्प्रदेशस्य विवक्षितस्य सकलजीवात्मकत्वं सकलपुद्गलस्कन्धात्म-कत्वं न सम्भवतीति जीवप्रदेशो जीव इत्येव वदितु न शक्यो नवा पुद्गलस्कन्धप्रदेशः पुद्गलस्कन्ध इति वक्तु शक्यः, किन्तु जीवप्रदेशो नोजीव. स्कन्धप्रदेशो नोस्कन्ध इत्येवं वक्तव्य इत्यस्योपदर्शकं षष्टितमपद्यं विवृणोति- **जीव इतीति** । **अपिश्चार्थ** इति- 'स्कन्धेऽपि' इत्यत्र योऽयमपिशब्द. स चशब्दस्य समुच्चयरूपेऽर्थे वर्तते इत्यर्थ. । अपिशब्दस्य चार्थकत्वे 'जीवे स्कन्धेऽपि' इति '**जीवे स्कन्धे च**' इति पर्यवसितमुट्टङ्कितम् । कीदृशमवधारणमित्यपेक्षायामाह- **जीवे जीव इति वेति**- जीवे प्रदेशो नोजीव इति सप्तमीतत्पुरुषेण, जीवश्चासौ प्रदेशो नोजीव इति कर्मधारयेण वाऽभिलाप. कर्तव्यः, स्कन्धप्रदेशस्यापि स्कन्धे प्रदेशो नोस्कन्ध इति सप्तमीतत्पुरुषेण, स्कन्धश्चासौ प्रदेशो नोस्कन्ध इति कर्मधारयेण वाऽभिलापः कर्तव्य इत्येव पद्यपूर्वार्द्धस्यार्थोऽभिप्रेतार्थो ज्ञेय इत्यर्थः । "**स्कन्ध इति वा**" इत्यस्य स्थाने 'स्कन्धे स्कन्ध इति वा" इति पाठो युक्तः । ननु धर्मास्तिकायप्रदेशादेर्धर्मास्तिकायादिशब्देनाभिलपनं जीवस्कन्धप्रदेशयोश्च नोजीव-नोस्कन्धशब्देनाभिलपनमित्येवमभिलापवैचित्र्य कथमित्यपेक्षायामाह- **धर्मास्तिकायादे-रिति**- आदिपदादधर्मास्तिकाया ऽऽकाशास्तिकाययोः परिग्रहः । **अनतिप्रसक्ता** विवक्षितप्रदेशव्यतिरिक्तप्रदेश न वर्तते । इति एतस्मात् कारणात् । **तथोक्तिः** धर्मास्तिकायप्रदेशस्य धर्मास्तिकाय इति. अधर्मास्तिकायप्रदेशस्याधर्मास्तिकाय इति, आकाशास्तिकायप्रदेशस्याकाशास्तिकाय इत्येवमुक्तिः । **प्रतिस्वमनन्तत्वात्** जीवा अप्यनन्तसङ्ख्यकाः स्कन्धा अप्यनन्ता इत्येवं प्रत्येकमनन्तत्वात् । **कथमिति**- एकस्य जीवात्मकसन्तानस्य यः प्रदेशस्तस्य तज्जीवात्मकत्वमेव नान्य-जीवात्मकत्वमिति न विवक्षितैकजीवप्रदेशस्य सकलजीवसन्तानात्मकत्वसम्भवः, एवमेकपुद्गलस्कन्धस्य यः प्रदेशः स तत्पु-द्गलस्कन्धात्मक एवेति न तस्य सकलपुद्गलस्कन्धात्मकत्वसम्भव इत्येतस्मात् कारणात् 'जीवप्रदेशो जीवः' इत्युक्तिर्न सम्भवति, एवं 'स्कन्धप्रदेशः स्कन्धः' इत्युक्तिर्न सम्भवति, किन्तु विवक्षितो य एकजीवसन्तानस्य प्रदेशस्तस्मिन् सकलजीवसन्तानस्यैकदेशो यो विवक्षितैकजीवात्मकसन्तानस्तदात्मकत्वप्रतिपादनाय नोजीव इत्युक्तिः, एवं विवक्षितो य एकपुद्गलस्कन्धस्य प्रदेशस्तस्मिन् सकलपुद्गलस्कन्धानामेकदेश एकपुद्गलस्कन्धस्तदात्मकत्वस्य प्रतिपादनाय नोस्कन्ध इत्येव-

ध्येयम्, इति-एवं समासद्वयशुद्धिमान् शब्दनयः प्राह, न चैवं धर्मे धर्मो वा प्रदेशो नोद्रव्यमित्यपि स्यादनिर्द्धारितसामान्यैकव्यक्तिविधेयतायामेव नोशब्दप्रयोगात्, धर्मास्तिकायाद्येकव्यक्तेर्निर्धारिताया एव विधेयत्वादिति ध्येयम् ॥ ६० ॥

**ब्रूते समभिरूढस्तु, भेदाप्तेर्नात्र सप्तमी ।**
**देश-प्रदेशनिर्मुक्तमेवम्भूतस्य वस्तु सत् ॥ ६१ ॥**

**नयामृत०**—ब्रूत इति। समभिरूढनयस्तु 'धर्मे प्रदेशः' इत्यादिसप्तमीसमासं [ न ] ब्रूते, तथाप्रयोगे 'कुण्डे बदरम्' इत्यादेरिव भेदाप्तेः— भेदबुद्धिप्रसङ्गात्, 'घटे घटस्वरूपम्' इत्यादौ क्वचिदभेदे सप्तमीप्रयोगेऽप्यभेदप्रकारकबोधार्थं कर्मधारयस्यैवावश्याश्रयणीयत्वात्; तत्पुरुषे पदलक्षणा-सत्त्वात् कर्मधारये चाभेदस्य संसर्गविधयैव लाभात् तदभावेन लाघवादेव कर्मधारयपक्षः समभिरूढ-नयेनाश्रीयत इत्यपरे।

---

मुक्तिरिति निर्गलितोऽर्थः। इतीति मूलस्य विवरणम्- **एवमिति**- अमुना प्रकारेणेत्यर्थः। **समासद्वयशुद्धिमान्** सप्तमीतत्पुरुष-कर्मधारयलक्षणसमासद्वयमाश्रित्य धर्मास्तिकायप्रदेशादिशब्दार्थाभ्युपगन्तृत्वलक्षणा या शुद्धिस्तद्वान्। नन्वेवं सकलद्रव्यैकदेशविवक्षितधर्मास्तिकायात्मकद्रव्यात्मकत्वस्य धर्मास्तिकायप्रदेशे प्रतिपादनाय धर्मास्तिकाये प्रदेशे नोद्रव्य-मिति सप्तमीतत्पुरुषेण धर्मास्तिकायश्चासौ प्रदेशो नोद्रव्यमिति कर्मधारयेण वाऽभिलापोऽपि कर्तव्यकुक्षिमास्कन्देदित्या-शङ्क्य प्रतिक्षिपति- **न चैवमिति**। **धर्मे** धर्मास्तिकाये। **धर्मो वा** धर्मास्तिकायो वा। निषेधहेतुमुपदर्शयति- **अनिर्धारितेति**- 'जीवे प्रदेशो जीवो वा प्रदेशः' इत्यत्र 'स्कन्धे प्रदेश. स्कन्धो वा प्रदेशः' इत्यत्र च जीव-सामान्यस्य स्कन्धसामान्यस्य वा यैकव्यक्तिः, अनिर्धारिताया एव, तस्या विधेयताया, न त्वस्मिन् जीवे प्रदेशोऽयं जीवः प्रदेश इत्येवं निर्धारिताया जीवव्यक्तेर्विधेयता, नवास्मिन् स्कन्धे प्रदेशोऽय स्कन्ध· प्रदेश इत्येवं निर्धारिताया स्कन्ध-व्यक्तेर्विधेयतेति तस्यामेवानिर्धारितसामान्यैकव्यक्तिविधेयताया सत्या नोजीवो नोस्कन्ध इत्येव नोशब्दप्रयोगादित्यर्थ.। **धर्मास्तिकायेति**- धर्मास्तिकाये प्रदेशो धर्मास्तिकायो वा प्रदेश इत्यादौ तु द्रव्यसामान्यस्य या धर्मास्तिकायादि-लक्षणैकव्यक्तिस्तस्या निर्धारिताया एव विधेयता, न तु द्रव्यसामान्यवाचिद्रव्यशब्देन तस्या उपादान येनानिर्धारितायास्तस्य विधेयता स्यादिति निर्धारितसामान्यैकव्यक्तिविधेयत्वादेव नोद्रव्यमित्येवं न तत्र नोशब्दप्रयोग इत्यर्थः ॥ ६० ॥

प्रदेशविषये समभिरूढैवम्भूतयोर्मन्तव्योपदर्शकमेकषष्टितमपद्यं विवृणोति- **ब्रूत इतीति**। **'धर्मे प्रदेश इत्यादि'** इत्यत्रादिपदाद् 'अधर्मे प्रदेश., आकाशे प्रदेशः, जीवे प्रदेश, स्कन्धे प्रदेशः' इत्यस्य सङ्ग्रहः। कथं सप्तमीतत्पुरुष-समासं प्रकृते समभिरूढनयो नाभ्युपगच्छतीत्यपेक्षायामाह- **तथा प्रयोग** इति- धर्मे प्रदेश इत्यादिप्रयोग इत्यर्थः। **कुण्डे बदरमित्यादेरिवेति**- कुण्डे बदरमिति सप्तम्यन्तकुण्डपदसमभिव्याहृतबदरपदाद् यथा बदरे कुण्डभेदबुद्धिस्तथे-त्यर्थः। **भेदाप्तेरिति** मूलस्य विवरणम्- **भेदबुद्धिप्रसङ्गादिति**- प्रदेशे धर्मास्तिकायादेर्भेदबुद्धिप्रसङ्गादित्यर्थः। सप्तमी-तत्पुरुषे कर्मधारये वाऽभ्युपगच्छति भवान् प्रदेशे धर्मास्तिकायादेरभेदमेवेति तद्भङ्गः स्यादिति साम्प्रतनयं प्रति समभि-रूढनयस्याक्षेपः, यद्यप्यभेदेऽपि सप्तमीप्रयोगो भवति यथा घटे घटस्वरूपमित्यादौ नहि घटस्वरूपं घटाद् भिन्नमिति तथापि तत्र संसर्गतयैवाभेदो भासते न प्रकारतयेति प्रकारतयाऽभेदभानार्थं कर्मधारयसमास एवाश्रयणीय इत्याह- **'घटे घटस्वरूपम्' इत्यादाविति**। धर्मास्तिकाये प्रदेशो धर्मास्तिकायप्रदेश इति सप्तमीतत्पुरुषस्य धर्मास्तिकायश्चासौ प्रदेशो धर्मास्तिकायप्रदेश इति कर्मधारयस्य च विग्रहवाक्यत्वस्वरूपे भेदेऽपि समस्तस्वरूपे भेदाभावात् तयोरर्थभेदप्रतिपत्तये तत्पुरुषे पूर्वपदस्य स्वशक्यार्थसम्बन्धिनि लक्षणा, कर्मधारये तु पूर्वपदशक्यार्थस्याभेदसम्बन्धेनैवोत्तरपदार्थेऽन्वय इति तत्र लक्षणाऽभावेन लाघवात् कर्मधारय एव समभिरूढनयेनाभ्युपेयत इति केषाञ्चिन्मतमुपदर्शयति- **तत्पुरुषे** इति। **'पद लक्षणासत्त्वात्'** इत्यस्य स्थाने 'पूर्वपदलक्षणासत्त्वात्' इति पाठो युक्त.। **तदभावेन** लक्षणाया अभावेन। **'लाघवादेव'** इत्येवकारेणाभेदप्रकारकबोधार्थं कर्मधारयसमासाश्रयणस्य पूर्वमुक्तस्य व्यवच्छेद., नामार्थयोरभेदसम्बन्धे·

एतन्मूलकमेव निषादस्थपत्यधिकरणं मीमांसायां प्रवृत्तेः( त्तम् ), तथाहि—" निषादस्थपतिं याजयेत् " इत्यत्र निषादानां स्थपतिरिति न षष्ठीसमासः, किन्तु निषादश्चासौ स्थपतिरिति कर्मधारयो लाघवात्, न चाऽध्ययनाभावादनधिकारो निषादस्य, एतद्विधिबलादेवैतदिष्टौ यावदपेक्षितपठनानुज्ञानात्, यथा—' वर्षासु रथकारोऽग्नीनादधीत ' इत्यत्र चापशूद्राधिकरणविरोधः, तस्यैतदतिरिक्तविषयत्वात्; न चैवं " स्त्री-शूद्रौ नाधीयेताम् " इत्यत्र निषादीयतत्तदध्ययनविध्यर्थनिषेधबाधादध्ययनपदे निषादीयतत्तदध्ययनपरतया सङ्कोचः कल्प्यत इति शूद्रपदे एव निषादेतरशूद्रपरतया सङ्कोचः किमिति न कल्प्यत

नैवान्वय इति नियमात् कर्मधारयेऽपि नाभेदप्रकारको बोधः किन्त्वभेदसंसर्गक एव, सप्तमीतत्पुरुषेऽपि अभेदसंसर्गक एव बोधः, किन्तु कर्मधारये न लक्षणा तत्पुरुषे तु पूर्वपदे लक्षणेति लाघवात् कर्मधारयसमासाश्रयणमित्याशयः। **एतन्मूलकमेव** तत्पुरुषे पूर्वपदलक्षणासत्त्वात् तदपेक्षया लक्षणाऽभावतो लाघवात् कर्मधारयाश्रयणमिति समभिरूढनयमूलकमेव । पूर्वमीमांसागत निषादस्थपत्यधिकरणविचारमुपदर्शयति— **तथाहीति** । **षष्ठीसमासः** षष्ठीतत्पुरुषसमासः । **लाघवात्** षष्ठीतत्पुरुषे पूर्वपदे लक्षणा कर्मधारये न सेत्येवं लाघवात् । ननु " न स्त्रीशूद्रौ वेदमधीयाताम् " इति श्रुत्या सङ्करजातिविशेषस्य निषादस्य शूद्रजात्यन्तर्गतस्य वेदाध्ययननिषेधाद् यागोपयुक्तमन्त्रपठनानधिकारित्वेन न यागाधिकार इति निषादाभिन्नस्थपतेर्याजनान्वयासम्भवान्न कर्मधारयस्तत्राश्रयणीयः, किन्तु निषादस्वामिनः क्षत्रियस्य याजनान्वयसम्भवेन षष्ठीतत्पुरुष एव समाश्रयणीय इत्याशङ्क्य प्रतिक्षिपति— **न चेति** । **अध्ययनाभावात्** वेदाध्ययनासम्भवात् । **अनधिकारः** यागकरणेऽयोग्यता । **निषादस्य** निषादाभिन्नस्थपतेः । निषेधे हेतुमाह— **एतद्विधिबलादेवेति**— ' निषादस्थपतिं याजयेत् ' इति बलादेवेत्यर्थः । **एतदिष्टौ यावदपेक्षितपठनानुज्ञानात्** निषादस्थपतिकर्तृकयागे यद् यन्मन्त्रपठनं तद् यागकर्तुर्निषादस्यावश्यकं तन्मन्त्रपठनस्य निषादकर्तृकस्यानुमतत्वात् । यत्र शूद्रविशेषकर्तृको यागस्तत्र तदुपयुक्तमन्त्राध्ययनस्य तत्कर्तृशूद्रकर्तृकस्यानुमतत्वे दृष्टान्तमाह— **यथेति**— तथा च वर्षासमये शूद्रविशेषरथकारकर्तृकाग्न्याधानकर्माङ्गमन्त्रपठनं शूद्रस्यापि रथकारस्य यथाऽनुमतं तथा प्रकृते निषादस्यापि तत्कर्तृकयागोपयुक्तमन्त्राध्ययनमनुमतमित्यर्थः । शूद्रस्य यागानधिकारप्रतिपादकापशूद्राधिकरणविरोधमाशङ्क्य प्रतिक्षिपति— **न चेति** । निषेधे हेतुमाह— **तस्येति**— अपशूद्राधिकरणस्येत्यर्थः । **एतदतिरिक्तेति**— वेदविहितनिषादादिकर्तृकयागव्यतिरिक्तेत्यर्थः । ननु ' स्त्रीशूद्रौ नाधीयेताम् ' इत्यत्र निषादकर्तृकयागोपयुक्तमन्त्रातिरिक्तवेदाध्ययनपरमध्ययनपदमित्येवमध्ययनपदस्य सङ्कुचितार्थकत्वं यदाश्रीयते तदपेक्षया लाघवाच्छूद्रपदस्यैव निषादातिरिक्तशूद्रपरत्वं किमिति नोपेयत इति शूद्रपदस्यैव सङ्कुचितार्थत्वमस्त्विति तटस्थाशङ्कां प्रतिक्षिपति— **न चैवमिति**— अस्य ' शङ्कनीयम् ' इत्यनेनान्वयः । **एवं** सङ्कोचस्यावश्यकर्तव्यत्वे सति । **निषादीयेति**— ' निषादीयतत्तदध्ययनपरतया ' इत्यस्य स्थाने " निषादीयतत्तदध्ययनातिरिक्ताध्ययनपरतया " इति पाठो युक्तः, तथा च ' निषादस्थपतिं याजयेद् ' इत्यतः प्राप्तो यो निषादकर्तृकयागोपयोगिमन्त्रस्य निषादकर्तृकाध्ययनलक्षणविध्यर्थस्तस्य ' स्त्री-शूद्रौ नाधीयेताम् ' इत्यनेन यो निषेधस्तस्य बाधात् निषादकर्तृकयागोपयोगिमन्त्राध्ययने निषादरूपशूद्रकर्तृकत्वस्याभावेन तत्र तदभावस्यासम्भवात्, **अध्ययनपदे** " स्त्री शूद्रौ नाधीयेताम् ' इत्यत्राध्ययनार्थकं यत् पदं तस्मिन्, निषादीयं— यन्निषादकर्तृकयागोपयोगिमन्त्राध्ययन तदतिरिक्तवेदाध्ययनपरतयेत्यर्थः । **शूद्रपदे एव** ' स्त्रीशूद्रौ ' इत्येतद्घटकशूद्रपदे एव । निषेधे हेतुमाह— **निषादस्येति**— शूद्रपदेन निषादातिरिक्तशूद्रस्यैव ग्रहणे तस्यैव वेदमात्राध्ययनं निषिद्धं न तु निषादजातीयशूद्रस्येति निषादस्य निषादकर्तृकयागोपयोगिमन्त्राध्ययनस्येव तादृशयागानुपयोगिवेदवचनाध्ययनस्यापि प्रसङ्गः ' स्वाध्यायोऽध्येतव्यः ' इत्यध्ययनविधेस्तत्र प्रत्यप्यबाधितप्रसरत्वादित्यर्थः । यदि च प्रकारविधयाऽभेदस्य बोधार्थमेव कर्मधारयाश्रयणं न लाघवात्, तर्हि समासघटकस्याभेदवाचकपदस्याभावात् कर्मधारयेऽपि पूर्वपदे लक्षणाऽऽवश्यकी, एवं च निषादस्थपतिं याजयेदित्यत्र निषादश्चासौ स्थपतिरिति कर्मधारयाश्रयणे निषादाभिन्नस्थपतिकर्तृकयागान्यथानुपपत्त्या तस्याप्राप्तविद्याप्रयुक्तिः कल्पनीया स्यात्, निषादानां स्थपतिरिति तत्पुरुषाश्रयणे तु ब्राह्मणादित्रैवर्णिकोऽपि निषादस्थपतिपदबोध्य इति नाप्राप्तविद्याप्रयुक्तिकल्पनम्, तदनुरोधेन स्त्रीशूद्रौ नाधीयेतामित्यत्राध्ययनपदस्य निषादीयाध्ययनातिरिक्ताध्ययनपरतया सङ्कोचोऽपि न कर्तव्य इति तत्पुरुषसमास एवाश्रयणीयः स्यादिति निषादस्थपत्यधिकरणाप्रवृत्तिप्रसङ्ग

इति शङ्कनीयम्; निषादस्य वेदान्तराध्ययनप्रसङ्गात् । यदि च तत्पुरुषवत् कर्मधारयेऽपि स्यात् तदा षष्ठीसमास एव युज्येत, त्रैवर्णिकस्यैव निषादस्थपतितया बोधनेनाप्राप्तविद्याप्रयुक्तेरकल्पनान्निषेधविधौ सङ्कोचाभावादिति ।

अत्र शब्दनयानुसारिणो नव्याः–तत्पुरुषे लक्षणापक्षेऽपि किमिति कर्मधारय एवाद्रियते, न तत्पुरुषः, शक्ति-लक्षणयोरुभयोरपि शाब्दबोधप्रयोजकतायाः क्लृप्तत्वेन गौरवानवकाशात्, अथ शक्यसम्बन्धरूपलक्षणाज्ञाने विशेषणज्ञानविधया हेतोः शक्तिज्ञानादेव शाब्दबोधोपपत्तेर्न लक्षणाज्ञानहेतुः कल्प्यते, गौरवादिति चेत् ? भवेदेवं यदि षष्ठीसमासेनापि कस्यचिद् बोधो न स्यात्, न चैवम्, तादृशबोधसहस्रस्याप्यनुभवसिद्धत्वादिति, यदि च साक्षात्परम्परासाधारणसम्बन्धेन शक्तिज्ञानमेव शाब्दबोधसामान्ये हेतुरिति सूक्ष्ममीक्ष्यते, तदा न शक्तिविषयकत्वापेक्षया लक्षणाविषयकत्वे गौरवमुद्भावयितुमपि शक्यम्, सम्बन्धगौरवस्यादोषत्वात् । अथासति विशेषतो बाधके स्वशक्यार्थविषयैव

---

इत्याशयेनाह–**यदि चेति** । '**कर्मधारयेऽपि स्यात्**' इत्यस्य स्थाने 'कर्मधारयेऽपि लक्षणा स्यात्' इति पाठो युक्तः । **षष्ठीसमास एव** निषादानां स्थपतिर्निषादस्थपतिरिति षष्ठीतत्पुरुषसमास एव । तस्य युक्तत्वे हेतुमाह–**त्रैवर्णिकस्यैवेति**– ब्राह्मण-क्षत्रिय-वैश्यजातीयान्यतमस्यैवेत्यर्थ । **अप्राप्तविद्याप्रयुक्ते.** सङ्करजातीयत्वेन शूद्रे निषादे तत्कर्तृकयागोपयोगिमन्त्राध्ययनलक्षणविद्याया वेदवचनादिप्रमाणान्तराप्राप्तस्य सम्बन्धस्य । **अकल्पनात्** निषादकर्तृकयागान्यथानुपपत्त्या यत् कल्पन तस्याभावात् । तथा च **निषेधविधौ** स्त्रीशूद्रौ नाधीयेतामित्यत्र । **सङ्कोचाभावात्** अध्ययनपदस्य निषादकर्तृकयागोपयुक्तमन्त्राध्ययनातिरिक्ताध्ययनपरत्वाभावात् ।

अस्मिन् विचारे महोपाध्यायो ग्रन्थकार. समभिरूढनयवादिनं प्रति प्रतिमल्लतयोपस्थितानां नव्यानां साम्प्रतनयानुसारिणामाकूतमुद्घाटयति–**अत्रेति** । 'तत्पुरुषे लक्षणापक्षेऽपि' इत्यारभ्य 'पक्षपातमात्रमेवेति दिक्' इत्यन्त तदाशयप्रकटनम् । **विशेषणज्ञानविधयेति**– विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वमिति शक्यसम्बन्धरूपलक्षणाज्ञान शक्तिविषयसम्बन्धज्ञानम्, तत्र विषये शक्तेर्विशेषणत्वेन शक्तिविशिष्टबुद्धिरूपं तत् अतस्तत्र विशेषणीभूताया शक्तेर्ज्ञानस्य हेतुत्वमिति लक्षणाज्ञानस्य शाब्दबोधहेतुत्वेऽपि तद्द्वारा शक्तिज्ञानस्य हेतुत्वमावश्यकमेव, तथा च निषादश्चासौ स्थपतिरिति कर्मधारयाश्रयणे निषादाभिन्नस्थपतिविषयकशाब्दबोधस्य लक्षणाज्ञानमन्तरेणैवोपपत्तिरिति लाघवम्, निषादाना स्थपतिरिति षष्ठीतत्पुरुषाश्रयणे तु निषादपदस्य निषादसम्बन्धिस्थपतिबोधार्थं निषादसम्बन्धिनि लक्षणाऽऽवश्यकीति तज्ज्ञान शक्तिज्ञान चोक्तशाब्दबोधहेतुतया कल्पनीयमिति कर्मधारयपक्षो लाघवादाश्रयणीय इति शङ्कार्थः, '**लक्षणाज्ञानहेतुः**' इत्यस्य स्थाने 'लक्षणाज्ञानं शाब्दबोधे हेतुः' इति पाठो युक्त । यस्य प्रमातुर्निषादाना स्थपतिरिति षष्ठीतत्पुरुषसमासरूपतयैव तच्छब्दावधारणं तस्य प्रमातृसहस्रस्य निषादसम्बन्धिस्थपतिबोधस्याप्यनुभवसिद्धस्यापलपितुमशक्यतया तदर्थं लक्षणाज्ञानस्यापि तत्र शाब्दबोधहेतुत्वकल्पनमावश्यकमेवेति समाधत्ते–**भवेदेवमिति**– लक्षणाज्ञाने विशेषणज्ञानविधया कारणतया क्लृप्तस्य शक्तिज्ञानस्यैव शाब्दबोधहेतुत्वं न तु लक्षणाज्ञानस्येति तदा स्यादित्यर्थः । **न चैवमिति**– षष्ठीसमासेन कस्यचित् प्रमातुर्बोधो न भवत्येवेति न चेत्यर्थः । **तादृशबोधसहस्रस्यापि** षष्ठीतत्पुरुषसमासतयाऽवधारितवाक्यप्रभवशाब्दबोधसहस्रस्यापि लाक्षणिकार्थविषयकस्य । तत्पुरुषे पूर्वपदस्य शक्यसम्बन्धरूपलक्षणाज्ञानस्य लक्ष्यार्थोपस्थितिद्वारा शाब्दबोधं प्रति कारणत्वकल्पने यद् गौरवं तदपि नास्तीत्याह–**यदि चेति**–शक्यार्थोपस्थितिद्वारा शक्तिज्ञानस्य यत्र कारणत्व तत्र साक्षाद्विषयतासम्बन्धेन शक्तिप्रकारकज्ञानस्य कारणत्वम्, यत्र च लक्ष्यार्थोपस्थितिद्वारा शक्तिज्ञानस्य यत्र कारणत्वं तत्र स्वविषयसम्बन्धित्वलक्षणपरम्परासम्बन्धेन शक्तिप्रकारकज्ञानस्य कारणत्वमित्येवं पृथक् कार्यकारणभावो नाङ्गीक्रियते, किन्तु साक्षात्परम्परासाधारणसम्बन्धसामान्येन शक्तिप्रकारकज्ञानत्वेन शक्तिज्ञानस्योपस्थितिसामान्यद्वारैकविधमेव शाब्दबोधं प्रति कारणत्व स्वीक्रियते, एवं च प्रकारविधया शक्तिविषयकत्वमेव कारणतावच्छेदकं न तु लक्षणाविषयत्वमपि, शक्तिलक्षणोभयसाधारणान्यतरत्वादिना सम्बन्धविषयकत्वस्य तत्र कारणतावच्छेदकत्वेऽपि तत्कृतगौरवस्य न दोषावहत्वमिति तत्पुरुषसमासोऽप्याश्रयितुं शक्य इत्यर्थः ।

वेदानां प्रामाण्यम्, न तु प्रामाणान्तराविषयेऽपि, लक्षणार्थविधयैवानादिमीमांसासंप्रतिपत्तेरित्युच्यते तर्ह्यसति विशेषतो बाधके कर्मधारयविधयैव वेदानां प्रामाण्यम्, न तु प्रमाणान्तराविषयेऽपि तत्पुरुषादिविधया, तथैवानादिमीमांसासंप्रतिपत्तेरित्येव कल्पयित्वा किमिति न स्वचेतः सन्तोषयसि ? बहुव्रीहितस्तत्पुरुषस्य बलत्वे त्वयाप्यस्या एव रीतेरनुसर्तव्यत्वात्, न च बहुव्रीहेः सर्वपदार्थानां लाक्षणिकत्वादेव दौर्बल्यम्, एकपदलक्षणयापि बहुव्रीहेस्तत्र तन्त्रापादितत्वादिति पक्षपातमात्रमेवेति दिक्।

एवम्भूतस्य नयस्य मते देश-प्रदेशनिर्मुक्तं– देश-प्रदेशकल्पनारहितमखण्डमेव वस्तु सत्, देश-प्रदेशकल्पना तु भ्रममात्रमिति तन्मते नास्त्येव प्रदेश इत्यर्थः। न च विन्ध्यहिमवदादिभावाभावावच्छेदकतया आकाशादिदेशसिद्धिः, परेण समं सम्बन्धस्यैव तेनानभ्युपगमात्। व्यवहारस्तु कल्पितेनापि वस्तुना निर्वहतीति न ततः परमार्थसिद्धिरिति भावः ॥ ६१ ॥

---

अत्र समभिरूढनयाकूतमुत्प्रेक्ष्य शब्दनयानुसारिणो दूषयन्ति– अथेति। **न तु प्रमाणान्तराविषयेऽपीति**– प्रमाणान्तरविषये शब्दानामनुवादकत्वादेव न प्रामाण्यमित्यतः प्रमाणान्तराविषयेऽपीत्युक्तम्, एवमग्रेऽपि। '**लक्षणार्थविधयैवा**' इत्यस्य स्थाने 'लक्ष्यार्थविधया, तथैवा' इति पाठो युक्तः, तथा च प्रमाणान्तराविषयेऽर्थे स्वशक्यार्थप्रतिपादकत्वेनैव वेदाना प्रामाण्यम्, प्रमाणान्तराविषयेऽप्यर्थे लक्ष्यार्थप्रतिपादकत्वेन वेदाना न तु प्रामाण्यमित्यर्थः। कथं न तथा प्रामाण्यमित्यपेक्षायामाह– **तथैवेति**– उक्तप्रकारेणैवेत्यर्थः। **अनादिमीमांसासंप्रतिपत्तेः** अनादिवृद्धासपरम्परोपनीतप्रमाणपरिशोधितयुक्तिसिद्धाभ्युपगमात्। **कर्मधारयविधयैव** कर्मधारयसमासरूपत्वेनैव। **वेदानां** समासस्वरूपवेदवाक्यानाम्, तेन समासानात्मकवेदवाक्याना कर्मधारयानात्मकत्वेनान्यथैव प्रामाण्येऽपि न क्षतिः। 'न तु प्रमाणान्तराविषयेऽपि तत्पुरुषादिविधया' इत्येकं वाक्यम्, तथा च समासात्मकवेदवाक्यानां प्रमाणान्तराविषयेऽप्यर्थे कर्मधारयातिरिक्ततत्पुरुषादिसमासात्मकत्वेन न तु प्रामाण्यमित्यर्थः। इयं रीतिस्त्वयाऽप्याश्रयणीयैव, कथमन्यथा तत्पुरुष-बहुव्रीहिसमासयोर्लाक्षणिकपदघटितत्वाविशेषेऽप्यसति बाधके तयोरुभयोरपि सम्भवे तत्पुरुषसमासात्मकत्वेन वाक्यस्य प्रामाण्यं न तु बहुव्रीहिसमासात्मकत्वेनेत्यभ्युपगमस्तवापि स्यादित्याह– **बहुव्रीहित** इति। '**बलत्वे**' इति स्थाने '**बलवत्त्वे**' इति पाठो युक्तः। ननु बहुव्रीहौ सर्वपदाना लक्षणा, तत्पुरुषे त्वेकस्यैव पूर्वपदस्य लक्षणेति तत्पुरुषापेक्षया बहुव्रीहेर्दौर्बल्यमित्याशङ्कां प्रतिक्षिपति– **न चेति**। निषेधे हेतुमाह– **एकपदलक्षणयाऽपीति**।

प्रस्तुतविषये एवम्भूतनयाभिमतप्रतिपादकमुत्तरार्द्धं विवृणोति– **एवम्भूतस्येति**। '**नयस्य मते**' इति पूरणम्। **देश-प्रदेशनिर्मुक्तमिति** मूलस्य विवरणम्– **देश-प्रदेशकल्पनारहितमिति**, अस्य फलितकथनम्– **अखण्डमेवेति**। यद्यखण्डमेव वस्तु सत् तर्हि तत्र देश-प्रदेशप्रतीतेरनुभूयमानाया अपलापः स्यादित्यत आह– **देश-प्रदेशकल्पना त्विति**– तथा च तत्र देश-प्रदेशप्रतीतिरनुभूयमाना न नाम नास्ति, किन्तु सा भ्रमरूपत्वान्न देश प्रदेशसाधिकेति। **तन्मते** एवम्भूतनयमते। ननु यद्याकाशादेर्वस्तुनो देश-प्रदेशौ न स्तस्तर्हि कथमेकस्मिन्नेवाकाशे विरुद्धयोर्हिमवत्-तदभावयोर्विन्ध्य-तदभावयोः सत्त्वम्, देशसद्भावे त्वेकदेशावच्छेदेन विन्ध्यसद्भावो हिमाचलाभावश्च तदन्यदेशावच्छेदेन हिमाचलसद्भावो विन्ध्याचलाभावश्चेत्येकत्राप्याकाशे देशरूपावच्छेदकभेदेन विन्ध्य-तदभावयोर्हिम-तदभावयोः सत्त्वोपपत्तिरित्यवच्छेदकतयाऽऽकाशादिदेशकल्पनमावश्यकमित्याशङ्का प्रतिक्षिपति– **न चेति**। निषेधे हेतुमाह– **परेणेति**– सर्वं वस्तु स्वस्मिन्नेव प्रतिष्ठितं न त्वस्मिन्नन्यस्य सत्त्वम्, आधाराधेयभावश्च सम्बन्धे सति भवति, अन्यस्य त्वन्येन समं सम्बन्ध एव नास्ति, तथा च गगनेन समं विन्ध्यादेः सम्बन्धाभावाद् गगनादौ विन्ध्य-तदभावौ वर्तेते इत्येव नेष्यते, कुतस्तदवच्छेदकतया देशसिद्धिरिति भाव.। **तेन** एवम्भूतनयेन। ननु यद्याकाशादावन्यस्मिन्न विन्ध्यादिः समस्ति तर्हि 'दक्षिणस्या दिश्याकाशे विन्ध्याद्रिर्वर्तते उत्तरस्यां दिशि गगने हिमाचलो वर्तते' इत्येव विभिन्नदेशावच्छेदेन विन्ध्यादिमत्त्वव्यवहारो न निर्वहेदित्यत आह– **व्यवहारस्त्विति**। **वस्तुना** देश-प्रदेशादिमदाकाशादिवस्तुना। **ततः** व्यवहारतः ॥ ६१ ॥

विवेचितः प्रदेशदृष्टान्तः प्रस्थकदृष्टान्तं विवेचयति प्रस्थकार्थमित्यादिना—

**प्रस्थकार्थं व्रजामीति, वने गच्छन् ब्रवीति यत् ।**

**आदिमो ह्युपचारोऽसौ, नैगम-व्यवहारयोः ॥ ६२ ॥**

**नयामृत०**—प्रस्थकार्थमित्यादि । प्रस्थकः– मगधदेशप्रसिद्धो धान्यमानहेतुर्द्रव्यविशेषः, तदर्थं व्रजामीति वने गच्छन् यद् ब्रवीति कश्चित्, असौ नैगम-व्यवहारयोः, हि–निश्चितम्, आदिम उपचारः ॥ ६२ ॥

नन्वत्र प्रस्थकार्थं वने गच्छतः प्रस्थकेच्छाया मुख्यार्थस्याबाधितत्वात् कथं प्रस्थकपदस्योपचार इत्यत आह—

**अत्र प्रस्थकशब्देन, क्रियाविष्टवनैकधीः ।**

**प्रस्थकेऽहं व्रजामीति, ह्युपचारोऽपि च स्फुटः ॥ ६३ ॥**

**नयामृत०**—अत्रेति । अत्र–अधिकृतप्रयोगे, केत्यधिकारणाकाङ्क्षायाः प्रस्थकार्थमिति चतुर्थीप्रकृत्यर्थेनैव निवृत्तेः, प्रस्थ[क]दलयोग्यवृक्षप्राप्तिरूपक्रियाविष्टवनस्य, एका–अद्वितीया धीरिति तत्रोपचार आवश्यक इत्यर्थः । ननु तथापि सप्तम्यन्तप्रश्ने सप्तम्यन्तमेवोत्तरमुचितमित्यत आह 'क भवान् गच्छति' इति प्रश्ने प्रस्थकेऽहं व्रजामीति, सप्तम्यन्तप्रस्थकपदस्योपचारोऽपि वने स्फुट एव दृश्यत इत्यर्थः, तथा च वनगमने प्रस्थकशब्देन वनाभिधानं नैगम-व्यवहारयोः प्रथम उपचार इति सिद्धम् ॥ ६३ ॥

**छिनद्मि प्रस्थकं तक्ष्णोम्युत्किराम्युल्लिखामि च ।**

**करोमि चेति तदनूपचाराः शुद्धताभृतः ॥ ६४ ॥**

---

द्वाषष्टितमपद्यमवतारयति– **विवेचित** इति । प्रस्थकदृष्टान्ते नैगमव्यवहाराभ्युपगमविशेषप्रतिपादकं द्वाषष्टितमपद्यं विवृणोति– **प्रस्थकार्थमित्यादी**ति । **तदर्थं** धान्यमानहेतुद्रव्यविशेषार्थम् । **असौ** प्रस्थकार्थं व्रजामीति वचनम् । अन्यत् स्पष्टम् ॥ ६२ ॥

त्रिषष्टितमपद्यमवतारयति– **नन्वि**ति । **अत्र** प्रस्थकार्थं व्रजामीत्युक्तौ । **मुख्यार्थस्य** प्रस्थकार्थमित्यनेन शक्त्या प्रतिपाद्यस्यार्थस्य । विवृणोति– **अत्रेती**ति । **अत्रे**ति मूलस्य विवरणम्– **अधिकृतप्रयोग** इति– प्रस्थकार्थं व्रजामीति प्रयोगे इति तदर्थः, अत्र घटकत्वं सप्तम्यर्थः, तस्य 'प्रस्थकार्थम्' इत्यत्रान्वयः । **केत्यधिकरणाकाङ्क्षायाः** क व्रजति भवानिति पृच्छता **परेण** स्वगताधिकरणाकाङ्क्षाऽऽविष्कृता तस्याः, अस्य 'निवृत्ते.' इत्यनेनान्वयः, किं व्रजति भवानित्येव व्रजनविषयकाकाङ्क्षाया अभावेन तन्निवर्तनस्यानुद्देश्यत्वाद् व्रजामीत्यनेन नाधिकरणाकाङ्क्षाया निवृत्तिरिति प्रस्थकार्थमिति चतुर्थीप्रकृत्यर्थेनैवोक्ताकाङ्क्षाया निवृत्तेः, आकाङ्क्षाया निवृत्तिश्च स्वविषयनिर्णयात्मकस्वविषयसिद्ध्यैव सम्भवति नान्यथेति गमनाधिकरणविशेषप्रतिपत्तिरेव प्रस्थकार्थमित्यनेन जन्याऽभिमता, सा च प्रतिपत्तिर्धान्यमानहेतुद्रव्यविशेषात्मकप्रस्थकदलयोग्यवृक्षप्राप्तिरूपक्रियाविष्टवनगोचरेति तादृशवनरूपार्थाधिकरणे प्रस्थकपदस्योपचार आवश्यक इत्याह– **प्रस्थकदले**ति । उत्तरार्द्धं व्याख्यातुमवतारयति– **नन्वि**ति । **तथाऽपि** उपचारस्यावश्यकत्वेऽपि । **सप्तम्यन्तप्रश्ने** क भवान् व्रजतीति प्रश्ने । **सप्तम्यन्तमेवोत्तरं** प्रस्थकार्थमित्यस्य स्थाने 'प्रस्थके' इति सप्तम्यन्तप्रस्थकपदघटितमेवोत्तरवाक्यम् । **आह**– प्रस्थकेऽहमित्याद्युत्तरार्द्धमाह । उत्तरार्द्धार्थं स्पष्टयति– **क भवानित्यादि** । फलितमाह–**तथा चे**ति ॥६३॥

**नयामृत०**—छिनद्मीति । किं भवान् छिनत्तीति प्रश्ने प्रस्थकं छिनद्मीत्युत्तरे प्रस्थकपदस्य छेदयोग्ये काष्ठे उपचारः, स पूर्वस्मात् शुद्धः; एवं क्रमेण किं भवान् तक्ष्णोति १ उत्किरति २ उल्लिखति ३ करोतीति ४ प्रश्नेषु प्रस्थकं तक्ष्णोमि १ उत्किरामि २ उल्लिखामि ३ करोमीत्युत्तरेषु ४ प्रस्थकपदस्य तक्षणादिक्रियायोग्यकाष्ठेषूपचारा यथोत्तरं भवन्तः क्रमेण शुद्धताभृतो भवन्ति । ननु सर्वत्र प्रस्थकपदस्य प्रस्थकयोग्यकाष्ठ एक एवोपचारस्तत्तत्क्रियाविशेषितार्थधीश्च तत्तत्क्रियावाचकपदसमभिव्याहारादेव भविष्यतीति कथमेतावन्त उपचारा यथाक्रमं शुद्धा उच्यन्ते इति चेत् ? सत्यम्—'दुग्धमायुर्दध्यायुर्घृतमायुः, इत्यादौ दुग्धादिकारणे आयुःकार्योपचारस्यातिशयविशेषेण तारतम्यवत् प्रकृतेऽपि छेदनादिक्रियाव्यापारावेशेन तज्जन्या अवयवसंयोगादिविशेषजन्यतया वा विलक्षणेषु काष्ठद्रव्येषु काष्ठ-प्रस्थकपर्यायोत्पत्तिव्यवधानाभ्यां प्रस्थकपदोपचारतारतम्यस्यानुभवसिद्धत्वात् ॥ ६४ ॥

**तस्मेतावतिशुद्धौ तूत्कीर्णनामानमाहतुः ।**
**चितं मितं तथा मेयारूढमेवाह सङ्ग्रहः ॥ ६५ ॥**

आदिम उपचार इत्युक्त्या तदनन्तरमन्येऽप्युपचारा. प्रस्थकदृष्टान्ते नैगम-व्यवहारयोः सम्भवन्तीत्यवगम्यते, ते के ? इत्यकाङ्क्षानिवर्तकं चतु.षष्टितमं पद्यं विवृणोति— **छिनद्मीतीति** । **सः** प्रस्थकं छिनद्मीत्यत्र प्रस्थकपदस्य छेदयोग्ये काष्ठे उपचारः । **पूर्वस्मात्** प्रस्थकार्थं व्रजामीत्यत्र प्रस्थकपदस्य प्रस्थकदलयोग्यवृक्षप्राप्तिक्रियाविष्टवने य उपचारस्तस्मादुपचारात् । **एवं क्रमेण** अव्यवहितपूर्वपूर्वोपचारादव्यवहितोत्तरोत्तरोपचारः शुद्ध इति रीत्या । '**तक्षणादि**' इत्यादिपदादुत्किरणोल्लेखन-करणक्रियापरिग्रह., तथा च प्रस्थकं तक्ष्णोमीत्यत्र प्रस्थकपदस्य तक्षणयोग्यकाष्ठे य उपचारः स प्रस्थकं छिनद्मीति वाक्यघटकप्रस्थकपदस्य च्छेदनयोग्यकाष्ठे उपचाराच्छुद्धः, तथा प्रस्थकं तक्ष्णोमीति वाक्यघटकप्रस्थकपदस्य तक्षणयोग्यकाष्ठे उपचारत. प्रस्थकमुत्किरामीति वाक्यघटकप्रस्थकपदस्योत्कीर्णयोग्यकाष्ठे उपचारः शुद्धः, एवं प्रस्थकमुत्किरामीति वाक्यघटकप्रस्थकपदस्योत्किरणयोग्यकाष्ठे उपचारात् प्रस्थकमुल्लिखामीति वाक्यघटकप्रस्थकपदस्योल्लेखनयोग्यकाष्ठे उपचार. शुद्ध, तथा प्रस्थकमुल्लिखामीति वाक्यघटकपदस्योल्लेखनयोग्यकाष्ठे उपचारात् प्रस्थक करोमीति वाक्यघटकप्रस्थकपदस्य प्रस्थककरणयोग्यकाष्ठे उपचार. शुद्ध इत्यर्थः । ननु प्रस्थकं छिनद्मीत्यत्र छेदनक्रियानिरूपककर्मत्वस्य प्रस्थकं तक्ष्णोमीत्यत्र तक्षणक्रियानिरूपककर्मत्वस्य प्रस्थकमुत्किरामीत्यत्रोत्किरणक्रियानिरूपककर्मत्वस्य प्रस्थकमुल्लिखामीत्यत्रोल्लेखनक्रियानिरूपककर्मत्वस्य प्रस्थकं करोमीत्यत्र करणक्रियानिरूपककर्मत्वस्य च छिनद्मीत्यादितत्तत्क्रियाबोधकवाक्यसाकाङ्क्षकर्मत्वबोधकद्वितीयाविभक्तित एव बोधसम्भवात् सर्वेषूक्तवाक्येषु प्रस्थकपदस्य प्रस्थकयोग्यकाष्ठे एक एवोपचार इति दर्शितदिशोपदर्शिता अनेके उपचारा न सन्त्येवेति तेषां क्रमेण शुद्धत्वाभिधानमसङ्गतमेवेति शङ्कते—**नन्वित्यादिना** । **तत्तत्क्रियेति**— छेदनादिक्रियेत्यर्थ', एवमग्रेऽपि यद्यपि छेदनादितत्तत्क्रियायोग्यकाष्ठपर्यायेषु प्रस्थकयोग्यकाष्ठत्वं समानमेव तथापि अवान्तरतारतम्यस्य तत्तत्क्रियाकर्मीभूतेषु तत्तत्काष्ठपर्यायेषु सद्भावात् तथाविधविभिन्नतत्तत्पर्यायावगतये उपवर्णिता उपचारा आवश्यका एवेति समाधत्ते—**सत्यमिति** । '**दुग्धादि**' इत्यादिपदाद् दधि-घृतयोः परिग्रहः, समासश्च कर्मधारयः, आयुःकार्येत्यत्रापि कर्मधारय. । **प्रकृतेऽपि** प्रस्थक छिनद्मीत्यादावपि । '**छेदनादि**' इत्यादिपदात् तक्षणोत्किरणोल्लेखन-करणक्रियाणामुपग्रहः । '**व्यापारावेशेन**' इत्यस्य विलक्षणेष्वित्यत्रान्वयः । '**तज्जन्या अवयव**' इत्यस्य स्थाने 'तज्जन्यावयव' इति पाठो युक्तः, तज्जन्यश्छेदनादिक्रियाव्यापारजन्यो यः काष्ठद्रव्यस्यावयवसंयोगादिविशेषस्तज्जन्यतयेत्यर्थ. । **काष्ठप्रस्थकेति**— काष्ठच्छेदनानन्तरमेव न भवति काष्ठप्रस्थकपर्यायोत्पत्तिः, किन्त्वधिकव्यवधानेन काष्ठप्रस्थकपर्यायोत्पत्ति., काष्ठच्छेदनापेक्षया किञ्चिन्न्यूनव्यवधानेन तक्षणक्रियाव्यापारानन्तरं काष्ठप्रस्थकपर्यायोत्पत्तिः, तदपेक्षयाऽपि किञ्चिन्न्यूनव्यवधानेनोत्किरणक्रियाव्यापारानन्तरं काष्ठप्रस्थकपर्यायोत्पत्तिरित्येव व्यवधानतारतम्येन तथा करणक्रियानन्तरमव्यवधानेनैव काष्ठप्रस्थकपर्यायोत्पत्तिः, तत्पूर्वक्रियापेक्षया न्यूनाव्यवधानेन काष्ठप्रस्थकपर्यायोत्पत्तिरित्येवमव्यवधानतारतम्येन च प्रस्थकपदोपचारतारतम्यस्य विलक्षणेषु काष्ठद्रव्येष्वनुभवसिद्धत्वादित्यर्थः ॥ ६४ ॥

**नयामृत०**—तमिति । अतिशुद्धौ त्वेतौ—नैगम-व्यवहारनयौ, तं—प्रस्थकम्, उत्कीर्णनामानं—प्रस्थकपर्यायवन्तम्, प्रस्थकमाहतुः, उत्कीर्णनाम्नो द्रव्यादविशेषादिति भावः । सङ्ग्रहनयस्तु चितम्—आसादितप्रस्थकपर्यायम्, मितम्—आकुट्टितनामानम्, मेयं—धान्यविशेषमारूढं च प्रस्थकमाह, मेयारूढपदेन तदनारूढस्यान्यद्रव्याविशिष्टस्यासङ्ग्रहान्नैगमोपदर्शितार्थसङ्कोचकत्वेन स्वनाम्नोऽन्वर्थसिद्धेः, अयं हि विशुद्धत्वात् कारणे कार्योपचारं कार्याकरणकाले प्रस्थकं च नाङ्गीकुरुते, न च तदा तस्य घटाद्यात्म-

अतिशुद्धौ तु नैगम-व्यवहारनयौ निष्पन्नप्रस्थकपर्यायवन्तमेव प्रस्थकं कथयत. सङ्ग्रहस्तु मापनक्रियाविष्टमेव निष्पन्न-प्रस्थकपर्यायवन्तं प्रस्थकं कथयतीत्यावेदकं पद्यषष्टितमपद्य विवृणोति—**तमितीति** । **एताविति** मूलस्य विवरणम्—**नैगम-व्यवहारनयाविति**—एतच्छब्दस्य प्रक्रान्तपरामर्शकत्वात् । तच्छब्दस्यापि प्रकृतार्थपरामर्शकत्वात् **तमिति** मूलस्य विवरणम्—**प्रस्थकमिति**—तस्यैव प्रकृतत्वात् । **उत्कीर्णनामानमिति**—उत्—उपरि, कीर्णम्—अयश्शलाकादिनोल्लिखितम्, नाम—प्रस्थकेति संज्ञा यस्य स उत्कीर्णनामा, तमुत्कीर्णनामानमिति, प्रस्थकपर्यायवत्तयोत्पन्नेऽपि काष्ठादिद्रव्यविशेषे यावन्न प्रस्थकोऽयमित्यापामरसाधारणप्रत्ययोत्पत्तिस्तावन्न ततो लौकिकपरीक्षकाणां प्रस्थकमितधान्यादिक्रयविक्रयादिव्यवहारोऽसन्दिग्धतया समुल्लसतीत्युत्कीर्णनामत्वमावश्यकम्, यश्च काष्ठद्रव्यादिपर्यायविशेषः कूटव्यवहारिणा प्रस्थकपर्यायानात्मकोऽप्युत्कीर्णपर्यायसंज्ञो नैतावता वस्तुतः स प्रस्थक इत्यतः ‘उत्कीर्णनामानम्’ इत्यस्य फलितविवरणम्—**प्रस्थकपर्यायवन्तमिति**—एवम्भूतं द्रव्यविशेषं प्रस्थकम्, **आहतुः** कथयत इत्यर्थः । नाममात्रस्य शब्दस्वरूपस्य प्रस्थकपर्यायापन्नकाष्ठद्रव्याद् भिन्नत्वेऽपि उत्कीर्णनाम्नः प्रस्थकपर्यायस्य द्रव्यादभिन्नत्वादित्थमभिधानमित्याह—**उत्कीर्णनाम्न** इति । सङ्ग्रहमन्तव्योपदर्शकमुत्तरार्द्धं विवृणोति—**सङ्ग्रहनयस्त्विति** । **चितमिति** मूलस्य विवरणम्—**आसादितप्रस्थकपर्यायमिति** । **मितमिति** मूलस्य विवरणम्—**आकुट्टितनामानमिति**—उत्कीर्णनामानमित्यस्य य एवार्थः स एवास्यापि, प्रयोजनमपि पूर्वप्रदर्शितमेव । ‘**मेयं धान्यविशेषमारूढं च**’ इत्यस्य स्थाने ‘तथा मेयारूढं धान्यविशेषसमारूढं च’ इति पाठो युक्तः, अत्र **मेयारूढमिति** मूलस्य **धान्यविशेषसमारूढमिति** विवरणम् । समुच्चयार्थकस्य **तथा**शब्दस्य समुच्चयार्थकश्चशब्दो विवरणम् । **मेयारूढमित्यत्र** मेय आरूढोऽयं स मेयारूढ इति बहुव्रीहिः, मेयश्च मातुं योग्यो धान्यविशेषः, तथा च तद्विवरणस्य ‘धान्यविशेषसमारूढम्’ इत्यस्य धान्यविशेषकर्तृकारोहणकर्मेत्यर्थः । आसादितप्रस्थकपर्याय आकुट्टितनामा च प्रस्थको नैगमेऽपीति तन्मात्राभ्युपगमे सङ्ग्रहस्य नैगमाद् विशेषो न स्यादिति नैगमाभ्युपगमत. सङ्ग्रहाभ्युपगमे विशेषख्यापनायोक्तम् ‘मेयारूढम्’ इत्याह—**मेयारूढपदेनेति** । **तदनारूढस्य** मेयकर्तृकारोहणाकर्मीभूतस्य, आरोहणं च प्रकृते मध्यदेशमभिव्याप्य संयोगलक्षणावस्थानमेव, तत्कर्तृत्वं च तत्प्रतियोगित्वम्, तत्कर्मत्वं च तदनुयोगित्वम्, **अन्यद्रव्याविशिष्टस्य** प्रस्थकपर्यायानापन्नद्रव्येण सह समानस्वभावस्य, यथा प्रस्थकपर्यायानात्मकं न धान्यमानविशेषावधारणलक्षणकार्यकुर्वद्रूपात्मकं तथा धान्यविशेषासमारूढं प्रस्थकपर्यायापन्नद्रव्यमपीति । **असङ्ग्रहात्** सङ्ग्रहणाभावात् । तथा च **नैगमोपदर्शितार्थसङ्कोचकत्वेन** नैगमनयेनोपदर्शितो यः प्रस्थकवाच्य आसादितप्रस्थकपर्यायोत्कीर्णनामकद्रव्यविशेषरूपोऽर्थः स मेयारूढो मेयानारूढश्च, तन्मध्यान्मेयारूढ एव प्रस्थको न मेयानारूढ इत्येवं सङ्कोचकारित्वेन सङ्ग्रहनयस्य सङ्ग्रह इति यन्नाम तस्यान्वर्थत्वस्य सङ्गृह्णाति सङ्कोचयतीति सङ्ग्रह इति निरुक्तिलभ्यार्थत्वस्य सिद्धेः, ‘**अयम्**’ इत्यस्य ‘नाङ्गीकुरुते’ इत्यनेनान्वयः । **अयं** सङ्ग्रहनयः । **हि** यतः । **कारणे** प्रस्थकमितधान्यादिमापनकार्यस्य परम्परया स्वरूपयोग्ये मापनकार्यकुर्वद्रूपानात्मके छेदन-तक्षणोत्किरणोल्लेखनादिक्रियायोग्यकाष्ठे । **कार्योपचारं** प्रस्थकपर्यायात्मककार्योपचारम् । आसादितप्रस्थकपर्यायेऽपि **कार्याकरणकाले** प्रस्थकमानधान्यादिमापनकार्याकरणकाले । **प्रस्थकं च** प्रस्थकेति नामव्यपदेश्यं च । **नाङ्गीकुरुते** न स्वीकरोति । ननु मापनकार्याकरणकाले आसादितप्रस्थकपर्यायेऽपि प्रस्थकात्मकत्वानङ्गीकारे घटाद्यात्मकत्वं स्यादित्याशङ्क्य प्रतिक्षिपति—**न चेति** । **तदा** प्रस्थककार्याकरणकाले । **तस्य** आसादितप्रस्थकपर्यायस्य । यो यन्नामव्युत्पत्तिनिमित्तार्थक्रियां करोति स तदर्थक्रियाकरणकाल एव तदात्मक इत्यभ्युपगन्त्रेवम्भूतनयमते जलाद्याहरणलक्षणचेष्टाकरणकाल एव घटादेरपि घटाद्यात्मकत्वस्य स्वीकारेण प्रस्थकपर्यायापन्नस्य मापनक्रियाऽकरणकाले यथा न प्रस्थकात्मकत्वं तथा तदानीं जलाद्याहरणलक्षणचेष्टात्मकार्थक्रियाकारित्वा-

कत्वप्रसङ्गः, तदर्थक्रियां विना तत्त्वायोगात्; घटादिशब्दार्थक्रिया यथाकथञ्चित् तत्रास्त्येवेति चेत्? न-असाधारणतदर्थक्रियाकारित्वस्यैव तदात्मकत्वप्रयोजकत्वात्; तथापि प्रस्थकक्रियाविरहे नायं प्रस्थको घटाद्यनात्मकत्वाच्च नाप्रस्थक इत्यनुभयरूपः स्यात्? न स्यात्- प्रतियोगिकोटौ स्वस्यापि प्रवेशेन यावद् घटाद्यनात्मकत्वासिद्धेः; अर्थक्रियाभावा-ऽभावाभ्यां द्रव्यभेदाभ्युपगमे ऋजुसूत्रमतानुप्रवेश इति चेत्? न-नैगमनयोपगतार्थसङ्कोचनाय क्वाचित्कतथोपगमेऽपि सर्वत्र तथाभ्युपगमाभावेन तदननुप्रवेशात्; इत्थं

---

भावाद् घटाद्यात्मकत्वमपि न सम्भवतीति निषेधहेतुमुपदर्शयति- **तदर्थक्रियां विनेति**- घटादिकार्यजलाहरणादिलक्षणार्थक्रियां विनेत्यर्थः। **तत्त्वायोगात्** घटाद्यात्मकत्वायोगात्। ननु घटादेरर्थस्य जलाद्याहरणादिलक्षणार्थक्रिया यथा कार्यं तथा घटाद्यर्थज्ञानतो घटादिशब्दप्रयोगस्तत्र भवतीति स्वज्ञानद्वारा घटादिशब्दोऽपि तस्य कार्यम्, लक्षणया घटादिशब्द-प्रयोगः प्रस्थकेऽपि भवतीति घटादिकार्यघटादिशब्दलक्षणार्थक्रियाकारित्वान्मापनकार्याकरणकाले प्रस्थके घटाद्यात्मकत्वप्रसङ्गः स्यादेवेत्याशङ्कते- **घटादिशब्दार्थक्रियेति**- घटादिशब्दप्रयोगलक्षणघटाद्यर्थकार्यार्थक्रियेत्यर्थः। **यथाकथञ्चित्** तात्पर्या-दितः। तत्र प्रस्थके। या चार्थक्रिया यस्मादेव भवति न तु तदन्यतस्तादृशासाधारणार्थक्रियाकारित्वमेव तदात्मकत्व-प्रयोजकमिति जलाद्याहरणादिलक्षणासाधारणार्थक्रियाकारित्वमेव घटाद्यात्मकत्वप्रयोजकम्, जलाहरणाद्यर्थक्रियाकारित्वं च न प्रस्थके इति न तस्य घटाद्यात्मकत्वप्रसङ्ग इति समाधत्ते- **नेति**। **असाधारणेति**-घटाद्यन्याप्रभवत्वे सति घटादिप्रभवे-त्यर्थः। **तदर्थक्रियेति**- जलाहरणादिलक्षणार्थक्रियेत्यर्थः। **तदात्मकत्वेति**- घटाद्यात्मकत्वेत्यर्थः। ननु मापनलक्षणार्थ-क्रियाविरहकाले आसादितप्रस्थकपर्यायोऽपि प्रस्थकः प्रस्थको न भवति, जलाहरणादिलक्षणाप्रस्थकघटादिकार्यकारित्वाभावाद-प्रस्थकोऽपि न भवतीति प्रस्थकाऽप्रस्थकान्यतरानात्मकोऽयं स्यात्, न चैवमभ्युपगन्तुं युक्तम्, विधिनिषेधयोरेकतरनिषेधेऽ-परविधिध्रौव्यात्, प्रस्थकतया निषिद्धस्याप्रस्थकरूपत्वस्याप्रस्थकतया निषिद्धस्य प्रस्थकरूपत्वस्य चावश्यम्भावात् 'परस्परविरोधे हि न प्रकारान्तरस्थितिः' इति वचनादित्याशयेन शङ्कते- **तथाऽपीति**- घटाद्यात्मकत्वप्रसङ्गाभावेऽपीत्यर्थः। **अनुभयरूपः स्यात्** प्रस्थका-प्रस्थकान्यतरानात्मकः स्यात्। प्रस्थकभिन्न यद् तत् सर्वमप्रस्थकमिति प्रस्थकोऽपि प्रस्थककार्याकरणकाले-ऽप्रस्थक एवेति घटादि' इत्यादिपदेन सोऽपि गृह्यत एवेति घटाद्यात्मकत्वमेव तस्येति घटाद्यनात्मकत्वहेतोरसिद्धया न ततोऽ-प्रस्थकनिषेधः कर्तुं शक्य इत्यप्रस्थकरूपत्वाद्यानुभयरूपोऽयमिति समाधत्ते- **न स्यादिति**-अनुभयरूपः प्रस्थककार्याकरणकाले प्रस्थको नापद्यत इत्यर्थः। तत्र हेतुमाह- **प्रतियोगिकोटाविति**- घटाद्यात्मा न भवतीत्येवंरूपो यो घटाद्यनात्मको निषेधस्तस्य प्रतियोगी घटाद्यात्मेति तत्रादिपदग्राह्यः प्रस्थककार्यकारिप्रस्थकपर्यायभिन्नः सर्वोऽपि तन्मध्ये प्रस्थककार्याकरण-काले प्रस्थकोऽपीति घटाद्यात्मकस्य तस्य घटाद्यनात्मकत्वासिद्धेरित्यर्थ। ननु ऋजुसूत्रनये यथाऽर्थक्रियाकारित्व तदकारित्वाभ्या विरुद्धधर्माभ्या द्रव्यस्य भेदस्तथा सङ्ग्रहनयेऽपि ताभ्यां तस्य भेद इत्यभ्युपगमे सङ्ग्रहनयाभ्युपगम ऋजुसूत्रनयाभ्युपगम एव स्यादित्याशङ्कते- **अर्थक्रियाभावाऽभावाभ्यामिति**- अर्थक्रियाकारित्व-तदकारित्वाभ्यामित्यर्थः। ऋजुसूत्रस्य सर्वत्रार्थक्रिया-भावाऽभावाभ्या द्रव्यभेदाभ्युपगमः, सङ्ग्रहस्य तु न तथा सर्वत्राभ्युपगमः, किन्तु प्रस्थकस्थले नैगमनयेनाभ्युपगतस्यो-त्कीर्णनामकप्रस्थकपर्यायापन्नद्रव्यरूपस्य प्रस्थकपदव्यपदेश्यस्य प्रस्थककार्यकारि-तदकारिप्रस्थकसाधारणस्यार्थस्य यत् सङ्कोचनं 'तथाभूतः प्रस्थककार्यकार्येव प्रस्थकः' इत्येवंरूपं तदर्थमर्थक्रियाकारित्व-तदकारित्वाभ्या द्रव्यभेदाभ्युपगम इति न तथाऽ-भ्युपगन्तुः सङ्ग्रहस्य ऋजुसूत्रमतानुप्रवेश इति समाधत्ते- **नेति**। **क्वाचित्कतथोपगमेऽपि** प्रस्थकस्थले द्रव्यभेदाभ्युप-गमेऽपि। **तथाऽभ्युपगमाभावेन** द्रव्यभेदाभ्युपगमाभावेन। **तदननुप्रवेशात्** सङ्ग्रहस्यर्जुसूत्रनयेऽनुप्रवेशाभावात्। यदा च मापनकार्यकारि-तदकारिव्यक्त्योरर्थक्रियाकारित्व-तदकारित्वाभ्या भेदः सङ्ग्रहनये सुव्यवस्थितस्तदा तन्नये मापनाकारिण्यां व्यक्तौ प्रस्थकोऽयमिति प्रतीते. प्रमितित्वाभावात् तत्र प्रस्थकत्वसामान्यमपि नास्ति किन्त्वप्रस्थकात्मिकैव सा व्यक्तिरिति नानुभयरूपत्वस्य तत्र प्रसङ्ग इत्याह- **इत्थं चेति**- सङ्ग्रहनये अर्थक्रियाभावाऽभावाभ्या क्वाचित्कद्रव्यभेदाभ्युपगमव्यवस्थितौ चेत्यर्थ.। 'भेदार्थ क्रियाजनकप्रस्थकव्यक्तौ' इत्यस्य स्थाने "भेदेऽर्थक्रियाऽजनकप्रस्थकव्यक्तौ" इति पाठो युक्तः, यदि यैव व्यक्तिर्मापनरूपार्थक्रियाकारिणी सैव मापनरूपार्थक्रियाऽजनिकाऽपि तदा मापनरूपार्थक्रियाकारिण्यां प्रस्थकत्वसामान्यस्य सत्त्वे तदभिन्नायां मापनरूपार्थक्रियाऽजनिकायामपि तस्य सत्त्वमवश्याभ्युपगन्तव्यं स्यात्, तयोर्भेदे तु मापनरूपार्थक्रियाऽ-

चार्थक्रियाकारि-तदकारिप्रस्थकव्यक्तिभेदार्थं क्रियाजनकप्रस्थकव्यक्तौ प्रस्थकत्वसामान्यमपि नास्तीत्यभ्युपगमेऽपि न कश्चिद् दोषः ।

वस्तुतो व्यावृत्तिविशेषाद्यतिरिक्तेन नैयायिकादिकल्पितसामान्येन ( न ) क्वचिदपि निर्वाहस्तन्मते घटत्वादिसामान्यस्यापि समर्थयितुमशक्यत्वात्, मृत्-स्वर्ण-रजत-पाषाणादिघटेषु मृत्त्व-स्वर्णत्वादिना साङ्कर्येण तदसिद्धेः, अस्तु मृत्त्व-स्वर्णत्वादिव्याप्यं नानैव घटत्वम्, कुलाल-स्वर्णकारजन्यतावच्छेदकतया तन्नानात्वस्यावश्यकत्वात्, नहि स्वर्णघटादौ चक्रादिकं मृद्घटादौ च लोहवर्तुलादिकं हेतुः, अनुगतधीस्तु कथञ्चिदसौ सादृश्यात्, घटपदं तु नानार्थकमित्यभ्युपगमे कथञ्चिदित्याद्यनिर्वचनेनैवाशक्तिः

जनिकायां प्रस्थकत्वसामान्यस्य नास्तित्वाभ्युपगमेऽपि न कश्चिद् दोषः, तत्र प्रस्थकत्वप्रतीतिर्दोषादेवेत्यर्थः । यदप्यतद्व्यावृत्तिव्यतिरिक्तं सामान्यं घटत्वादिकं नैयायिकादिभिरभ्युपगम्यते तदपि विचारं न सहत इति प्रस्थकत्वसामान्यं तथाभूतमविचाररमणीयमेवेति सङ्ग्रहनयाकूतमुपदर्शयति– **वस्तुत** इति । **व्यावृत्तिविशेषेति**– अघटव्यावृत्त्यपटव्यावृत्त्यादिरूपव्यावृत्तिविशेषेत्यर्थः, आदिपदात् तत्तदर्थक्रियाजनकत्वाद्युपग्रह । **न क्वचिदपि निर्वाहः** प्रस्थक एव प्रस्थकत्वसामान्यमतद्व्यावृत्तिविशेषातिरिक्तं न सम्भवतीत्येव न, किन्तु घट-पटादावपि घटत्व-पटत्वादिसामान्यमतद्व्यावृत्तिविशेषातिरिक्तं न सम्भवतीत्याशय. । कथं न निर्वाह इत्यपेक्षायामाह– **तन्मत** इति– नैगमनयप्रभवनैयायिकादिमत इत्यर्थः । साङ्कर्यस्य जातिबाधकत्वं नैयायिकादिभिरुपगतम्, घटत्वादावपि साङ्कर्यं समस्तीत्यतो न घटत्वादिसामान्यसिद्धिरित्याह– **मृत्-स्वर्णेति** । '**मृत्त्व-स्वर्णत्वादिना**' इत्यत्रादिपदाद् रजतत्व-पाषाणत्वादेरुपग्रहः, मृत्त्वाभाववति सौवर्णादिघटे घटत्व वर्तते, घटत्वाभाववति मार्दवशरावादौ मृत्त्वं वर्तत इत्येवं परस्परात्यन्ताभावसामानाधिकरण्यम्, मार्दवघटे च मृत्त्वमपि वर्तते घटत्वमपि वर्तत इति तयोः सामानाधिकरण्यमित्येव मृत्त्वेन सह घटत्वस्य साङ्कर्यम्, तथा स्वर्णत्वाभाववति मार्दवादिघटे घटत्वं वर्तते, घटत्वाभाववति काञ्चनकटक-केयूरादौ स्वर्णत्व वर्तत इत्येवं परस्परात्यन्ताभावसमानाधिकरण्यम्, सौवर्णघटे च स्वर्णत्वं च घटत्वं च वर्तत इति तयोः सामानाधिकरण्यमित्येवं स्वर्णत्वेन सह घटत्वस्य साङ्कर्यम्, अनयैव दिशा रजतत्वादिनाऽपि घटत्वस्य साङ्कर्यमित्येव साङ्कर्येण घटत्वादिसामान्यस्यासिद्धेरित्यर्थः । साङ्कर्यभयाद् घटत्वादेर्मृत्त्वादिव्याप्यस्य नानारूपस्य घटादिपदस्य नानार्थकस्य चाभ्युपगमे जात्युच्छेदापत्तिर्लौकिकव्यवहारबाधश्चेत्युपदर्शयति– **अस्त्विति** । नानाघटत्वाभ्युपगमो न निष्प्रमाणक इत्यावेदनायाह– **कुलालेति**– कुलाल विनाऽपि सौवर्णघटस्य स्वर्णकार विनाऽपि मार्दवघटस्य भावेन व्यतिरेकव्यभिचाराद् घटत्वावच्छिन्नं प्रति न कुलालत्वेन नवा स्वर्णकारत्वन कारणत्व किन्तु मृत्त्वव्याप्यघटत्वावच्छिन्न प्रति कुलालत्वेन कारणत्वम्, स्वर्णत्वव्याप्यघटत्वावच्छिन्न प्रति स्वर्णकारत्वेन कारणत्वमित्येवं कुलालत्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकतया मृत्त्वव्याप्यघटत्वस्य स्वर्णकारत्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकतया स्वर्णत्वव्याप्यघटत्वस्य सिद्धौ घटत्वजातिनानात्वस्यावश्यकत्वादित्यर्थः । नन्वेवं मार्दवघटं प्रत्येव चक्रादिकं जनकं न सौवर्णघटादिकं प्रति, एव सौवर्णघट प्रत्येव लोहवर्तुलादिकं जनक न मार्दवघटादिक प्रति व्यभिचारादित्यपि स्यादिति चेत्? अत्र ओमित्येवोत्तरमित्याह– **नहीति**– स्वर्णघटादौ चक्रादिक नहि हेतु', मृद्घटादौ च लोहवर्तुलादिक नहि हेतुरित्यन्वय । ननु यदि मृत्त्वादिव्याप्य नानैव घटत्वं तर्हि घटोऽयं घटोऽयमित्यनुगतप्रतीतिर्मार्दव-सौवर्णघटादौ न स्यात्तन्नियामकस्यैकस्य घटत्वस्याभावादित्यत आह– **अनुगतधीस्त्विति** । '**कथञ्चिदसौ सादृश्यात्**' इत्यस्य स्थाने 'कथञ्चित्सौसादृश्यात्' इति पाठो युक्त., सौसादृश्यम्– अतिशयेन सादृश्यम् । एव सति घटपदस्य नानाप्रवृत्तिनिमित्तकत्वेन नानार्थकत्वमापतदिष्टापत्त्या न दोषावहमित्याह– **घटपदं त्विति** । **इत्यभ्युपगमे** एवं नैयायिकादिभिरुररीकारे । अत्र सङ्ग्रहनयवादी अरुचिमुपदर्शयति– **कथञ्चिदित्यादीति**– यदि मार्दवघटादावेकं घटत्वं नास्ति तर्हि नानारूप तत्र तत्र सादृश्यनिबन्धनम्, तन्निबन्धनं तु घटत्वभिन्नं नोपदर्शयितुं शक्यमित्यशक्तिरेव तन्निर्वचनासामर्थ्यलक्षणा नैयायिकादिभि स्वस्याविष्क्रियते, तत् किमर्थम्, अतिरिक्तजातिस्वीकारेऽपि न तत्र जात्यन्तरमथापि घटत्वं सामान्य पटत्व सामान्यमित्येवमनुगतप्रतीतिरेकरूपेणाननुगतक्तेष्वपि सामान्येषु भवतीत्येवं तैरुपगम्यते कथञ्चित्सौसादृश्येनैव जातीनामनुगमनम्, ततश्च तेष्वनुगतमतिरित्य स्यावश्याश्रयणीयत्वे

क्रिमाविष्क्रियते अननुगतानां जातीनामिव व्यक्तीनामप्यसौ सादृश्येनैवानुगमसंभवेन जात्युच्छेदापत्तिः, घटपदस्य नानार्थत्वे स्पष्ट एव लौकिकव्यवहारबाधश्च ।

घटत्वादिकमेकत्ववृत्त्येव मृत्त्वादिकमेव वा तथा, कुम्भकार-स्वर्णकारादेर्विजातीयकृतिमत्त्वेन चक्रादि(लोह)वर्तुलादेश्च कथञ्चिद्विजातीयव्यापारकत्वेन हेतुत्वमित्यादिनवीनकल्पना तु दोषादेकत्वाग्रहेऽपि घटत्वादिग्रहात्, एकत्वस्यैकत्वात्, प्रसिद्धरूपेण कार्यकारणभावोच्छेदे व्यवहारविलोपाच्चानुपपन्ना, इति नय-

---

वरमतिरिक्तजातिमस्वीकृत्यैव सौसादृश्येन व्यक्तीनामनुगमनम्, तत एव चानुगतप्रतीतिरिति सर्वत्र जातेरभ्युपगमने न किञ्चित् प्रयोजनमिति मार्दव-सौवर्णघटादिषु सौसादृश्येनानुगतप्रतीतिमभ्युपगच्छद्भिर्नैयायिकादिभिर्जातिमात्राय जलाञ्जलिरेव वितीर्णा स्यात्, यथा च सौवर्ण-मार्दवादिघटेष्वेकस्य घटत्वसामान्यस्याभावे नानार्थत्व तथा गोत्वादिजात्यभावेऽपि गवादिपदानां नानार्थत्वमेवास्त्विल्यतोऽपि जात्युच्छेदापत्तिः स्वहस्तितैव स्यादित्यर्थः । '**व्यक्तीनामप्यसौ**' इत्यस्य स्थाने "व्यक्तीनामपि सौ" इति पाठो युक्त. । घटपदस्यैकप्रवृत्तिनिमित्तकत्वलक्षणमेकार्थत्वमेव लौकिकैर्व्यवह्रियते, तस्य नानाप्रवृत्तिनिमित्तकत्व-लक्षणनानार्थत्वाभ्युपगमे तद्बाधोऽपीत्याह—**लौकिकव्यवहारबाधश्चेति** । घटत्वे मृत्त्वादिजातिसाङ्कर्यपरिहाराय स्वर्णघटादौ चक्रादीनां कुम्भकारादीनां चैककारणत्वोपपत्तये या नवीनाना कल्पना तामुपन्यस्य दूषयति— **घटत्वादिकमेकत्ववृत्त्येवेति**— मार्दव-सौवर्णादिघटगतैकत्ववृत्त्यैव घटत्वादिकम्, तस्य च मृत्त्वसुवर्णत्वादिना सामानाधिकरण्याभावान्न साङ्कर्यम्. घटादौ तस्य स्वाश्रयैकत्ववत्त्वसम्बन्धेनेव वृत्तित्वम्, तस्य तेनैव सम्बन्धेन घटोऽयं घटोऽयमित्यनुगतप्रतीतिनिबन्धनत्वमित्यनुगत-प्रतीत्युपपत्तिः, उक्तपरम्परासम्बन्धेनैवैकत्ववृत्तेरपि घटत्वजातेर्घटपदप्रवृत्तिनिमित्तत्वमित्येकार्थत्वव्यवहारोपपत्तिश्चेत्यर्थः । **वा** अथवा । **मृत्त्वादिकमेवेति**— आदिपदात्, स्वर्णत्वादेः परिग्रहः, एवकारेण घटत्वादेरेकत्ववृत्तित्वस्य व्यवच्छेदः । **तथा** घटादिगतैकत्ववृत्तिः, एवमपि घटत्वस्य न मृत्त्वादिना साङ्कर्यम्, घटत्व हि घटात्मकद्रव्ये वर्तते, मृत्त्वादिकं च न घटात्मकद्रव्ये किन्तु तद्गतैकत्वे, एवं च तयो. सामानाधिकरण्याभावात् कुतः साङ्कर्यम्, एवमभ्युपगमे घटादिद्रव्ये मृत्त्वादिप्रतीतिः स्वाश्रयैकत्वसम्बन्धेन, घटोऽयं घटोऽयमित्यनुगतप्रतीतिनियामकत्वं च घटत्वस्य समवायसम्बन्धेनैव, तेनैव सम्बन्धेन घटत्वस्य घटपदप्रवृत्तिनिमित्तत्वमपीति न घटपदस्य नानार्थत्वप्रसङ्गोऽपीति भाव. । या मार्दवघटानुकूला कुम्भकारे कृतिः, या च सौवर्णादिघटानुकूला स्वर्णकारादिगता कृतिस्तत्र सर्वत्र वैजात्यविशेष उपेयते, तादृशवैजात्यविशेषाकलितकृतिमत्त्वेन कुम्भकार स्वर्णकारादेरेकघटत्वावच्छिन्न प्रत्येकमेव कारणत्वमुपेयत इति न व्यतिरेकव्यभिचारोऽपि, एवं चक्रादेर्यादृशव्यापारेण मार्दवघटो जायते, लोहवर्तुलादेश्च यादृशव्यापारेण सौवर्णादिघटो जायते, तत्र सर्वत्र व्यापारे वैजात्यविशेष उपेयते, तादृगवैजात्यविशेषाकलितव्यापारवत्त्वेन चक्रादेर्लोहवर्तुलादेश्चैकघटत्वावच्छिन्नं प्रत्येकमेव कारणत्वमुपेयत इति नात्रापि व्यतिरेकव्यभिचार इति न नानाकारणत्वप्रसङ्ग इत्याह— **कुम्भकार-स्वर्णकारादेरिति**— कुम्भकार-स्वर्णकारादेर्विजातीय-कृतिमत्त्वेन हेतुत्वमित्यन्वयः, हेतुत्वमित्यस्य घटत्वावच्छिन्न प्रति हेतुत्वमित्यर्थः । '**इत्यादिनवीनकल्पना तु**' इत्यस्य 'अनुपपन्ना' इत्यनेनान्वयः । अनुपपन्नत्वे हेतुमाह—**दोषादेकत्वाग्रहेऽपीति**— घटत्वादेर्मृत्त्वादेर्वा साङ्कर्यपरिहाराय घटादिगतैकत्ववृत्तित्वं यत् परिकल्प्यते तन्न युक्त धर्मिज्ञाने सत्येव तद्गतधर्मस्य ज्ञानमिति नियमेन घटादिगतैकत्वज्ञाने सत्येव घटत्वादिज्ञान यदि भवेत् तदा घटत्वादेरेकत्ववृत्तित्व सम्भाव्येतापि, न चैवम्, समूहगतत्वादिदोषाद् घटादावेकत्वस्याग्रहेऽपि घटत्वादेर्ग्रहादित्यर्थः । किञ्च व्यक्तीनामनेकत्वे सत्येवानुगतप्रतीत्यनुरोधेन तत्र जातिः परिकल्प्यते, अत एव नित्यत्वे सत्यनेकसमवेतत्वमिति जातिलक्षण तत्र समनुगतं भवतीति, प्रकृते तु घटोऽयं घटोऽयमित्यनुगतप्रतीतिबलाद् यथा घटत्वादिकमेकं तथाऽयमेकोऽयमेक इत्यनुगतप्रतीतिबलादेकत्वमपि घटपटादिगतमेकमेव भवितुमर्हतीति न तत्रैक-व्यक्तिकत्वाज्जातिकल्पना भवेदित्याह—**एकत्वस्यैकत्वादिति** । यदपि कुम्भकार-स्वर्णकारादिगतघटानुकूलकृतिगतं वैजात्य-मुररीकृत्य विजातीयकृतिमत्त्वेन कुम्भकारस्वर्णकारादेरेकघटत्वावच्छिन्नं प्रति कारणत्वमेकं परिकल्पितम् तथा चक्रादि-व्यापार-लोहवर्तुलादिव्यापारगतवैजात्यविशेषपरिकल्पनापुरस्सरं विजातीयव्यापारवत्त्वेनैकधर्मेण चक्रादेर्लोहवर्तुलादेश्चैकघटत्वा-वच्छिन्नं प्रत्येककारणत्वपरिकल्पनम्, तदुभयमपि न युक्तम्, कुम्भकारकत्वादिना घटत्वादिना प्रसिद्धरूपेण चक्रत्वादिना घटत्वादिना प्रसिद्धेन रूपेण कार्यकारणभावस्य व्यवह्रियमाणस्यैवं सत्युच्छेदे व्यवहारविलोपप्रसङ्गादित्याह—**प्रसिद्धरूपेणेति** ।

विशेषेण तत्र तत्र व्यावृत्तिविशेषरूपसामान्याभ्युपगमं विना न निर्वाह इति। प्रकृते कार्यकरणकाले-ऽव्यावृत्तिविशेषरूपप्रस्थकत्वसामान्याभावाभ्युपगमे न क्षतिरिति किमतिप्रपञ्चितेन ॥ ६५ ॥

**प्रस्थकश्चर्जुसूत्रस्य, मानं मेयमिति द्वयं।**
**न ज्ञ-कर्तृगताद् भावाच्छब्दानां सोऽतिरिच्यते ॥ ६६ ॥**

**नयामृत०**—प्रस्थकश्चेति-ऋजुसूत्रस्य मानं मेयं चेति द्वयमेव प्रस्थकस्वरूपम्, तन्मेयधान्ये च समवहित एव प्रस्थकव्यवहाराद् एकतरविनाभावे तत्परिच्छेदासम्भवात्, किञ्च, मेयारूढः प्रस्थकत्वेन व्यपदेश्य इति सङ्ग्रहनयमते मेयारूढः प्रस्थकारूढं मेयं वा तथेत्यत्र विनिगमकाभावादुभयत्रैव प्रस्थकपद-शक्तेर्व्यासज्यवृत्तित्वं युक्तम्, कथं तर्हि प्रस्थकेन धान्यं मीयत इति प्रयोगः, एकत्रोभयवाचकपदेनैकस्या-नुपस्थानादिति चेत्? न— एतन्नयेन कथञ्चित् प्रस्थकपदशक्यतावच्छेदकस्य व्यासज्यवृत्तित्वेन विवक्षा-भेदात् करणरूपानुप्रवेशस्यापि सम्भवान्न तदनुपपत्तिरिति द्रष्टव्यम्।

तस्मान्नैयायिकादिपरिकल्पितमतिरिक्तसामान्यं न सम्भवत्येव, किन्त्वनुगतप्रतीतिकार्यकारणभावं घटादिशब्दैकार्थत्वाद्यनुरोधेना-तद्व्यावृत्तिविशेषरूपमेव घटत्वादिसामान्यमभ्युपगन्तव्यम्, मापनकार्याकरणकाले च प्रस्थकव्यक्तौ तादृशस्यापि प्रस्थकत्व-सामान्यस्याभ्युपगमे न किञ्चित्प्रयोजनमिति प्रस्थकत्वसामान्याभावाभ्युपगमोऽपि न दोषावह इत्युपसंहरति— **इति नयविशेषेणेति**। **प्रकृते** प्रस्थके। अन्यत् स्पष्टम् ॥ ६५ ॥

प्रस्थके ऋजुसूत्रनयाभ्युगमविशेषस्य साम्प्रतसमभिरूढैवम्भूतेतत्रयात्मकशब्दनयाभ्युपगमविशेषस्य चोपदर्शक पद्यषष्टि-तमपद्यं विवृणोति— **प्रस्थकश्चेतीति**। केवलं मानं मेयं वा कथं न प्रस्थकस्वरूपमित्याकाङ्क्षायामाह— **तन्मेयधान्ये** इति— प्रस्थकमानमेयधान्य इत्यर्थः। '**समवहित एव**' इत्येवकारेण मेयधान्यासमवहिते प्रस्थके प्रस्थकव्यवहारो न भवतीत्यर्थो ज्ञापितः। कथं मेयधान्यसमवहित एव प्रस्थके प्रस्थकव्यवहारो भवन्नपि प्रामाणिकैरुपादेय इत्यपेक्षायामाह— **एकतरविनाभाव** इति— मानमेययोरेकतरस्याभावे इत्यर्थः। **तत्परिच्छेदासम्भवादिति**— इदं प्रस्थकमितं धान्यं, प्रस्थकमितधान्यमापकश्चायं प्रस्थक इत्येवं निश्चयस्यासम्भवादित्यर्थः। मानं मेयं द्वयं प्रस्थकपदवाच्यमिति युक्त्यन्तरेण व्यवस्थापयति— **किञ्चेति**। '**मेयारूढः**' इत्यत्र मेयमारूढं यं स मेयारूढ इति बहुव्रीहिः, प्रस्थक इति द्रष्टव्यम्, एवमग्रेऽपि। **प्रस्थकारूढमित्यत्र** प्रस्थके आरूढं प्रस्थकारूढमिति सप्तमीतत्पुरुषः। **तथा** प्रस्थकत्वेन व्यपदेश्यः। **उभयत्रैव** मान-मेयोभयस्मिन्नेव, एवकारेण मानमात्रे मेयमात्रे च प्रस्थकपदशक्तेर्व्यवच्छेदः। ननु प्रस्थकपदशक्तेर्मान-मेयोभयस्मिन्नेव व्यासज्यवृत्तित्वे प्रस्थकपदात् तदुभयस्यैवोपस्थितिर्न केवलस्य मानविशेषरूपस्य प्रस्थकस्योपस्थितिः, प्रस्थक-पदजन्योपस्थितौ च मापनक्रियाकरणत्वेनैव प्रस्थकस्य भानमिति तस्य करणत्वबोधिका तृतीयाऽपि पृथक्तया करणत्वोप-स्थापिका न युक्तेति केवलमापके प्रस्थके 'प्रस्थकेन धान्यं मीयते' इति वाक्ये प्रस्थकपदप्रयोगोऽनुपपन्न इत्याशङ्कते— **कथं तर्हीति**। "**प्रयोगः, एकत्रोभय**" इत्यस्य स्थाने 'प्रयोग एकत्र, उभय' इति पाठो युक्तः, एकत्र प्रयोगः कथमित्यन्वयः, **एकत्रेत्यस्य** मानमात्रे प्रस्थके इत्यर्थः। कथं न प्रयोग इत्यपेक्षायामाह— **उभयेति**— मानमेयोभयवाचक-प्रस्थकपदेनैकस्य मानमात्रस्यानुपस्थापनादित्यर्थः। समाधत्ते— **नेति**। **एतन्नयेन** ऋजुसूत्रनयेन, '**कथञ्चिद्**' इत्यस्य 'अव्यासज्यवृत्तित्वेन' इत्यनेनान्वयः, "**प्रस्थकपदशक्यतावच्छेदकस्य व्यासज्यवृत्तित्वेन**" इत्यस्य स्थाने "प्रस्थकपदशक्यतावच्छेदकस्याव्यासज्यवृत्तित्वेन" इति पाठो युक्तः, "**करणरूपानुप्रवेशस्यापि**" इत्यस्य स्थाने "करणरूपाननुप्रवेशस्यापि" इति पाठः सम्यक्, तथा च ऋजुसूत्रनयेन प्रस्थकपदशक्यतावच्छेदकस्य प्रस्थकात्मक-मापनकरण-धान्याद्यात्मकमेयगतद्वित्वस्य कथञ्चिदव्यासज्यवृत्तित्वेन प्रत्येकावच्छेदेन माने मेये च वृत्तित्वेन प्रस्थकपदेन मापनकरणत्वेनोपलक्षितस्य प्रस्थकस्वरूपस्य विवक्षातः करणत्वमनुपादाय प्रस्थकपदजन्योपस्थितौ प्रस्थकस्वरूपमात्रमान-लक्षणस्य करणरूपाननुप्रवेशस्यापि सम्भवात् प्रस्थकपदोत्तरतृतीयाविभक्त्यैव करणत्वस्योपस्थितिसम्भवेन 'प्रस्थकेन धान्यं मीयते' इति वाक्यात् प्रस्थकनिष्ठकरणतानिरूपकमापनक्रियाकर्म धान्यमिति बोधस्य सम्भवेन न 'प्रस्थकेन धान्यं मीयते' इति वाक्ये तृतीयान्तप्रस्थकपदप्रयोगानुपपत्तिरित्येवं ज्ञातव्यमित्यर्थः।

भेदादेवोभयोपपत्तिरिति चेत् ? तर्हि तादृशतात्पर्यभेद एवोपचाराऽनुपचारप्रयोजक आस्थीयताम्; कात्स्न्र्यविनिर्मोकेणान्वयोपपत्तौ किं शुद्धद्वारेणेति चेत् ? देशाग्रहे तद्विनिर्मोक एव कथम् ? पदशक्त्यनुपग्रहादिति चेत् ? न–स्कन्धपरस्य वृक्षपदस्यैकत्वपरिणतिरूपस्कन्धपदार्थेनैवोपग्रहात्, भेदविनिर्लुण्ठित एव वृक्षपदार्थ आश्रीयत इति चेत् ? न–अनुभवबाधेन तथाश्रयणायोगादिति दिक् । प्रयोगे केत्याद्याकाङ्क्षाबाहुल्याऽबाहुल्यकृतं विशुद्ध्यशुद्धिवैचित्र्यमित्यन्ये । अतिशुद्धौ तु तौ नैगम-व्यवहारनयौ वसन् वसतीत्याहुः स्म, व्युपरताकाङ्क्षाप्रयोगकर्तृत्वादनयोरतिविशुद्धत्वम् ॥ ६८ ॥

ननु वसन् वसतीति वाक्यं गच्छन् गच्छतीति(वाक्य)वन्निराकाङ्क्षतयाऽप्रमाणमिति कथं तत्रातिविशुद्धत्वमित्याशङ्कायामाह—

तात्पर्यं यच्च व्यापकत्वविशिष्टसम्बन्धेन ससर्गबोधेऽन्वयबोधे तात्पर्यं तयोर्भेदादेव, उभयोपपत्तिः– वृक्षे कपिसंयोग इति वृक्षे न कपिसंयोग इति प्रयोगद्वयोपपत्तिरित्यर्थः, यत एव कृत्स्नवृक्षे कपिसंयोगस्य समवायो न विद्यते किन्तु तदेकदेश एव तत एव वृक्षपदेन वृक्षदेश एवोपचारादाश्रित इति तत्र कपिसंयोगस्य समवायो वृक्षे देशाभेदारोपत उपचारादिति तत्र तात्पर्यम्, निषेधे तु व्यापकत्वविशिष्टसमवायस्याभावादेवोपचारमन्तरेण तत्र तात्पर्यमित्येवं तात्पर्यभेद उपचारानुपचारयोरेव प्रयोजकः स्वीक्रियतामिति समाधत्ते– **तर्हीति** । ननु वृक्षे कपिसंयोग इत्यत्र वृक्षे कृत्स्नत्व परित्यज्यैव कपिसंयोगस्यान्वयबोध इत्येतावतैवोपपत्तौ निरुक्ततात्पर्यभेदोऽपि नाश्रित इति कुत उपचारप्रवेश इत्याशङ्कते– **कात्स्न्र्यविनिर्मोकेणेति**– कात्स्न्र्यपरित्यागेनेत्यर्थः । **अन्वयोपपत्तौ** । वृक्षे कपिसंयोगस्यान्वयोपपत्तौ । **किं शुद्धद्वारेण ?** शुद्धसम्बन्धेनान्वयबोधे तात्पर्यतोऽन्वयोपपादनेन । वृक्षे कपिसंयोग इत्यत्र वृक्षपदं न सम्पूर्णवृक्षपरं किन्तु वृक्षैकदेशपरमित्येवं ग्रहे सत्येव कात्स्न्र्यविनिर्मोको नान्यथेति देशग्रह आवश्यकः, स च नोपचारमन्तरेणेत्युपचरित एव वृक्षे कपिसंयोग इति समाधत्ते– **देशाग्रहे** इति । **कथमि**त्यत्र च्छेदः । देशाग्रहेऽपि वृक्षपदस्य सामान्यतः कात्स्न्र्यादिविशेषणविनिर्मुक्ते वृक्षे शक्तिरिति शक्त्यैव कात्स्न्र्यविनिर्मुक्तवृक्षोपस्थितिसम्भवाच्च देशग्रहस्यावश्यकतेति शङ्कते– **पदशक्त्येति**– "**पदशक्त्यनुपग्रहाद्**" इत्यस्य स्थाने "पदशक्त्युपग्रहाद्" इति "पदशक्त्यनुग्रहाद्" इति वा पाठोऽत्र समुचितः, कात्स्न्र्यविनिर्मुक्तवृक्षे वृक्षपदस्य शक्तिबलादेव कात्स्न्र्यविनिर्मोक इति न तत्र देशग्रहापेक्षेति तदर्थः । प्रकारान्तराभावेन वृक्षपदेन वृक्षैकदेशाग्रहणे सर्वेषा मूल-शाखा-प्रशाखानामेकस्कन्धरूपतया या परिणतिः सैव वृक्षपदार्थस्तत्रैव वृक्षपदस्य शक्तिरिति तदुपस्थापिते तत्र कपिसयोगस्यान्वयासम्भवादनुपचरितो वृक्षे कपिसंयोग इति प्रयोगो न सम्भवत्येवेति देशग्रहार्थमुपचार आवश्यक इति समाधत्ते– **नेति** । **स्कन्धपरस्य** स्कन्धशक्तस्य । **एकत्वपरिणतिरूपेति**– वृक्षावयवाना मूलादीनामेकतया या परिणतिस्तदात्मकेत्यर्थः । ननु वृक्षपदार्थेनोपग्रहो ममापि सम्मतः किन्तु वृक्षपदार्थो न वृक्षैकदेशरूपो नवा कृत्स्नवृक्षरूपोऽपि तु तद्विनिर्मुक्तो वृक्ष एव केवल इत्यादशङ्कते– **भेदविनिर्लुठित एवेति**– कृत्स्नैकदेशलक्षणभेदरहित एवेत्यर्थः । प्रत्यक्षादिप्रमाणेन कृत्स्नवृक्षोऽनुभूयते तदैकदेशो वाऽनुभूयते, न तु भेदविनिर्लुठितवृक्षमात्रमित्यसतस्तदाश्रयणासम्भवादिति समाधत्ते– **नेति** । **तथाश्रयणेति**– भेदविनिर्लुठितवृक्षपदार्थाश्रयणेत्यर्थः । लोके वसामीत्युक्ते केत्याकाङ्क्षाबाहुल्यम्, तदपेक्षया किञ्चिन्न्यूनमाकाङ्क्षाबाहुल्यं तिर्यग्लोके वसामीत्यत्र, तदपेक्षया न्यूनाकाङ्क्षासमुदयो जम्बूद्वीपे वसामीत्यत्र, तदपेक्षयाऽपि न्यूनः– केत्याकाङ्क्षासमुदयो भारते वसामीत्यत्र, एवमुत्तरोत्तर न्यूनः केत्याकाङ्क्षासमुदय इत्येवं केत्याद्याकाङ्क्षाबाहुल्याबाहुल्यकृतं तथाऽभ्युपगन्तृनैगम व्यवहारभेदाना विशुद्ध्यशुद्धिवैचित्र्यमित्यभ्युपगच्छता मतमुपदर्शयति– **प्रयोग** इति ।

उत्तरार्द्धं विवृणोति· **अतिशुद्धौ त्विति** । **ताविति** मूलस्य व्याख्यानं– **नैगम-व्यवहारनयाविति** । कथं वसन् वसतीति प्रयोगकर्त्रोर्नैगम-व्यवहारनययोरतिशुद्धत्वमित्याकाङ्क्षायामाह– **व्युपरतेति**– व्युपरता निवृत्ताऽऽकाङ्क्षा यत्र स व्युपरताकाङ्क्ष एवम्भूतो य प्रयोगो निवसन् वसतीत्येवंरूपस्तत्कर्तृत्वात्, **अनयोः** नैगम-व्यवहारनययो, **अतिविशुद्धत्वं** लोके वसामीति प्रयोगकर्तृनैगमाद्यपेक्षया शुद्धत्वं तिर्यग्लोके वसामीति प्रयोगकर्त्रोः, तदपेक्षया शुद्धत्वं जम्बूद्वीपे वसामीति प्रयोगकर्त्रोः, एवमुत्तरोत्तरक्रमेण सर्वापेक्षया विशुद्धत्वं वसन् वसतीति प्रयोगकर्त्रोर्नैगमव्यवहारयोरित्यर्थः ॥ ६८ ॥

**नयामृत०**—गृहे इति–गृहपर्यन्तवसतिविषया नैगम-व्यवहारभेदा उदाहरणीयाः । नन्वाधारता आधारस्वरूपा तत्संयोगस्वरूपा वा ? उभयथापि गृहकोण इव लोकेऽप्येकक्षेत्रतया तदविशेषात् किं विशुद्धितारतम्यम् ?, नह्यत्र प्रस्थकन्यायवद् गौणमुख्यकृतो विषयविशेषोऽस्तीति चेत् ? सत्यम्–देवदत्तसंयोगपर्यायपरिणतगृहकोणक्षेत्रस्याखण्डक्षेत्राद् धर्मभेदादेशेन पृथक्कृतस्य यथाक्रमं गुरुगुरुतरविषये अभेदोपचारेण विशुद्ध्यपकर्षसम्भवात्, अन्यथा लोके वसामीत्यन्वयस्यैवानुपपत्तिः, नहि कृत्स्ने लोके देवदत्तवसतिरस्ति, न च विनोपचारं कृत्स्नलोकरूढाल्लोकपदात् तद्देशोपस्थितिरस्ति; हन्तैवं वृक्षे कपिसंयोग इत्यत्राप्युपचारः स्यादिति चेत् ? कः किमाह ?, स्यादेव, कथमन्यथा वृक्षे न किमपिसंयोगः किन्तु तद्देश इत्यनुपचरितः प्रयोगः, शुद्धसम्बन्ध-व्यापकत्वविशिष्टसम्बन्धसंसर्गबोधतात्पर्य-

---

एकवाक्यस्वरूपत्वेन युग्मात्मके पद्यद्वये सप्तपष्ठितमपद्यं व्याख्यायाष्टषष्टितमपद्यं विवृणोति–**गृहे इतीति** । पद्ये "**कोणं**" इत्यस्य स्थाने "कोणे" इति पाठो युक्तः, '**वसतेः कोणे**' इत्यस्य 'गृहस्य कोणे' इत्यर्थः । सर्वेषां सप्तम्यन्तानां वसतीत्यनेन सम्बन्धः । फलितार्थमावेदयति–**गृहपर्यन्तेति**– अत्र 'गृहकोणपर्यन्त' इति पाठो युक्तः । शङ्कते-**नन्विति** । **तत्संयोगरूपा** आधारेण सहाधेयस्य यः संयोगस्तदात्मिका । **उभयथाऽपि** आधारस्वरूपत्वे तत्संयोगस्वरूपत्वेऽपि च । **तदविशेषात्** आधारत्वस्य सर्वत्राविशिष्टत्वात् । '**नहि**' इत्यस्य 'अस्ति' इत्यनेनान्वयः । **अत्र** वसतिदृष्टान्ते । समाधत्ते– **सत्यमिति** । **देवदत्तेति**– देवदत्तेन सह यः संयोगलक्षणः पर्यायस्तदात्मना परिणत यद् गृहकोणात्मक क्षेत्रं तस्य, अखण्डक्षेत्राद्– अधर्मास्तिकायव्याप्ताकाशात्मकलोकादिलक्षणक्षेत्राद्, धर्मभेदादेशेन– धर्मभेदाश्रयणेन, पृथक्कृतस्य– धर्मभेदाद् धर्मिभेद इति न्यायतो विभिन्नतामितस्य, यथाक्रमं– देवदत्तवसतेर्मुख्यमाधारक्षेत्रं गृहकोणलक्षण तदपेक्षया गुरु गृहम्, तत्र गृहकोणस्याभेदोपचारेण गृहस्य देवदत्तवसतेराधारक्षेत्रत्वम्, एवं गृहापेक्षया पाटलीपुरपत्तन गुर्विति तद्गृहकोणापेक्षया गुरुतरम्, तत्र गृहकोणस्याभेदोपचारेणेत्येव क्रमेण गुरुगुरुतरविषये मुख्याधारगृहकोणाभेदोपचारेण, अर्थाद् गृहादिक गृहकोणाभेदारोपाद् देवदत्तवसत्याधारक्षेत्रं न तु तदनुपचाराद्, अनुपचारतस्तु गृहकोण एव तदाधार इत्येव मुख्य-गौणकृतस्यात्रापि विशुद्ध्यपकर्षस्य सम्भवादित्यर्थः । **अन्यथा** मुख्याधारस्य गृहकोणस्य गृहादारभ्य लोकपर्यन्तमभेदारोपस्यानाश्रयणे । अखण्डक्षेत्रलोकादिवाचकलोकादिपदाल्लोकादेरेवोपस्थितिर्न तु गृहकोणस्य, लोकादेश्च कृत्स्नस्य न देवदत्तवसत्याधारत्वमिति लोके वसामि तिर्यग्लोके वसामीत्यादिप्रयोगोऽन्वयानुपपत्त्या न स्यादित्याह– **लोक** इति– लोके वसामीत्युपलक्षण तिर्यग्लोके वसामीत्यादेरपि । '**नहि**' इत्यस्य 'अस्ति' इत्यनेनान्वयः । '**न च**' इत्यस्य 'अस्ति' इत्यनेनान्वय । ननु कृत्स्नस्य वृक्षस्यापि न कपिसयोगाधारत्व किन्तु तदवयवस्य शाखाविशेषस्यैव, शाखाविशेषस्य च न कृत्स्नवृक्षवाचिवृक्षपदाद् विनोपचारमुपस्थितिरित्यन्वयानुपपत्त्या वृक्षे कपिसंयोग इत्यत्रापि वृक्षस्य तद्देशेऽभेदारोपतो वृक्षपदस्य तद्देश उपचारः स्यादित्याशङ्कते– **हन्तैवमिति** । यत एव वृक्षे कपिसंयोग इत्युपचरितः प्रयोगस्तत एव वृक्षे न कपिसंयोगः किन्तु तद्देशे इत्यनुपचरितः प्रयोग उपपद्यते, अन्यथाऽखण्डवृक्षस्वरूपे कपिसयोगस्य सद्भावे वृक्षे न कपिसयोग इत्येव न स्यात् प्रतियोगिना सममत्यन्ताभावस्य विरोधादिति समाधत्ते- **कः किमाहेति**– कः प्रमाता, किं ब्रवीति, न कोऽपि वृक्षे कपिसंयोग इत्यत्र नोपचार इति ब्रवीतीत्यर्थः । **स्यादेव** वृक्षे कपिसंयोग इत्यत्राप्युपचारः स्यादेव । '**कथम्**' इत्यस्य 'अनुपचरितः प्रयोगः' इत्यत्रान्वयः । **अन्यथा** वृक्षे कपिसयोग इत्यत्रोपचाराभावे । "**किमपि संयोगः**" इत्यस्य स्थाने "कपिसंयोग" इति पाठो युक्तः । ननु उपचारानाश्रयणेऽपि वृक्षे कपिसंयोग इत्यत्र शुद्धसमवायलक्षणसम्बन्धेन वृक्षे कपिसयोगबोधने निरुक्तवाक्यतात्पर्यमिति शुद्धसमवायो वृक्षे कपिसंयोगस्य वर्तत इति वृक्षे कपिसंयोग इत्यनुपचरितः प्रयोग उपपद्यते, वृक्षे न कपिसंयोग इत्यत्र वृक्षव्यापकत्वविशिष्टसमवायसम्बन्धेन वृक्षे कपिसंयोगस्य निषेधबोधने वृक्षे न कपिसंयोग इति वाक्यस्य तात्पर्यमिति वृक्षव्यापकत्वविशिष्टसमवायसम्बन्धावच्छिन्नकपिसंयोगनिष्ठप्रतियोगिताकाभावस्य वृक्षे सद्भावाद् वृक्षे न कपिसयोग इत्यप्यनुपचरितः प्रयोगः, वृक्षदेशे कपिसयोग इत्यस्यापि वृक्षदेशव्यापकत्वविशिष्टसमवायसम्बन्धेन वृक्षदेशे कपिसंयोगबोधने तात्पर्यम्, वृक्षदेशे कपिसयोगस्य तद्व्यापकत्वविशिष्टसमवायसम्बन्धस्य सद्भावादनुपचरितस्तत्प्रयोग उपपद्यत इति न कुत्राप्युपचाराश्रयणकृत्यमित्याशङ्कते– **शुद्धसम्बन्धेति**– शुद्धसम्बन्धेन यत्संसर्गबोधे

भेदादेवोभयोपपत्तिरिति चेत्? तर्हि तादृशतात्पर्यभेद एवोपचाराऽनुपचारप्रयोजक आस्थीयताम्; कार्त्स्न्यविनिर्मोकेणान्वयोपपत्तौ किं शुद्धद्वारेणेति चेत्? देशाग्रहे तद्विनिर्मोक एव कथम्? पदशक्त्यनुपग्रहादिति चेत्? न—स्कन्धपरस्य वृक्षपदस्यैकत्वपरिणतिरूपस्कन्धपदार्थेनैवोपग्रहात्; भेदविनिर्लुण्ठित एव वृक्षपदार्थ आश्रीयत इति चेत्? न—अनुभवबाधेन तथाश्रयणायोगादिति दिक्। प्रयोगे क्वेत्याद्याकाङ्क्षाबाहुल्याऽबाहुल्यकृतं विशुद्ध्यशुद्धिवैचित्र्यमित्यन्ये। अतिशुद्धौ तु तौ नैगम-व्यवहारनयौ वसन् वसतीत्याहतुः स्म, व्युपरताकाङ्क्षाप्रयोगकर्तृत्वादनयोरतिविशुद्धत्वम् ॥ ६८ ॥

ननु वसन् वसतीति वाक्यं गच्छन् गच्छतीति(वाक्य)वन्निराकाङ्क्षतयाऽप्रमाणमिति कथं तत्रातिविशुद्धत्वमित्याशङ्कायामाह—

तात्पर्यं यच्च व्यापकत्वविशिष्टसम्बन्धेन संसर्गबोधेऽन्वयबोधे तात्पर्यं तयोर्भेदादेव, उभयोपपत्तिः— वृक्षे कपिसंयोग इति वृक्षे न कपिसंयोग इति प्रयोगद्वयोपपत्तिरित्यर्थः, यत एव कृत्स्नवृक्षे कपिसंयोगस्य समवायो न विद्यते किन्तु तदेकदेश एव तत एव वृक्षपदेन वृक्षदेश एवोपचारादाश्रित इति तत्र कपिसंयोगस्य समवायो वृक्षे देशाभेदारोपत उपचारादिति तत्र तात्पर्यम्, निषेधे तु व्यापकत्वविशिष्टसमवायस्याभावादेवोपचारमन्तरेण तत्र तात्पर्यमित्येवं तात्पर्यभेद उपचारानुपचारयोरेव प्रयोजकः स्वीक्रियतामिति समाधत्ते— **तर्हीति**। ननु वृक्षे कपिसंयोग इत्यत्र वृक्षे कृत्स्नत्व परित्यज्यैव कपिसंयोगस्यान्वयबोध इत्येतावतैवोपपत्तौ निरुक्ततात्पर्यभेदोऽपि नाश्रित इति कुत उपचारप्रवेश इत्याशङ्कते— **कार्त्स्न्यविनिर्मोकेणेति**— कार्त्स्न्यपरित्यागेनेत्यर्थः। **अन्वयोपपत्तौ**। वृक्षे कपिसंयोगस्यान्वयोपपत्तौ। **किं शुद्धद्वारेण?** शुद्धसम्बन्धेनान्वयबोधे तात्पर्यतोऽन्वयोपपादनेन। वृक्षे कपिसंयोग इत्यत्र वृक्षपदं न सम्पूर्णवृक्षपरं किन्तु वृक्षैकदेशपरमित्येवं ग्रहे सत्येव कार्त्स्न्यविनिर्मोको नान्यथेति देशग्रह आवश्यक., स च नोपचारमन्तरेणेत्युपचरित एव वृक्षे कपिसंयोग इति समाधत्ते— **देशाग्रहे** इति। **कथमि**त्यत्र च्छेदः। देशाग्रहेऽपि वृक्षपदस्य सामान्यत कार्त्स्न्यादिविशेषणविनिर्मुक्ते वृक्षे शक्तिरिति शक्त्यैव कार्त्स्न्यविनिर्मुक्तवृक्षोपस्थितिसम्भवान्न देशग्रहस्यावश्यकतेति शङ्कते— **पदशक्त्येति**— "**पदशक्त्यनुपग्रहाद्**" इत्यस्य स्थाने "पदशक्त्युपग्रहाद्" इति "पदशक्त्यनुग्रहाद्" इति वा पाठोऽत्र समुचित., कार्त्स्न्यविनिर्मुक्तवृक्षे वृक्षपदस्य शक्तिबलादेव कार्त्स्न्यविनिर्मोक इति न तत्र देशग्रहापेक्षेति तदर्थः। प्रकारान्तराभावेन वृक्षपदेन वृक्षैकदेशाग्रहणे सर्वेषां मूल-शाखा-प्रशाखानामेकस्कन्धरूपतया या परिणतिः सैव वृक्षपदार्थस्तत्रैव वृक्षपदस्य शक्तिरिति तदुपस्थापिते तत्र कपिसंयोगस्यान्वयासम्भवादनुपचरितो वृक्षे कपिसंयोग इति प्रयोगो न सम्भवत्येवेति देशग्रहार्थमुपचार आवश्यक इति समाधत्ते— **नेति**। **स्कन्धपरस्य** स्कन्धशक्तस्य। **एकत्वपरिणतिरूपेति**— वृक्षावयवाना मूलादीनामेकतया या परिणतिस्तदात्मकेत्यर्थः। ननु वृक्षपदार्थेनोपग्रहो ममापि सम्मतः किन्तु वृक्षपदार्थो न वृक्षैकदेशरूपो नवा कृत्स्नवृक्षरूपोऽपि तु तद्विनिर्मुक्तो वृक्ष एव केवल इत्यादशङ्कते— **भेदविनिर्लुठित एवेति**— कृत्स्नैकदेशलक्षणभेदरहित एवेत्यर्थः। प्रत्यक्षादिप्रमाणेन कृत्स्नवृक्षोऽनुभूयते तदेकदेशो वाऽनुभूयते, न तु भेदविनिर्लुठितवृक्षमात्रमित्यसतस्तदाश्रयणासम्भवादिति समाधत्ते— **नेति**। **तथाश्रयणेति**— भेदविनिर्लुठितवृक्षपदार्थाश्रयणेत्यर्थः। लोके वसामीत्युक्ते क्वेत्याकाङ्क्षाबाहुल्यम्, तदपेक्षया किञ्चिन्न्यूनमाकाङ्क्षाबाहुल्य तिर्यग्लोके वसामीत्यत्र, तदपेक्षया न्यूनाकाङ्क्षासमुदयो जम्बूद्वीपे वसामीत्यत्र, तदपेक्षयाऽपि न्यूनः— क्वेत्याकाङ्क्षासमुदयो भारते वसामीत्यत्र, एवमुत्तरोत्तरं न्यूनः क्वेत्याकाङ्क्षासमुदय इत्येवं क्वेत्याद्याकाङ्क्षाबाहुल्याबाहुल्यकृतं तथाऽभ्युपगन्तृनैगम व्यवहारभेदाना विशुद्ध्यशुद्धिवैचित्र्यमित्यभ्युपगच्छता मतमुपदर्शयति— **प्रयोग** इति।

उत्तरार्द्धं विवृणोति· **अतिशुद्धौ त्विति**। **ताविति** मूलस्य व्याख्यानं— **नैगम-व्यवहारनयाविति**। कथं वसन् वसतीति प्रयोगकर्त्रोर्नैगम-व्यवहारनययोरतिशुद्धत्वमित्याकाङ्क्षायामाह— **व्युपरतेति**— व्युपरता निवृत्ताऽऽकाङ्क्षा यत्र स व्युपरताकाङ्क्ष एवम्भूतो यः प्रयोगो निवसन् वसतीत्येवंरूपस्तत्कर्तृत्वात्, **अनयोः** नैगम-व्यवहारनययो', **अतिविशुद्धत्वं** लोके वसामीति प्रयोगकर्तृनैगमाद्यपेक्षया शुद्धत्वं तिर्यग्लोके वसामीति प्रयोगकर्त्रो., तदपेक्षया शुद्धत्वं जम्बूद्वीपे वसामीति प्रयोगकर्त्रोः, एवमुत्तरोत्तरक्रमेण सर्वापेक्षया विशुद्धत्वं वसन् वसतीति प्रयोगकर्त्रोर्नैगमव्यवहारयोरित्यर्थ· ॥ ६८ ॥

**तदर्थस्तत्र तत्कालावच्छिन्ना तस्य वृत्तिता ।**
**वसत्यद्य न सोऽत्रेति, व्यवहारौचिती ततः ॥ ६९ ॥**

**नयामृत०**—तदर्थः-वसन् वसतीत्यस्यार्थः, तत्र-पाटलीपुरे, तस्य-देवदत्तस्य, तत्कालावच्छिन्ना-वर्तमानकालावच्छिन्ना, वृत्तिता-स्वत्वप्रयुक्तयथेष्टविनियोगरूपा, तथा च वसन् वसतीत्यस्य वर्त्तमानकालावच्छिन्नवृत्तितावान् वसतीतिक्रियारूपप्रतिपाद्य इति लक्षणयार्थः कर्त्तव्य इत्यर्थः । ततः-तदर्थकरणादेव, पाटलीपुरादेकस्मिन् दिनेऽन्यत्र गते देवदत्ते 'अद्य सोऽत्र न वसति' इति व्यवहारस्यौचित्यम्, अन्यथा पाटलीपुरपदे तद्गृहपदेऽपि(च) तद्वासितां देवदत्तस्य(च) रूप [लक्षण]-लक्षणां कालघटितामादाय स व्यवहारो न स्यादित्यर्थः ॥ ६९ ॥

नन्वेवमन्यत्र गतेऽप्ययं पाटलीपुरवासीति कथं व्यवहार इत्यत्राह—

**यत् त्वन्यत्र गतस्यापि, तद्वासित्वं निगद्यते ।**
**तद्वासवृत्तिभागित्वे, ज्ञेयं तत् त्वौपचारिकम् ॥ ७० ॥**

**नयामृत०**—यत्त्विति । यत्त्वन्यत्र गतस्यापि, तद्वासित्वं-पाटलीपुरवासित्वम्, निगद्यते तन्निगदं तु, तद्वासवृत्तिभागित्वे-पाटलीपुरवासप्रयुक्तवृत्तिभागित्वे, औपचारिकं लाक्षणिकं ज्ञेयम्, अत

---

एकोनसप्ततितमपद्यमवतारयति-**नन्विति**त्यादिना । **तत्र** वसन् वसतीति वाक्यप्रयोगकर्तरि । विवृणोति- **तदर्थ** इति-अत्र तच्छब्देन वसन् वसतीति वाक्यस्य परामर्श इत्यभिप्रायेण तद्विवरणं- **वसन् वसतीत्यस्यार्थ** इति । **तत्रेति** मूलस्य विवरण- **पाटलीपुरे** इति । तस्येत्यस्य विवरण- **देवदत्तस्येति** । **तत्कालावच्छिन्नेत्यस्य** विवरणं- **वर्तमानकालावच्छिन्नेति** । **वृत्तितेत्यस्य** विवरणं- **स्वत्वप्रयुक्तयथेष्टविनियोगरूपेति**-अतिथिरप्यन्यस्य गृहं गत्वा तत्र कञ्चित् कालं तिष्ठति, एवमहमप्यत्र वसामीति न ब्रूते, यत्काले स तत्र तिष्ठति तत्कालात्मकवर्तमानकालावच्छिन्ना आधेयतारूपा तद्गृहनिरूपिता वृत्तिता तु तस्य समस्त्यतो वृत्तिताया उक्तस्वरूपतया निर्वचनम् । एव चान्यस्वामिकगृहग्रामादावन्यस्यातिथ्यादे स्वत्वाभावात् तत्प्रयुक्तो यथेष्टविनियोगो न सम्भवति, यस्य तु देवदत्तादेस्तत्र स्वत्वं तस्य स्वत्वप्रयुक्तो यथेष्टविनियोग सम्भवतीति तद्रूपा तस्य तत्र वृत्तिता घटनामाप्नोतीत्याशयः । **तथा च** उक्तदिशा प्रत्येकशब्दनिर्वचने च । **वर्तमानकालावच्छिन्नवृत्तितावान्** 'वसन्' इत्यस्यार्थः, **वसतीत्यस्य** वसतीत्येवं यत् क्रियारूपं तत्प्रतिपाद्य इत्यर्थः । उक्तार्थः शब्दशक्तिमहिम्ना न सम्भवतीत्युक्त- **लक्षणयेति** । **इत्यर्थः** एवंस्वरूपः पूर्वार्द्धस्यार्थः ।

उत्तरार्द्ध विवृणोति- **तत** इति- अस्य **तदर्थकरणादेवेति** विवरणम् । अद्येत्यादिमूलसङ्गमनाय 'पाटलीपुरादेकस्मिन् दिनेऽन्यत्र गते देवदत्ते' इति पूरणम्, निरुक्तव्यवहारस्य पाटलीपुरे तत्कालावच्छिन्नवृत्तित्वस्य देवदत्तेऽभावादौचित्य निर्वहतीति । **अन्यथा** वर्तमानकालावच्छिन्नस्वत्वप्रयुक्तयथेष्टविनियोगरूपवृत्तित्वस्य वसत्यर्थतयाऽनाश्रयणे । **पाटलीपुरपदे** पाटलीपुरात्मकस्थाने । **तद्गृहपदेऽपि च** पाटलीपुरान्तर्गतदेवदत्तनिवासगृहात्मकस्थानेऽपि च । **तद्वासितां** पाटलीपुरवासिता पाटलीपुरान्तर्गतगृहवासितां वा । **"देवदत्तस्य [च रूपलक्षण] लक्षणां"** इत्यस्य स्थाने "देवदत्तस्य स्वत्वलक्षणां" इति पाठो युक्त. । **कालघटिताम्** एतद्दिवसघटिताम् । **व्यवहारः** अद्य सोऽत्र न वसतीति व्यवहार. । **न स्यात्** ग्रामान्तरगतस्यापि देवदत्तस्य ग्रामान्तरावस्थानदिवसेऽपि स्वपुरस्वगृहादौ स्वत्वमस्त्येवेति तन्निषेधव्यवहारो न भवेत् । **इत्यर्थः** एवंस्वरूप उत्तरार्द्धार्थः ॥ ६९ ॥

सप्ततितमपद्यमवतारयति- **नन्वेवमिति** । विवृणोति- **यत्त्वितीति** । **तत् त्वित्यस्य** विवरण- **तन्निगदं त्विति**- पाटलीपुरवासित्ववचनं पुनरित्यर्थः । **पाटलीति**-पाटलीपुरवासनिबन्धना या वृत्ति.- स्वधनपुत्रादिस्वामित्वलक्षणा, तद्भागित्वे- तदाश्रयत्वे इत्यर्थ. । **औपचारिकमिति** मूलस्य विवरण- **लाक्षणिकम्** । **अत एव** पाटलीपुरवासित्ववचनस्य पाटलीपुरवासप्रयुक्तवृत्तिभागित्वे लाक्षणिकत्वादेव । **उभयत्र** पाटलीपुरे ग्रामान्तरे च, यः पुरुषः पाटलीपुरे ग्रामान्तरे

उस समय श्री संघकी ओरसे यह भी कहा गया कि देव-मन्दिर परव ( ? ) आदि भी करवा दिये जाय तो उत्तम हो। क्यों कि म्लेच्छोंने मुख्य भवन का भी विनाश किया है[1]। इसके अतिरिक्त यवनों ने देवकुलिकाएँ ( देहरी ) भी गिरादी हैं। ये कार्य होने भी बहुत आवश्यक हैं। यह सुनकर एक पुण्यशाली श्रावकने संघसे विनती की कि मुख्य प्रासाद का उद्धार मेरी ओर से होने का आदेश मिलना चाहिये। संघने प्रत्युत्तर दिया कि आपका उत्साह तो सराहनीय है पर जो व्यक्ति जिनबिंबका उद्धार कराता है उसही के द्वारा यदि मुख्य प्रासादका उद्धार हो तो सोने में सुगंध सदृश शोभा और उत्साहमें अभिवृद्धि होंगे। जिसके यहाँ का भोजन हो उसीके यहाँ का ताम्बूल होता है। इस प्रकार श्री संघने समरसिंहको इष्ट आदेश दे दिया और शेष देवकुलिकाएँ वगेरह के लिये अन्यान्य सद्गृहस्थों को आदेश दिया गया था। तत्पश्चात् सब सभासद प्रसन्नचित्त हो अपने अपने घर गए।

---

१ साक्षर श्रीजिनविजयजीने अपने सम्पादित " शत्रुंजय तीर्थोद्धार प्रबंध " के उपोद्धात के पृष्ठ २८ वें में लिखा हैं—" वर्तमान में जो मुख्य मन्दिर है और जिसका चित्र इस प्रबंध के प्रारम्भ में दिया गया है वह, विश्वस्त प्रमाणों से मालूम होता है, गुर्जर महामात्य वाहड़ ( संस्कृत में वाग्भट ) से उद्धरित हुआ है। किन्तु प्रबंधकारके कथनानुसार बाहड़मंत्रीद्वारा उद्धरित मुख्य मन्दिर का भी म्लेच्छोंने विध्वंस किया था। जिस स्थानसे यह मन्दिर भंग हुआ था उस जगहसे कलश पर्यंत मुख्य भवन के शिखर का उद्धार पीछेसे देसलशाह और समरसिंहने कराया था। ऐसा प्रबंध में आगे उल्लेखित है।

आदेश मिलजाने के कारण देसलशाह और हमारे चरित-नायक बहुत प्रसन्नचित्त हुए। उनका उत्साह परिवर्द्धित हुआ। राणा के नगर को अधिक धन और मनुष्य और भेजे गये। मंत्री पाताशाहने भी शिला के निकलने पर सूत्रधारों को सुवर्ण आभूषण और बहुमूल्य वस्त्र प्रदान किये थे। यह समाचार सुनकर स्वयं राणा महीपालदेव भी आरासण पाषाण की खानपर पहुँचे और खान से निकली हुई फलही को प्रत्यक्ष जिनबिंब समझकर कालेच, कस्तूरी, घनसार, कर्पूर और पुष्पों से श्रद्धा और भक्ति-सहित विधिपूर्वक पूजा की। राणाने फलही की पूजा के उपलक्ष में बहुतसा द्रव्य दान में दिया। इस प्रकार यह उत्सव भी धूम-धाम से मनाया गया।

सूत्रधारोंने प्रस्तुत फलही को पर्वतपर से नीचे बहुत यत्न-पूर्वक उतारी। वह शिला आरासण नगर में महोत्सवद्वारा प्रविष्ट की गई। आरासण ग्राम के श्रावक भी फलही की अगवानी करने के लिए आए और उन्होंने श्रद्धासहित फूल और कर्पूर आदि सुगंधित द्रव्यों से पूजा की। उस समय गीत, गायन, बाजों और हर्ष का चारों ओर कोलाहल सुनाई देता था। ऐसी ध्वनि सुनने-वाले वास्तव में परम सौभाग्यशाली थे। वहाँ स राणाजी मही-पालदेव अपने चतुरमंत्री पाताशाह को तत्सम्बन्धी उपयुक्त सूचनाएँ देकर अपने नगर की ओर पधारे।

इस शिला को पहाड़ी भूमि में से लाने के लिए मंत्रीश्वरने

यह प्रबंध किया कि उस फलही को एक मजबूत रथ में रखा दी गई। रथ के आगे और पीछेसे फलही मजबूत रस्सों से बांध दी गई। रथ को खींचने के लिए बलवान धवल—बैल रथ में जोते गए थे। रथ के चलते समय पहियों पर तेल की धारें प्रवाहित हो रही थीं। पहाड़ो का रास्ता ऊँचा नीचा था जिसे मजदूर साफ कर रहे थे। इस प्रकार प्रबल प्रयत्न से फलही पहाड़ी भूमि को पारकर मैदान में लाई गई। कुमारसेना नामक ग्राम के निकट जो समभूमि है वहाँ पर रथ ठहराया गया तो त्रिसंगमपुर के लोग फलही को देखने के लिए ठट्ठ के ठट्ठ आने लगे। इस प्रकार एक बड़ा समारोह हो गया। पाताशाहने समरसिंह को संदेश भेजने के लिए पाटण को आदमी भेजे। आदमियोंने जाकर हमारे चरित-नायक को वे समाचार सुनाए जिसकी कि वे प्रतीक्षा कर रहे थे। यह सुनकर कि फलही कुमारसेना ग्राम के पास पहुँच गई है वे परम प्रसन्न हुए।

हमारे चरितनायकने बलवान बैलों की खोज करवाई लोगोंने देसलशाह और समरसिंह को सहायता करने के लिए बैल बिना किराए ही दे दिये। क्योंकि इन्होंने अपने अलौ-किक गुणों द्वारा सब के हृदय में विशेष स्थान कर रखा था। समरसिंहने आए हुए बैलों में से १० बैल जो सर्वोत्तम थे चुने। जिन लोगों के बैल समरसिंहने पसंद नहीं किये थे वे अप्रसन्न हुए। किन्तु समरसिंहने उन्हें मधुरवाणी से समझाया कि मैं बिना जरूरत सब बैलों को तकलीफ देकर क्या करूं। बैल एक

मजबूत गाडी सहित कुमारसेना नगर को भेज दिये गये। साथ में ऐसे सावधान और कार्यकुशल लोगों को भी भेजा जो फलही को बड़ी आसानी से निर्विघ्नतया ले आ सकें। फलही में इतना भार था कि लोह की मँढी गाडी भी टूटकर चकनाचूर हो गई। मंत्रीश्वर पाताशाहने समरसिंह के पास आदमी भेजकर दूसरी गाडी मंगवाई। शुभकार्य में यह विघ्न देखकर हमारे चरित-नायक चिंता सागर में निमग्न हो गए। अंत में समरसिंहने शासनदेवी का स्मरण तथा आराधन किया। शासनदेवीने आकर तुरन्त आश्वासनपूर्वक सर्वयुक्ति बतला दी। तदनुसार समरसिंहने जंजाग्राम से देवाधिष्ठित रथ मंगवा के बलवान् बैलों और चतुर मनुष्यों को कुमारसेना नामक ग्राम भेजा। बस, सब विघ्न दूर हो गये और मंत्रीश्वर पाताशाहने बड़ी खूबी से उस शिला को गाडीपर चढ़ा के रवाना की। ग्राम ग्राम के लोग कदम कदमपर उस भावी मूर्त्ति की पुष्प, चन्दन, कपूर और पुष्पों से पूजन करते थे क्रमशः सब खेरालुपुर आ पहुँचे। वहाँ के संघने भी भक्ति-पूर्वक उस फलही का द्रव्यभाव से पूजन कर नगर प्रवेश कराया।

खेरालुपर से रवाना हो पगपग पूजित होती हुई कितने ही दिनों बाद फलही भाडूँ नामक ग्राम में पहूँची। उस समय फलही के दर्शन की उत्कंठा से देसलशाह अपने पूज्य आचार्य श्री

---

१ समरारासकारने इस विषय को संक्षिप्त से लिखा है परन्तु प्रबन्धकारने इस को खूब विस्तृतरूप से उल्लेख किया है क्योंकि प्रबन्धकारने यह बातें सब अपनी आंखों से देखी थीं।

सिद्धसूरि तथा पाटण के कई धनी मानी अपने इष्टमित्रों तथा कुटुम्बियों को ले कर भाड्ड ग्राम में पहुंचे। वहां जा देसलशाहने फलही की पूजा कर चित्त में परम प्रसन्नता प्राप्त की। सहस्रों गवैये और विरदावली कहनेवाले भाट आदि उस जगह एकत्रित हुए जिन के निनाद से आकाश गुंज उठा था। हमारे चरितनायक ने अपने पिताश्री के आदेशानुसार सब याचकों को वस्त्र आदि दे कर संतुष्ट किया। सब लोगोंने भी आदर पूर्वक फलही का पूजन किया। देसलशाह की महिमा सब ओर से सुनाई पड़ती थी। स्वामिवात्सल्य का प्रीति भोजन भी हुआ था। जगह जगह रास और गायन हुए तथा योग्य व्यक्तियों को विपुल द्रव्य पारितोषिक में दिया गया।

फिर देसलशाहने फलही को आगे चलने दिया, और आप पीछे पैदल चलने लगे। इस प्रकार देसलशाह अपने घर पहुंचे।

फलही जब पाटणनगर के द्वार पर पहुंची तो श्रीसंघने उसे बहुत मोद और परम उत्साह से बधाया। स्वागत की प्रचुर सामग्री प्रस्तुत थी। बालचन्द्र मुनिवर्य से शीघ्र ही श्रेष्ठ कर्म कराया था। स्वामी की मूर्त्ति जो प्रकट हुई थी ऐसी मालूम देती थी मानो कर्पूर अथवा क्षीरसागर के सार से ही देह बनाई गई होगी। यह भव्य मूर्त्ति संसार के लोगों पर परम कृपा प्रकट कर रही है ऐसा भासित होता था। आनंद जो अपूर्व और वास्तव में अ-लौकिक था लोगों के उर में समाता नहीं था। उत्साह दर्शकों की पसलिऐं तोड़ डाल रहा था। देशलपुत्र श्रीसमरसिंह का चरित्र देख

कर सब मंत्रमुग्ध थे । हमारे चरितनायक के उत्साह, उमंग और सौजन्य की भूरि भूरि प्रशंसा सब ओर से सुनाई दे रही थी।

ग्रामों और नगरों के संघोंसे विविध प्रकार पूजा सत्कार पाती हुई फलही अनुक्रम से पुंडरिक गिरि के नीचे पहुँची । पादलिप्त ( पालीताणा ) के श्रीसंघने पुनः उत्साह से फलही का आगमनोत्सव धूमधाम पूर्वक मनाया । शत्रुंजयगिरि पहुँच जाने के समाचार हमारे चरितनायक को मिले तो आपने वधाई लानेवाले को प्रचुर द्रव्य दे कर निहाल किया । उन लोगों को आपने हिदायत की कि पर्वतपर चढ़ाते समय उन उन बातोंपर विशेष ध्यान रखा जाय कि जिस के कारण कार्य निर्विघ्नतया सम्पादित हो। पाटणनगर के विशेषज्ञ १६ सूत्रधारों को बुला कर मूर्त्ति घड़ने के लिये शत्रुंजय पर्वतपर भेजने के लिये नियुक्त किया । नूतन सौराष्ट्र नरेश मंडलिक जिन मुनिवर्य को सदा पितृव्य ( चाचा ) के नाम से सम्बोधित करता था ऐसे राजमान्य मुनिवर्य जिन का नाम बालचन्द्र था और जो उस समय जूनागढ़ में विराजमान थे, उनको श्री शत्रुंजय गिरि पर शीघ्र बुलाया गया था।[1] बालचंद्रमुनिने शत्रुंजयगिरि पर पहुँच फलही को गाड़ी में से सूत्रधारोंद्वारा नीचे

---

१ तथा श्री जीर्णप्राकारात् मण्डलीक महाभुजा ।
नवद्रव्य सुराष्ट्राणामधिपेन य उच्यते ॥
पितृव्य इति तं साधुर्बालचन्द्राभिधं मुनिम् ।
भानाययन्नरान् प्रेष्य शीघ्रं शत्रुंजये गिरौ ।
—नाभिनंदनोद्धार प्रबंध प्रस्ताव ४ र्थ श्लोक १७

उतरवाई और उस फलही को छोटी इस हेतु करवाई कि पर्वतपर चढ़ाते समय भार कुछ हलका हो। इतना करनेपर भी उस फलही को ८४ श्रमजीवियोंने पर्वत के ऊपर ६ दिनमें पहुँचाई। उन स्कंधवाहन श्रमजीवियों का भोजन सत्कार आदि भली भाँति किया गया था। कहते हैं कि जावड़शाहने इतनी ही भारी फलही पहले इस पर्वतपर ६ महीने में चढ़वा पाई थी।

प्रस्तुत फलही प्रमुख देवमन्दिर के मुख्य द्वारके तोरण के सामने रखी गई। उसको घड़ने के लिये शिल्पविज्ञान विज्ञ पुरुष विद्यमान थे। उन्होंने मूर्त्ति बनाना प्रारम्भ किया। फिर मुनि बालचंद्र की आज्ञानुसार वह सुघटित बिंब मुख्य स्थानपर लाया गया। इस अवसर पर कुछ विघ्न संतोषियोंने उपद्रव करना चाहा परन्तु प्रभावशाली आचार्यश्री सिद्ध सूरीश्वरजी और विमलमति देसलशाहके पुण्य प्रतापसे, साहसिक शाहणपाल की प्रखर बुद्धिमानीसे तथा पुरुषसिंह श्री समरसिंह के ओजसे दुर्जन लोग दुष्टता त्यागकर कार्य करनेवाले हो गये। मुनिवर्य बालचंद्रजीने बिंबको मूल स्थान पर पधराकर देसलशाहको समाचार भेजे। यह संदेश सुनकर देसलशाहने अपनी इच्छा प्रकट की कि अब मैं चतुर्विध संघ सहित तीर्थाधिराज की यात्रा कर तीर्थनायक के बिंबकी प्रतिष्ठा कर अपने मानवजीवनको सफल करूँगा।



## छट्ठा अध्याय।

### प्रतिष्ठा।



यह सुनकर हमारे चरितनायक अपने पिताश्री सहित आचार्य श्री सिद्धसूरिजी को वन्दन करने के लिये पोषधशाला में पधारे। विधिपूर्वक वंदना करने के पश्चात् आपने कहा कि आचार्यवर! आपने अपने उपदेशरूपी जल से हमारी आशारूपी लतिका का सिंचन किया वह अंकुरित तो पहले ही हो गई थी अब वह लतिका आप के उपदेशामृत द्वारा निरन्तर सिंचन द्वारा खूब बढ़ी जिस के प्रताप से बिंब को हम मूल स्थान में रखवाने को सफल हुए हैं। अब आप से यही विनम्र निवेदन है कि प्रतिष्ठा रूपी प्रसाद का दान कर हमारे मनोरथों को शीघ्र पूर्ण करिये। मुख्य मन्दिर के शिखर का उद्धार छेदक (भंग) से कलश पर्यंत परिपूर्ण करवा लिया गया है। इस के अतिरिक्त दक्षिण दिशा में अष्टापद के आकार का चौबीस जिनेश्वरों युक्त नया चैत्य भी करवाया गया है।

पूर्वजों के उद्धार के स्मरणार्थ श्रेष्ठिवर्य त्रिभुवन सिंहने

( मंडप ) के सम्मुख बलानक मण्डप का उद्धार भी करवाया है। तथा तात्कालीन पृथ्वी पर विचरते हुए अरिहंतों का नया मन्दिर भी उनके पीछे करवाया है। आचार्यश्री को उपरोक्त सूचनाएं की तथा यह भी बताया कि स्थिरदेव के पुत्र शाह लंढुकने भी चार देवकुलिकाएं करवाई हैं। जैत्र और कृष्ण नामक संघवियोंने जिनबिंब सहित आठ श्रेष्ठ देहरियाँ भी करवाई हैं। शाह पृथ्वीभट ( पेथड़ ) की कीर्ति को प्रदर्शित करनेवाले शिखु-कोटाकोटि चैत्य जो तुर्कोंने गिरा दियाँ था उस का उद्धार हरिश्चन्द्र के पुत्र शाह केशवने कराया है। इसी प्रकार देवकुलिकाओं का लेप आदि जो नष्ट हो गया था उस का उद्धार भी पृथक पृथक भाग्यशाली श्रावकोंने करा लिया है। कहने का अभिप्राय यह है कि आचार्यश्री ! अब इस तीर्थ पर ध्वंशित भाग कोई नहीं रहा है सब उद्धरित हो गए हैं तथा नये की तरह मालूम होते हैं। इस कारण अब केवल कलश, दंड और दूसरे सर्व अर्हतों की प्रतिष्टा करवाना ही शेष रहा है।

शाह देसलने श्रेष्ठ सूरिवर, ज्योतिषी और श्रावकों आदि को

---

१–वि. सं. १५१७ मे भोजप्रबंध आदि के कर्ता श्री रत्नमन्दिर गणि यशोविजय ग्रंथमाला द्वारा प्रकाशित 'उपदेश तरंगिणी' के पृष्ट १३६ और १३७ में उल्लेख करते हैं कि योगिनीपुर ( दिल्ली ) से १ लाख ८० हजार यवनों की सेना जब गुजरात प्रान्त में पहुंची तो म्लेच्छोंने संघवी पेथड़शाह और झांझणशाह द्वारा कराए हुए सुवर्ण के खोल से मँढे हुए इस मन्दिर को देखा तो वे शत्रुंजय गिरिपर चढे और उन्होंने जावड़शाह द्वारा स्थापित प्रतिमा को तोड डाला।

बुलाकर प्रतिष्ठा के लिये मुहूर्त दिखलाया। सर्व सम्मति से शुभ मुहूर्त निकलने पर प्रधान ज्योतिषी से लग्नपत्रिका तुरन्त लिखवाई गई। लग्नपत्रिका ग्रहण करते हुए देसलशाहने बड़ा उत्सव मनाया तथा ज्योतिषियों को द्रव्य आदि दे तोषित किया। प्रतिष्ठा का समय निकट ही था अतएव देसलशाहने सर्व प्रान्तों में अपने कौटुम्बिक जन, पुत्र, पौत्र और कर्मचारियों को भेज कर संघ को निमंत्रण दिया। देसलशाहने जो एक नया देवालय बनवाया था वह रथ की तरह था। उस देवालय को आचार्यश्री सिद्धसूरि के समक्ष लेजा कर पोषधशाला में वासक्षेप डलवाया। शुभ दिन को देवालय का प्रस्थान कराना निश्चित हुआ। निश्चित दिन आने पर प्रस्थान करवाने के लिये देसलशाहने पोषधशाला में सर्व संघ को एकत्रित किया। देसलशाहने भक्तिपूर्वक श्री संघ का बहुत सत्कार किया और पश्चात् स्वयं आचार्य श्री सिद्धसूरि के आगे वासक्षेप डलवाने के लिये प्रस्तुत हुए। देसलशाह के ललाटपर शुभ हेतु श्री संघ की ओर से तिलक किया गया। आचार्यश्री सिद्धसूरिजीने स्वयं अपने करकमलों से देसलशाह के मस्तक पर ऋद्धि सिद्धि और कल्याण करनेवाला वासक्षेप डाला। तत्पश्चात् हमारे चरितनायक भी वासक्षेप के हेतु आचार्यश्री के सम्मुख पधारे। आचार्यश्रीने उनके मस्तक पर वासक्षेप डालते हुए यह शुभाशीर्वाद दिया कि "तू, सब संघपतियों में श्रेष्ठ हो।"

इस के बाद शुभ मिति पौष कृष्णा ७ को मङ्गल मुहूर्तानु-

सङ्गवदेकस्य विविदिषन्तिपदस्य यज्ञेनेत्यादौ प्रत्येकमनुषङ्गादिह वाक्यभेदो विध्यावृत्तिलक्षणः। कथं तर्हि समुच्चयः ? उच्यते– " अरुणया क्रीणाति वा समाक्रीणाति " [ ] इत्यादिभिन्नवाक्यविहितानामपि सोमप्राप्त्यर्थानां क्रियाणामिव संभवत्समुच्चये यज्ञादीनां परिकल्पितान्तःकरणशुद्धिद्वाराणां भविष्यति, " अरुणया " इत्यादयो हि नियमविधयः, तत्र चार्थिकीतरनिवृत्तिरिति ' अरुणाक्रयेणैव सोमं भावयेद् ' इत्यादिरर्थः फलितः, स च नित्यवत् समुच्चये नोपपद्यत इति संभवत्समुच्चयोऽयम्, न चैवं दध्यादिषु कथं नायमित्याशङ्कनीयम्, तत्र होमनिष्पत्तेर्द्वारस्यैकेनैव सिद्धेः, "अरुणया" इत्यादौ तु क्रयविधेर्दृष्टार्थत्वादेकेनैव क्रयेणानतिसिद्धौ नियमविधित्ववत्, अन्यथा तु प्रत्येकावगतं नियमं कार्यानुरोधेन त्यक्त्वा वाक्यान्तरविहितक्रयसापेक्षत्वं पूर्वक्रयस्य कल्प्यत इति युक्तः संभवत्समुच्चयः, त[ द्व ]दिहापि यज्ञादीनामसौ युक्तः, अत एव यज्ञानधिकारिणां ब्रह्मचारिणां वेदानुवचनेन केवलेना-

---

इति पाठः समीचीनः, " क्रियाणामिव संभवत्समुच्चये " इत्यस्य स्थाने " क्रयाणामिव संभवत्समुच्चयो " इति पाठो युक्तः, **संभवत्समुच्चय** इत्यस्य भविष्यतीत्यनेनान्वय । **नियमविधयः** अरुणयैव सोमं क्रीणाति, गवैव सोम क्रीणातीत्येवरूपा नियमविधयः। **तत्र च** नियमविधौ च। **आर्थिकी** अर्थात् प्राप्ता । **इतरनिवृत्तिः** अरुणेतरेण सोमक्रयो न कर्तव्यः, गोभिन्नेन सोमक्रयो न कर्तव्य इत्येवंरूपा। नियमविधौ कीदृशोऽर्थो भवतीत्यपेक्षायामाह– **अरुणाक्रयेणैवेति**। कथमत्र नित्यवत् समुच्चयो न येन संभवत्समुच्चय इत्युच्यत इत्यपेक्षायामाह– **स चेति**– अरुणाक्रयेणैव सोम भावयेदित्यादिरर्थश्चेत्यर्थः, अस्य **नोपपद्यते** इत्यनेनान्वय, अन्या अरुणा अन्या च गौरिति नास्ति किन्तु यैव गौ सैवारुणा यैवारुणा सैव गौरिति अरुणया क्रयणमेव गवा क्रयणं गवा क्रयणमेव चारुणया क्रयणमिति वस्तुगत्या समुच्चयो नास्तीति न नित्यवत् समुच्चय इत्युक्तोऽर्थो नित्यवत् समुच्चयेऽङ्गीक्रियमाणे नोपपद्यत इत्ययं समुच्चयः सम्भवत्समुच्चय., संभाव्यते चैवं समुच्चय इति, विविदिषन्तीत्यत्र तु यद्यपि याग दानादीनां भिन्नाना वस्तुत. समुच्चयोऽस्ति किन्तु पुरुषविशेषस्य कस्यचिद् यज्ञ-दानादिक्रियासमुच्चये सति विविदिषा भवति, कस्यचिद् यज्ञेनैव कस्यचिद् दानेनैव कस्यचित् तपसैवान्तःकरणशुद्धिद्वारा विविदिषा भवतीति न यज्ञादीनां समुच्चयो नित्यवत् किन्तु संभवत्समुच्चय., यथा नीलं सरोजं भवत्येवेत्यत्र न सरोजत्वावच्छेदेन नील समस्ति श्वेतस्यापि सरोजस्य भावात्, किन्तु किञ्चित् सरोज नीलमपि भवतीति सरोज सभवन्नीलम्, एवं विविदिषामात्रस्य न यज्ञादिसमुच्चयादेव भावः, कस्याश्चिद् विविदिषाया एकेनापि यागेनान्तःकरणशुद्धिद्वारा भावात्, किन्तु काचिद् विविदिषा यागादिसमुच्चयादेव भवतीति संभवत्समुच्चयोऽयमित्यर्थः। ननु दध्ना जुहोति पयसा जुहोतीत्यादावपि एकहोमोद्देशेन दधि-पयआदिसमुच्चयस्य विधानमस्तु, ततस्तत्रापि संभवत्समुच्चयः स्यादित्याशङ्क्य प्रतिक्षिपति– **न चेति**। **एवं** यथाऽरुणयेत्यादौ संभवत्समुच्चयस्तथा। **कथं नायं** कथं न संभवत्समुच्चयः। निषेधे हेतुमाह– **तत्रेति**– दध्ना जुहोतीत्यादावित्यर्थ. ?। दधि-दुग्धादिद्रव्यस्वरूपस्य होमनिष्पत्तिद्वारा फलजनकत्वम्, होमनिष्पत्तिश्चैकेनापि दध्ना पयसा वा सभवतीति न तत्र समुच्चयोऽवकल्प्यत इत्याह– **होमनिष्पत्तेरिति**। अरुणया गवा सोमं क्रीणातीत्यादौ तु नैवमित्याह– **अरुणया इत्यादौ त्विति**। **दृष्टार्थत्वात्** सोमलताप्राप्तिरूपदृष्टार्थत्वात्। **एकेनैव क्रयेण** अरुणया क्रयेण गवा क्रयेण वा " क्रयेणानतिसिद्धौ " इत्यस्य स्थाने " क्रयेण तत्सिद्धौ " इति पाठो युक्तः, **तत्सिद्धौ** सोमलताप्राप्तिरूपदृष्टार्थसिद्धौ। **नियमविधित्वम्** अरुणयेत्यादेर्नियमविधित्वम्, अरुणयैव गवैव क्रयेणैव सोमं भावयेदित्येवं नियमार्थकविधित्वम्। **अन्यथा तु** नियमविधित्वाभावे तु। **प्रत्येकावगतं नियमं** अरुणया सोमं क्रीणाति गवा सोमं क्रीणातीत्येवं प्रत्येकवाक्यावगतम्, अरुणयैव गवैवेत्येव नियम त्यक्त्वा **कार्यानुरोधेन** आरुण्यगोसमुच्चयेनैव क्रयेण सोमलताप्राप्तिरूपं कार्यमिति तदनुरोधेन, **वाक्यान्तरेति**– गवा क्रीणातीति वाक्यान्तरविहितो यः क्रयस्तत्सापेक्षत्व **पूर्वक्रयस्य** अरुणया क्रीणातीति पूर्ववाक्यविहितक्रयस्य कल्प्यत इत्येतस्मात् कारणात् संभवत्समुच्चयोऽरुणयेत्यादौ युक्त इत्यर्थः। **तद्वत्** अरुणया क्रीणातीत्यादौ यथा संभवत्समुच्चयस्तथा। **इहापि** तमेतमित्यादावपि। **असौ** संभवत्समुच्चयः। **अत एव** तमेतमित्यादौ न नियमवत्समुच्चय, किन्तु संभवत्समुच्चय इत्यभ्युपगमादेव। **यज्ञानधिकारिणां** सपत्नीकस्य गृहस्थस्यैव यज्ञादावधिकारो न पत्नीविकलस्य

ण्यन्तःकरणशुद्धिद्वारा विविदिषासिद्धिः। तथा च स्मृतिः- "जपेनैव तु संसिद्ध्येत्" [ ] इति, संभवति चाधिकारिविशेषस्य विविदिषाद्युद्देशेन वेदानुवचनाद्यनुष्ठानमिति। न च स्वर्गकामोऽग्निहोत्रवत् सकृदनुष्ठाननियमो यज्ञाद्यनुष्ठानस्यान्तःकरणशुद्धिपर्यन्तत्वात्, तस्याश्च साधनचतुष्टयसंपत्तिगम्यत्वात्, तेन यस्य सकृदनुष्ठानादन्तःकरणशुद्धिर्न तस्यावृत्तिरिति। अथवा "जातपुत्र" इतिवत् यज्ञादिपदैः प्रसिद्धं शतपथविहितं कर्मसाम्राज्यमुपलक्ष्य विविदिषादिफलोद्देशेन विधीयत इति न वाक्यभेदः, संभवत्समुच्चयश्चैवमुपपद्यते। यद्वा ईश्वरार्पणबुद्ध्यानुष्ठितानां कर्मणामन्तःकरणशुद्धिः फलम्, "यत् करोषि" [भगवद्गीता, अ. ९, श्लो. २७.] इत्यादिस्मृतेः, तेन सुष्ठूक्तम्- "कर्मभिः शुद्धान्तःकरणो

---

ब्रह्मचारिण इत्येवं यज्ञानधिकारिणाम्। केवलेनापि यज्ञादिक्रियाविकलेनापि। यज्ञादिसमुच्चयमन्तराऽपि वेदानुवचनान्यतमेन विविदिषासिद्धौ स्मृतिं प्रमाणयति- तथा च स्मृतिरिति- "जपेनैव" इत्यस्य स्थाने "जप्येनैव" इत्यपि पाठः, "जप्येनैव तु संसिद्ध्येद् ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ १ ॥" [ ] इति सम्पूर्णं वचनम्, मैत्र इत्यनेन मित्रस्य- सूर्यस्य गायत्रीमन्त्रजपेनाराधक इति बोध्यते। यदा चात्र सम्भवत्समुच्चय एव न तु नियमवत्समुच्चयस्तदाऽधिकारविशेषस्यैकैकवेदवचनाद्यनुष्ठानमपि युक्तमित्याह- संभवति चेति- अस्य वेदानुवचनाद्यनुष्ठानमित्यनेनान्वयः। ननु "स्वर्गकामोऽग्निहोत्रं जुहोति" इत्यादावेकदाऽनुष्ठितेनाप्यग्निहोत्रेण स्वर्गफलसिद्धिः, तथा सकृदनुष्ठितेन यज्ञादिना विविदिषाफलसिद्धिसम्भवे विविदिषाद्यर्थं सकृदेव यज्ञाद्यनुष्ठाननियमः सिद्ध्येदित्यत आह- न चेति- "स्वर्गकामोऽग्निहोत्रवत्" इत्यस्य स्थाने "स्वर्गकामाग्निहोत्रवत्" इति पाठो युक्तः, स्वर्गकामस्याग्निहोत्रे यथा सकृदनुष्ठाननियमस्तथा विविदिषाकामस्य यागादौ सकृदनुष्ठाननियम इति न चेत्यर्थः। यज्ञाद्यनुष्ठानं हि अन्तःकरणशुद्धिद्वारा विविदिषाजननसमर्थमिति अन्तःकरणशुद्धिर्यावन्न संपद्येत तावद् भूयो यागाद्यनुष्ठानं कुर्यादेव, अन्तःकरणशुद्धिद्वारनिष्पत्त्यनन्तरं च न पुनर्यज्ञाद्यनुष्ठेयमिति निषेधहेतुमुपदर्शयति- यज्ञाद्यनुष्ठानस्येति। ननु यज्ञाद्यनुष्ठानं यद्यन्तःकरणशुद्धिकारणं तदा सकृदनुष्ठितेनापि यज्ञादिनाऽन्तःकरणशुद्धिर्जातैवेति किमर्थं भूयो यज्ञाद्यनुष्ठानमित्यत आह- तस्याश्चेति- अन्तःकरणशुद्धेश्चेत्यर्थः। साधनचतुष्टयसम्पत्तिगम्यत्वादिति- नित्यानित्यविवेक-विराग-शमदमादि-मुमुक्षेत्येवं साधनचतुष्टयं तस्य या संपत्तिस्तया गम्यत्वादित्यर्थः, साधनचतुष्टयसम्पन्नत्वादयं शुद्धान्तःकरण इत्यवगमोऽत्र ज्ञेयः, तथा च साधनचतुष्टयगम्यान्तःकरणशुद्धिर्यावता यज्ञाद्यनुष्ठानेन भवति तावद् यज्ञाद्यनुष्ठानं विधेयमिति न तत्र सकृदनुष्ठानस्यासकृदनुष्ठानस्य वा नियम इति भावः। तेन यज्ञाद्यनुष्ठानस्यान्तःकरणशुद्धिपर्यन्तत्वेन। यस्य विविदिषाकामस्य कस्यचित् पुरुषधौरेयस्य। तस्य सकृदनुष्ठानादन्तःकरणशुद्धिमतः पुरुषविशेषस्य। न आवृत्तिः नानेकवारं यज्ञाद्यनुष्ठानम्। प्रकारान्तरेण संभवत्समुच्चयोपपादनेन यज्ञेन दानेनेत्यादौ वाक्यभेदप्रसङ्गं वारयति- अथवेति। जातपुत्र इतिवदिति- यथा जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यत्र जातपुत्र कृष्णकेशपदद्वयोपलक्षितावस्थाविशेषस्याग्न्याधानानुवादेन विधानमिति न वाक्यभेदस्तथेत्यर्थः। यज्ञादिपदैरित्यत्रादिपदाद् दानादिपदपरिग्रहः। यज्ञादिपदैरित्यस्योपलक्ष्येत्यनेनान्वयः। शतपथविहितं शतपथसञ्ज्ञकवेदशाखाविहितम्, एवंभूतं यत् प्रसिद्धं कर्मसाम्राज्यं तदुपलक्ष्य- उपलक्षणन्यायेन तदवबोध्य तदेव कर्मसाम्राज्यं विविदिषादिफलोद्देशेन विधीयत इत्येतस्मात् कारणाद् यज्ञेन दानेनेत्यादौ वाक्यभेदो न भवतीत्यर्थः। एवम् उक्तप्रकाराश्रयणे, संभवत्समुच्चय उपपद्यते युज्यते। अनुष्ठितकर्मभिरन्तःकरणशुद्धौ प्रकारान्तरमावेदयति- यद्वेति। ईश्वरार्पणबुद्ध्येति- यत् किमपि कर्म मया क्रियते तदीश्वरस्यास्तु, न तत्फलं किञ्चिदपि ममाभिलषितमित्येवं बुद्ध्येत्यर्थः। ईश्वरार्पणबुद्ध्या कर्मानुष्ठेयमित्यत्र भगवद्गीतावचनं प्रमाणयति- "यत् करोषि" इत्यादिस्मृतेरिति- "यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत् तपस्यसि कौन्तेय। तत् कुरुष्व मदर्पणम् ॥ १ ॥" इति सम्पूर्णपद्यम्, 'अनुष्ठितकर्मभिर्विशुद्धान्तःकरणो नित्यानित्यविवेकादिकं लभते' इति यत् प्रतिज्ञातं प्राक् तदुपसंहरति- तेनेति। "नित्यविवेकादि" इत्यस्य स्थाने "नित्यानित्यविवेकादि" इति पाठो युक्तः। नित्यानित्यविवेकादिकं यत् साधनचतुष्टयं तस्य क्रमिकोद्भव-स्वरूपे क्रमेणोपदर्शयति- स चेति- अनन्तराभिहितश्चेत्यर्थः। नित्यानित्यविवेक इत्यस्य इत्येवमालोचनात्मक इत्यनेनान्वयः। "विमर्शाधिष्ठानम्" इत्यस्य स्थाने "विमर्शस्याधिष्ठानम्"

नित्यविवेकादि लभते " इति । स च नित्यानित्यविवेकः—' इदं सर्वमनित्यं दृष्ट-श्रुताभ्याम्, एतस्य विशर्माधिष्ठानं किञ्चिन्नित्यम् ' इत्येवमालोचनात्मकः । तत ऐहिक-पारलौकिकफलेच्छाविरोधिचेतोवृत्तिविशेषात्मको विरागः । ततः शमादिषट्कम्— शम-दम-उपरति-तितिक्षा-समाधान-श्रद्धाः, अन्तःकरणनिग्रहः शमः, बाह्येन्द्रियनिग्रहो दमः, उपरतिः संन्यासः, द्वन्द्वसहिष्णुत्वं तितिक्षा, श्रवणादिप्रावण्यं समाधानम्, साम्प्रदायिके विश्वासः श्रद्धा । ततो मुमुक्षा—मोक्षेच्छा । तदेतत्साधनचतुष्टयं श्रवणाधिकारिविशेषणम् । यत्तु मुमुक्षैव तथा, काम्याधिकारे कामनाया एव निरपेक्षाधिकारनिमित्तत्वादिति, तन्न—काम्याधिकारे सामर्थ्यादेरप्यधिकारत्वात् । अथ कामनाऽर्थिकं सामर्थ्याद्यपेक्षते, न श्रुतमन्यत्, तत् किं

---

इति पाठो युक्तः । **दृष्ट-श्रुताभ्यामि**त्यत्र दृष्टपदेन लौकिकप्रत्यक्षादिप्रमाणस्य ग्रहणम् । इद सर्वमनित्यं प्रत्यक्षादिप्रमाणेनावसीयते तथा " यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते " [ ] इत्यादिश्रुतप्रमाणेनाप्यवसीयते, " अपाम सोममममृता अभूम " [ अ. शिर· ३. २. ] इत्यादिश्रुतिश्च सोमलतादिपानजन्यफलस्य न नित्यत्वमवबोधयति, किन्तु चिरस्थितिकत्वमेव " आभूतसंप्लवं स्थानममृतत्व हि भाष्यते ॥ " [ ] इति वचनात्, **एतस्य विमर्शस्य** दृष्ट-श्रुताभ्यां प्रमाणाभ्यामुपजातस्येदं सर्वमनित्यमित्याकारकस्य विमर्शस्य विचारणास्वरूपज्ञानस्य, **अधिष्ठानं** यत्राय विचारः प्रादुर्भवति सर्वस्य शून्यत्वे निरधिष्ठानको विचारोऽपि न भवेदिति किञ्चिदधिष्ठानं चैतन्यलक्षणमुपगन्तव्यम्, तच्च नित्यमिति, इत्येवमुक्तप्रकारेण यदालोचन तदात्मको नित्यानित्यविवेक इत्यर्थः । विरागस्वरूपं द्वितीयं साधनमुपदर्शयति— **तत** इति— निरुक्तनित्यानित्यविवेकत इत्यर्थः । **ऐहिके**ति— ऐतद्भविकं पारलौकिकं च यत् फलं तदिच्छायास्तत्कामनाया विरोधी प्रतिबन्धको यश्चेतोवृत्तिविशेषोऽन्तःकरणपरिणामविशेषस्तदात्मको विराग इत्यर्थः । तृतीयं साधनस्वरूपमुपदर्शयति— **तत** इति— निरुक्तविरागत इत्यर्थः । **शमादिषट्क**मित्यत्रादिपदात् किं ग्राह्यमित्यतस्तद् विशिष्योपदर्शयति— **शम-दमे**त्यादिना । शमादीनां विभक्तलक्षणमुपदर्शयति— **अन्तःकरणनिग्रहः शम** इति— अन्तःकरणस्य मनसो यदनेकाकारपरिणमनरूपेण प्रतिक्षणमन्यान्यावस्थाविशेषस्तदनुत्पत्तिप्रयोजकयत्नविशेषोऽन्तःकरणनिग्रहः शम इत्यर्थः । **बाह्येन्द्रिये**ति— बाह्येन्द्रियाणा— चक्षुरादीनां निग्रहः— स्वस्वविषयप्रवृत्तिविरोधिप्रयत्नविशेषो दम इत्यर्थः । **उपरतिरि**ति— सर्वाभ्यः क्रियाभ्यो विरमणलक्षणः संन्यास उपरतिरित्यर्थः । **द्वन्द्वे**ति— सुख-दुःख-शीतोष्णादिद्वन्द्वसहिष्णुत्व तितिक्षेत्यर्थः । **श्रवणे**ति-श्रवण-मनन-निदिध्यासनैकताननतालक्षणश्रवणादिप्रावण्यं समाधानमित्यर्थः । **साम्प्रदायिक** इति— आप्तपरम्परानुष्ठानगोचरे कर्मणि विश्वास इदमित्थमेव यथाऽऽप्तैराचरितमिति चित्तपरिणामविशेषलक्षणो विश्वासः श्रद्धेत्यर्थः । चतुर्थं साधनमुपदर्शयति— **तत** इति— निरुक्तलक्षणश्रद्धातः । मोक्षविषयिणी येच्छा मुक्तोऽहं स्यामित्याकारिका सैव मुमुक्षेत्यर्थः । उपसहरति— **तदेतदि**ति । मुमुक्षामात्रस्य श्रवणाधिकारिविशेषणत्वं पराभिप्रेत प्रतिक्षेप्तुमुपदर्शयति— **यत् त्वि**ति । **तथा** श्रवणाधिकारिविशेषणम् । मोक्षेच्छयैव श्रवणादिकमाचरतीति श्रवणादिकं काम्यमतस्तदधिकारे मोक्षकामनैवान्यानपेक्षा श्रवणाद्यधिकारे निमित्तत्वात् तद्विशेषणमित्याह— **काम्याधिकारे** इति । प्रतिक्षिपति— **तन्ने**ति । नहि तत्तत्कर्मासमर्थस्तत्तत्कर्मण्यधिकारीति तत्तत्कर्मसामर्थ्यादेरप्यधिकारिविशेषणत्वादिति प्रतिक्षेपहेतुमुपदर्शयति— **काम्याधिकार** इति । **अधिकारत्वात्** अधिकारिविशेषणत्वात् । शङ्कते— **अथे**ति— सामर्थ्यमन्तरेण कामनया कर्म न भवतीत्यत आर्थिकमर्थात् प्राप्तं सामर्थ्यादिक कामनाऽपेक्षते, श्रुत किञ्चिन्नापेक्षते कामनेति स्वातिरिक्तश्रुतानपेक्षत्वात् कामनाया एवाधिकारिविशेषणत्वमिति शङ्काऽर्थः, कामनाऽतिरिक्तस्य श्रुतस्य भावेऽपि तदपेक्षा नास्ति कामनायाः, आर्थिकस्य तु सामर्थ्यादेः श्रुतत्वाभावेऽपि लिङ्गप्रमाणगम्यस्यापेक्षा विद्यते कामनाया इत्यभ्युपगमे श्रुति-लिङ्गयोर्मध्ये लिङ्गस्य प्राबल्यमभ्युपगतं स्यात् तच्च " श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानामुत्तरोत्तरदौर्बल्यात् पूर्वपूर्वं बलीयः " [ जैमिनिसू० ३, ३, १४ ] इति मीमांसासिद्धान्तविरुद्धम्, तत्र समाख्या— नाम, नाम्ना च एकाकाङ्क्षालक्षण स्थान कल्प्यते— यदीमनेनाऽऽकाङ्क्षितं न स्यात् कथमेतस्येदं नामेति, एकं यदन्यदाकाङ्क्षति तद् यदि तन्नाकाङ्क्षेन्न तर्हि तयोरङ्गाङ्गिभावोऽवकल्पते इति स्थानादुभयाकाङ्क्षालक्षणं प्रकरणं कल्प्यते, प्रकरणेन चाङ्गबोधकवाक्याङ्गिबोधकवाक्ययोरेकवाक्यतालक्षणवाक्यं परिकल्प्यते, तेन च सामर्थ्यलक्षणं

श्रुति-लिङ्गयोर्लिङ्गं बलवत्, अपि च, एवं राजसूयादौ स्वराज्यकाममात्रस्य समर्थस्याधिकारः प्रसज्येत, अथ " राजसूयेन यजेत " इति [ ] श्रुतेर्बलीयस्त्वात् राजत्वमप्यधिकारिविशेषणं तर्ह्यत्रापि विवेकादिकमपि श्रुतं किं ततो न तथा, युक्तेस्तुल्यत्वात्। अथ विवेकादीनि सर्वत्र सर्वाणि( न ) श्रूयन्ते, किन्तु क्वचित् किञ्चित्, ततश्चैकैकशाखावाक्यात् प्रसक्ता धीः सर्ववेदान्तप्रत्ययन्यायेन बाध्यते, मुमुक्षा तु सर्वशाखास्वबाधितेति सैवाश्रयणीयेति चेत्? न– " विवेकवता श्रवणं कर्तव्यम् " [ ] इत्याद्येकैकशाखावाक्यात् ' अविवेकिनः श्रवणकर्तव्यता न ' इत्यर्थात् प्रतीतावपि साधनान्तरसम्पन्नस्य विवेकिनस्तदकर्तव्यत्वाप्रतीतेरर्थसमाजस्योक्तन्यायाबाध्यत्वात्, तस्मात् साधनचतुष्टयसंपन्न एव श्रवणाधिकारी। न चोपरतिशब्दवाच्यस्य संन्यासस्य श्रवणाधिकारत्वानुपपत्तिः, तस्य श्रवणाङ्गत्वे मानाभावात्, अज्ञानाङ्गत्वस्यैव न्यायत्वादित्याशङ्कनीयम्, श्रवणस्य दृष्टार्थत्वात्, दृष्टेनैवार्थ-

---

लिङ्गं परिकल्प्यते, लिङ्गेन च साक्षादङ्गाङ्गिभावबोधिका श्रुतिः परिकल्प्यते, तेन साक्षादङ्गाङ्गिभावबोधिका श्रुतिर्लिङ्गादितः प्रबलं प्रमाणम्, लिङ्गं च श्रुतिं कल्पयित्वाऽङ्गाङ्गिभावबोधकमिति श्रुत्यपेक्षया दुर्बलम्, लिङ्गाच्च वाक्यं दुर्बलं यतो वाक्यं लिङ्गश्रुती कल्पयित्वा तद्द्वाराऽङ्गाङ्गिभावबोधकम्, लिङ्गं तु श्रुतिमात्रं कल्पयित्वाऽङ्गाङ्गिभावबोधकमिति, वाक्याच्च प्रकरणं दुर्बलम्, यावद्धि प्रकरणं वाक्य-लिङ्ग-श्रुतिकल्पनेन तद्द्वाराऽङ्गाङ्गिभावबोधकम्, तावद्वाक्यं लिङ्ग-श्रुती द्वे एव कल्पयित्वा तद्द्वाराऽङ्गाङ्गिभावबोधकमिति, प्रकरणाच्च स्थानं दुर्बलं यावद्धि स्थानं प्रकराणादीनि चत्वारि प्रमाणानि कल्पयित्वाऽङ्गाङ्गिभावबोधकं तावत् प्रकरणं वाक्यादीनि त्रीण्येव प्रमाणानि कल्पयित्वा तद्द्वाराऽङ्गाङ्गिभावबोधकमिति, एवं स्थानात् समाख्या प्रमाणं दुर्बलं यावत् समाख्याप्रमाणं स्थानादीनि पञ्च प्रमाणानि कल्पयित्वाऽङ्गाङ्गिभावबोधकं तावत् स्थानं प्रकरणादीनि चत्वार्येव कल्पयित्वा तद्द्वाराऽङ्गाङ्गिभावबोधकमिति सोऽयं सिद्धान्तः श्रुतितो लिङ्गस्य प्राबल्याभ्युपगमे विरुध्येतेत्यर्थः। किञ्च यद्यार्थिकं सामर्थ्यमात्रं कामनाऽपेक्षेत, तदा राजसूयादियागकरणसमर्थः स्वाराज्यकामो ब्राह्मणादिरपि राजसूयादावधिकारी प्रसज्येतेत्याह– **अपि चेति**। **एवं** कामनया सामर्थ्यमात्रस्यापेक्षणमित्युपगमे। पर आह– **अथेति**। **श्रुतेः** श्रुतिप्रमाणस्य। **बलीयस्त्वात्** लिङ्गादिप्रमाणापेक्षया बलवत्त्वात्। **राजत्वमपी**त्यपिना कामना-सामर्थ्ययोर्ग्रहणम्। **तर्ही**ति– यदि श्रुतत्वाद् राजसूयादौ राजत्वमधिकारिविशेषणं तदेत्यर्थः, **अत्रापि** तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेनेत्यादावपि। **विवेकादिक**मित्यत्रादिपदाद् विरागादेर्ग्रहणम्। **श्रुतं** श्रुतिप्रमाणविषयः। **ततः** श्रुतिप्रमाणतः। **किं न तथा** किं नाधिकारिविशेषणम्। **युक्तेस्तुल्यत्वा**दिति– राजसूयादौ श्रुतत्वादेव राजत्वमधिकारिविशेषणं श्रुतत्वं च प्रकृते विवेकादेरपीत्येवं युक्तेः समानत्वादित्यर्थः। परः शङ्कते– **अथेति**– ' विवेकादीनि सर्वाणि सर्वत्र न श्रूयन्ते इत्यन्वयः। पृच्छति– **किन्त्वि**ति। उत्तरयति– **क्वचित् किञ्चि**दिति– कस्याञ्चिच्छाखायां विवेकादीनां चतुर्णां मध्यादेकमेव श्रुतमित्यर्थः, ततश्च क्वचित् किञ्चिदेव श्रुतमित्येतस्माच्च। **धी**रित्यस्य **बाध्यते** इत्यनेनान्वयः, सर्ववेदान्तवाक्येषु विविदिषाकामनाया एवाधिकारिविशेषणतया प्रत्यय इति तेन प्रत्ययेन विवेकादीनां मध्यादेकैकस्याधिकारिविशेषणतया प्रतीतिरेकैकशाखावाक्यात् प्रसक्ता बाध्यत इत्यर्थः। **मुमुक्षा त्वि**ति– मुक्तीच्छा पुनः सर्वशाखास्वधिकारिविशेषणतया प्रतीयत इति तत्प्रतीतिरबाधितैवेत्यतः प्रकृते मुमुक्षैवाधिकारिविशेषणतयाऽऽश्रयणीयेत्यर्थः। समाधत्ते– **नेति**। **इत्यादी**त्यत्रादिपदाद् विरागवता श्रवणं कर्तव्यं शमादिषट्कवता श्रवणं कर्तव्यमित्यादिवाक्यस्योपग्रहः। **अर्थात् प्रतीतावपी**ति– अत्र " अविरागिणः श्रवणकर्तव्यता न " इति, " शमादिषट्करहितस्य श्रवणकर्तव्यता न " इत्यर्थात् प्रतीतावपीत्यस्याप्युपलक्षणम्। **साधनान्तरसम्पन्नस्य** विरागादिसम्पन्नस्य। **तदकर्तव्यत्वाप्रतीतेः** श्रवणाकर्तव्यत्वाप्रतीतेः। **अर्थसमाजस्ये**ति– विवेकिनः श्रवणं कर्तव्यं विरागिणः श्रवणं कर्तव्यं शमादिषट्कवतः श्रवणं कर्तव्यं मुमुक्षोः श्रवणं कर्तव्यमित्येवं विवेकित्व-विरागित्व-शमादिषट्कवत्त्व-मुमुक्षावत्त्वसंवलनस्यार्थात् प्राप्तस्येत्यर्थः। **उक्तन्याये**ति– सर्ववेदान्तप्रत्ययन्यायेत्यर्थः। उपसंहरति– **तस्मा**दिति– शमादिषट्कमध्यपतितस्योपरतिशब्दवाच्यस्य संन्यासस्य श्रवणाधिकारत्वानुपपत्तिमाशङ्क्य प्रतिक्षिपति– **न चेति**– अस्य **आशङ्कनीयमि**त्यनेनान्वयः। संन्यासस्य श्रवणाङ्गत्वे सति श्रवणाधिकारत्वं भवेत्, श्रवणाङ्गत्व एव तु मानं नास्तीति श्रवणाधिकारत्वानुपपत्तौ हेतुमुपदर्शयति– **तस्येति**– संन्यासस्येत्यर्थः। यथा हि श्रवणं मननादिद्वारा

र्थवादिकेन फलेन फलवत्तया निर्णयात् तत्संनिधौ श्रुतस्याफलस्य सन्न्यासस्य प्रयाजादिवदङ्गत्वा-श्रवणस्यायौक्तिकत्वात्, प्रमाणं च तत्र प्रयाजादिवत् प्रकरणमेव । अथैतदात्मन एव प्रकरणं न श्रवण-स्यैवेति चेत् ? न- उपक्रमोपसंहारादिलिङ्गैरात्मनः प्रतिपाद्यत्वप्रतीतेरात्मनः प्रकरणमित्यभिधीयमाने-ऽप्यङ्गत्वावेदकस्योभयाकाङ्क्षारूपस्य प्रकरणस्यापि सुव्यवस्थितत्वात्, तथाहि- यथा प्रयाजा उपकार्या-काङ्क्षाः प्रधानयागोऽप्युपकारकाकाङ्क्ष इत्युभयाकाङ्क्षा प्रयाजानां प्रकरणम्, तथा सन्न्यासोऽप्युपकार्याकाङ्क्षः श्रवणमप्युपकारकाङ्क्षमित्युभयाकाङ्क्षाप्रकरणं सन्न्यासस्य, तदेव च श्रवणाङ्गत्वसाधकमिति किमत्रार्थ-वादिकफलकल्पनाक्लेशेनेति दिक् । तस्मात् युक्तमुक्तं साधनचतुष्टयसम्पन्नः श्रवणाद्यधिकारीति । सोऽय-मधिकारी श्रोत्रियं ब्रह्मनिष्ठं गुरुमनुसृतः श्रवणादि सम्पादयति । श्रवणादिकं तु-श्रवणं १, मननं २,

---

आत्मसाक्षात्कारलक्षणफलजनकत्वादङ्गीभूतं तथा संन्यासस्याप्यङ्गित्वमेव न्याय्यम्, तस्याङ्गित्वोपपत्तये फलान्तरमेव कल्पयितु-मुचितमित्याशयेनाह- अङ्गानेति- अत्र "अङ्गानाङ्गत्वस्यैव" इत्यस्य स्थाने "अङ्गित्वस्यैव" इति पाठो युक्तः । निषेधे हेतुमाह- श्रवणस्येति । दृष्टार्थत्वात् मनन-निदिध्यासनद्वारा साक्षात्काररूपदृष्टप्रयोजनकत्वात् । यद्यपि आत्म-साक्षात्कारकाम आत्मश्रवण कुर्यादित्येवमात्मश्रवणस्य फलतया आत्मसाक्षात्कारो न विहितस्तथापि आत्मश्रवणस्यार्थवादि-कात्मसाक्षात्कारफलवत्तया फलवत्त्वं समस्त्येवेत्याह- दृष्टेनैवेति । यदा चार्थवादिकफलवत्तया फलवत्त्वं श्रवणस्य निश्चित तदा फलवत्सन्निधौ श्रूयमाणमफल तदङ्ग भवतीति न्यायात् फलवच्छ्रवणसन्निधौ श्रूयमाणस्य सन्यासस्य श्रवणाङ्गत्वं स्यादेव यथा-स्वर्गकामो दर्श-पूर्णमासाभ्या यजेतेति विधिना फलवत्तया विहितस्य दर्श-पूर्णमासस्य यागस्य सन्निधौ समिधो यजती-त्यादिविधिना विहिताः प्रयाजाः फलशून्यास्तदङ्ग भवन्तीत्येव संन्यासस्य श्रमणाङ्गत्वाश्रयणं युक्त्युपेतमेवेत्याह- तत्सन्नि-धाविति- फलवच्छ्रवणसन्निधावित्यर्थः । "दङ्गत्वाश्रवणस्यायौक्तिकत्वात्" इत्यस्य स्थाने "दङ्गत्वाश्रयणस्य यौक्तिकत्वात्" इति पाठो युक्तः । अङ्गाङ्गिभावबोधकानां श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्याना पण्णा प्रमाणाना मध्यात् किमत्र प्रमाणं, यद्बलाच्छ्रवणाङ्गत्व सन्न्यासस्य स्वीकरणीयमित्याकाङ्क्षायामाह- प्रमाणं चेति । तत्र संन्यासस्य श्रवणाङ्गत्वे । ननु यत्र प्रकरणे सन्यासादीना विधानं तत् प्रकरणमात्मन एव न तु श्रवणस्येति संन्यासस्व प्रकरणा-दात्माङ्गत्वमेव स्यान्न श्रवणाङ्गत्वमिति शङ्कते- अथेति । "श्रवणस्यैवेति" इत्यस्य स्थाने "श्रवणस्येति" पाठो युक्तः । समाधत्ते- नेति । उपक्रमोपसंहारादीति- "उपक्रमोपसहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्ग तात्पर्यनिर्णये ॥ १ ॥" [ ] इति वचनाद् आदिपदादभ्यासादीना पञ्चाना ग्रहणम् । लिङ्गैः तात्पर्यलिङ्गैः उपक्रमोपसहारादिभि. "तत् त्वमसि" [निरा ३१] इत्यादिवाक्यानामात्मन्येवं तात्पर्यमिति निश्चयत उक्तवाक्यत आत्मनः प्रतिपाद्यत्वप्रतीतेस्तादृशवाक्यकदम्बकात्मकः सन्दर्भ आत्मन. प्रकरणमित्येवमभिधीयमानेऽपीत्यर्थ. । तथा चैतादृश प्रकरण श्रवणस्य नास्तीति भावः, तथापि येन प्रकारेणाङ्गाङ्गिभावोऽवबुध्यते तत् प्रकरणं श्रवणस्यास्ती-त्याह- अङ्गत्वावेदकस्येति । उभयाकाङ्क्षारूपप्रकरणस्याङ्गत्वावेदकं दृष्टान्तोपष्टम्भेन भावयति- तथाहीति- समिधो यजतीत्यादिविधिविहितानां प्रयाजानां किञ्चित्फलकामनयाऽविहितानां प्रधानत्वासम्भवात् किञ्चित्फलवत्कर्मोपकारकत्वमवश्य-मेषितव्यमित्युपकार्याकाङ्क्षाः प्रयाजाः, दर्श-पूर्णमासाभ्या स्वर्गकामो यजेतेति विधिविहितौ दर्श-पूर्णमासयागौ फलकामनया विहितत्वात् प्रधानौ भवतोऽपि कथमेतौ कर्तव्याविति कर्तव्यताकाङ्क्षाशालित्वादुपकारकाकाङ्क्षावित्येवमुभयाकाङ्क्षालक्षण-प्रकरणेन यथा प्रयाजाना दर्श-पूर्णमासयागाङ्गत्वम्, तथा च समिदादिभिर्दर्श-पूर्णमासाभ्या स्वर्गकामो यजेतेत्येव विधि-स्वरूप निराकाङ्क्ष सम्पद्यते, तथा संन्यासेन किं भावयेदित्येव संन्यासस्यास्त्युपकार्याकाङ्क्षा, श्रवण कथं भावयेदिति श्रवणस्याप्यस्त्युपकारकाकाङ्क्षेत्येवमुभयाकाङ्क्षारूपप्रकरणात् संन्यासस्य श्रवणाङ्गत्वम्, एवं च प्रधानीभूतश्रवणफलेनैव सन्यासस्य फलवत्त्वोपपत्तेर्न तस्यार्थवादिकफलकल्पनाक्लेशो विधेय इत्यर्थः । उपसहरति- तस्मादिति । एवम्भूतः श्रवणाद्यधिकारी कथं श्रवणादि सम्पादयतीत्यपेक्षायामाह- सोऽयमधिकारीति- अस्य सम्पादयतीत्यनेनान्वयः । श्रोत्रियम् अध्ययनाऽ-ध्यापनादिना यथावच्छ्रुत्यर्थज्ञातारम् । ब्रह्मनिष्ठं शुद्धचैतन्यस्वरूपं ब्रह्मैव सत्य तदन्यन्मिथ्येत्येवं ब्रह्मैकश्रद्धम् । गुरुं

निदिध्यासनं ३ चेति। श्रवणं नाम- वेदान्तानां शक्ति-तात्पर्यावधारणानुकूलो व्यापारः, श्रुतस्यार्थस्य युक्तितः सन्धानं मननम्, विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणं निदिध्यासनम्। एतेषां श्रवणं प्रधानम्, इतरे फलोपकार्याङ्गे, श्रोतव्यादिवाक्येषु प्राथमिकत्वात् श्रवणविधेरेवार्थवादिक-फल[कल्पनयेतरयोस्तत्क]ल्पनाक्लेशनिवृत्तेः। श्रवणस्य तत्त्वज्ञाने प्रधानभूतशब्दप्रमाणस्वरूपनिर्वाह-कतया प्राधान्यम्, असति श्रवणे प्रामाणासंभावनया तत्त्वज्ञानानुदयात्, अत्यन्तानवगतार्थे गृहीत-शक्तितात्पर्यकस्य शब्दस्यैव प्रमाजनकत्वात् तन्निर्वाहकस्य श्रवणस्य प्राधान्यमिति तात्पर्यम्। विधिश्चात्र नियमाख्य एव दृष्टा, दृष्टार्थत्वात्, दृष्टस्यापि तत्त्वज्ञानोपयोगित्वात्। न च, नियमविधिस्थले फले

---

ब्रह्मस्वरूपोपदेष्टारमाचार्यम्, **अनुसृतः** सन्। श्रवणादीत्यनेन किं ग्राह्यमित्यपेक्षायामाह- **श्रवणादिकं त्विति**। श्रवण-मनन-निदिध्यासनानां क्रमेण स्वरूपात्मकलक्षणमुपदर्शयति- **श्रवणं नामेति**। **वेदान्तानां** तत्त्वमसीत्यादिमहावाक्यानाम्। **शक्तितात्पर्येति**- तत्पदस्य मायावच्छिन्नचैतन्ये शक्तिः, त्वम्पदस्यान्तःकरणावच्छिन्नचैतन्ये शक्तिः, शक्यार्थयोर्निरुक्त-विशिष्टचैतन्ययोरभेदेनान्वयोऽनुपपन्न इत्यन्वयानुपपत्त्या जहदजहत्स्वार्थलक्षणया तत्त्वमसीति वाक्यं शुद्धचैतन्यमेवावबो-धयतीति तस्य शुद्धचैतन्य एव तात्पर्यमित्येव शक्ति-तात्पर्यविधारणानुकूलो य उपक्रमोपसंहारादिषट्तात्पर्यलिङ्गान्वेषणलक्षणो व्यापार. श्रवणमित्यर्थः, उक्तस्वरूपस्य श्रवणस्य कर्तव्यत्वावेदकं तत्स्वरूपावेदकं च पद्यकदम्बकं पञ्चदश्यां यथा-

"अहं ब्रह्मेति वाक्यार्थबोधो यावद् दृढीभवेत्। शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम्॥ १॥
बाढं सन्ति ह्यदार्ढ्यस्य हेतवः श्रुत्यनेकता। असंभाव्यत्वमर्थस्य विपरीता च भावना॥ २॥
शाखाभेदात् कामभेदाच्छ्रुतं कर्मान्यथाऽन्यथा। एवमत्रापि मा शङ्कीत्यतः श्रवणमाचरेत्॥ ३॥
वेदान्तानामशेषाणामादि-मध्याऽवसानतः। ब्रह्मात्मन्येव तात्पर्यमिति धीः श्रवणं भवेत्॥ ४॥" इति।

मननस्वरूपं प्रकटयति- **श्रुतस्येति**- श्रवणनिष्टङ्कितस्येत्यर्थ.। **युक्तितः** प्रमाण-तर्कोपेतहेतुतः। **सन्धानम्** अनुमितिविषयीकरणम्. यस्य येन रूपेण श्रवणं तस्मिंस्तद्रूपस्यानुमित्यात्मकं यज्ज्ञानं तन्मननमित्यर्थः। निदिध्यासन-स्वरूपमावेदयति- **विजातीयेति**- अनुमित्यात्मकं यदात्ममनन तद्विजातीयोऽन्यविषयकप्रत्यक्षादिरूपः प्रत्ययस्तस्य तिरस्कारेण- अन्तराऽन्तराऽन्यादृशज्ञानजननतो यदात्मानुमितिप्रवाहस्य विच्छेदस्तत्परिहारेणेति यावत्, सजातीयप्रत्ययस्यात्मानुमिति-प्रत्ययस्य प्रवाहीकरणं- प्रवाहरूपेणावस्थापनं निदिध्यासनमित्यर्थः। **एतेषां** श्रवण-मनन-निदिध्यासनानां मध्ये। **श्रवणं** श्रुतिश्रवणात्मज्ञानम्। **प्रधानं** आत्मसाक्षात्कारलक्षणात्मतत्त्वज्ञानात्मकफलवत्त्वान्मुख्यम्, **इतरे** मनन-निदिध्यासने। **फलोपकार्याङ्गे** फलमात्मतत्त्वसाक्षात्कारलक्षणं तत्साधन श्रवणमपि फलवत्त्वात् फलं तद्रूपं यदुपकार्यं प्रधानत्वात् तस्याङ्गे- तदुपकारके, फलवत्सन्निधौ श्रूयमाणमफलं तदङ्ग भवतीति नियमात्। कथं श्रवणस्यैव फलवत्त्वं येन तदङ्गत्वं मनन-निदिध्यासनयोरित्यपेक्षायामाह- **श्रोतव्यादिवाक्येष्विति**- "आत्मा वाऽरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात् कर्तव्यः" [ ] इति वाक्येष्वित्यर्थः। **प्राथमिकत्वात्** प्रथमं श्रूयमाणत्वात्। **श्रवणविधेः** श्रोतव्य इति विधेः। **अर्थवादिकफलकल्पनया** अर्थवादोक्तफलकल्पनया। **इतरयोः** मनन-निदिध्यासनविध्योः। **तत्कल्पना-क्लेशनिवृत्तेः** फलान्तरकल्पनाप्रयासाभावात्। श्रवणस्य मनन-निदिध्यासनापेक्षया प्राधान्यं व्यवस्थापयति- **श्रवणस्येति**- अस्य **प्राधान्यमि**त्यनेनान्वय। कस्मिन् फले प्राधान्यमित्याकाङ्क्षायामाह- **तत्त्वज्ञान** इति। प्रधानभूतशब्दप्रमाणस्वरूप-निर्वाहकत्वमेव श्रवणस्य व्यवस्थापयति- **असति श्रवण** इति। ननु श्रवणाभावेऽपि शब्दप्रमाणातिरिक्तप्रमाणादेव तत्त्व-ज्ञानं भविष्यतीति कुतः प्रमाणासंभावनेत्यत आह- **अत्यन्तानवगतार्थ** इति। **तन्निर्वाहकस्य** प्रमाजनकशब्दस्वरूप-निर्वाहकस्य। 'विधिरत्यन्तमप्राप्तौ नियम. पाक्षिके सति॥ तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥ १॥" इति वचनाद् विधेस्त्रैविध्ये श्रवणविधिः किमेतेष्वित्यपेक्षायामाह- **विधिश्चात्रेति**- "**दृष्टा, दृष्टार्थत्वात्, दृष्टस्यापि**" इत्यस्य स्थाने "दृष्टादृष्टार्थत्वात्, अदृष्टस्यापि" इति पाठो युक्तः, यथा व्रीहिनवहन्तीत्यत्र नापूर्वविधिः, प्रमाणान्तराप्राप्तस्य प्रापको विधिरपूर्वविधिरित्युच्यते, तुषविमोकार्थं व्रीहेरवहननं प्रत्यक्षादिप्रमाणेनैवोपलभ्यत इति तत् प्रमाणान्तरप्राप्तमेव, किन्तु

साधनान्तरस्य प्रा[ त्य ]क्षिकी प्राप्तिस्तत्र सा च न, निर्विशेषा आत्मज्ञाने श्रवणातिरिक्तस्याप्राप्तेरिति कथं नियमविधिः, न च व्रीहितुषविमोकत्वपुरस्कारेणावघातातिरिक्तस्येवात्मज्ञानत्वपुरस्कारेण श्रवणातिरिक्तस्य प्रत्यक्षादेः प्राप्तेरदोषफलतावच्छेदकावच्छिन्नसाधनान्तरप्राप्तेरपेक्षितत्वात्, अत एवापूर्वापूर्वव्रीहितुषविमोकोऽपि दलनादिना कर्तुं शक्यत इत्यवघातो नियम्यते, आत्मज्ञानमात्रे प्रत्यक्षादिप्रसरान्नियमविध्यादरे च सुखमात्रे साधनान्तरप्राप्तेः "यजेत" [ ] इत्यादावपि तत्प्रसङ्गतः, अत एव न भ्रान्त्या साधनान्तरप्राप्तेरपि नियमविध्यङ्गत्वं 'यजेत' इत्यादावतिप्रसङ्गादेवेति

व्रीहीनवहन्यादेवेत्येवंस्वरूपो नियमविधिरेव, अत्र नखविदारणादिनाऽपि तुषविमोकः सम्भवति, नियमविधिना तत्प्रतिक्षेपः क्रियते, अवघाततो वितुषीकृतैरेव व्रीहिभिर्यजेत न तु नखविदारणादिना वितुषीकृतैरिति, तथा चावघाततो वितुषीकरणलक्षणदृष्टप्रयोजनमपि भवति, दृष्टफलकयज्ञोपयोग्यदृष्टलक्षणप्रयोजनमपि भवतीत्येवं तत्रत्यनियमविधेर्यथा दृष्टादृष्टार्थत्वम्, तथा प्रकृतेऽपि श्रवणादिनियमविधितो दृष्टमपि प्रयोजनं भवति, अदृष्टमपि प्रयोजन भवतीति किमत्रादृष्टप्रयोजनमुररीक्रियत इत्यपेक्षायामाह–**अदृष्टस्यापीति** । **न चेत्यस्य** *व्यवहितेन* **इति वाच्यमित्यनेन** *सम्बन्धः* । **नियमविधिस्थले** व्रीहीनवहन्तीत्यादिनियमविधिस्थले । **फले** तुषविमोकादिलक्षणफले । **साधनान्तरस्य** अवघातभिन्ननखविदारणादिलक्षणकारणस्य ।
"**प्रा[त्य]क्षिकी**" इत्यस्य स्थाने "पाक्षिकी" इति पाठो युक्तः–

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥ १ ॥" [ ]

इति वचनात्, यदा अवघातो न क्रियते किन्तु नखविदारणादिकमेव विधीयते तदानीं नखविदारणादिलक्षणसाधनान्तरस्य प्राप्तिरस्ति, अतस्तत्प्रतिषेधार्थं नियमविधिराश्रीयते । तत्र श्रवणादिविधिस्थले, **सा च न** *आत्मज्ञानलक्षणफले* श्रवणाद्यतिरिक्तसाधनस्य पाक्षिकी प्राप्तिर्न पुनः । कथं नेत्यपेक्षायामाह- **निर्विशेषेति**– "**निर्विशेषा आत्मज्ञाने**" इत्यस्य स्थाने "निर्विशेषाऽऽत्मज्ञाने" इति पाठो युक्तः । **कथमित्याक्षेपे** न कथञ्चिदित्यर्थः, तथा चात्मज्ञानार्थं श्रवणादेरत्यन्ताप्राप्तत्वादपूर्वविधिरेवायं भवितुमर्हतीति भावः । अन्तरा शङ्कामुत्थाप्य प्रतिक्षिपति–**न चेति**– यथा सामान्यतो व्रीहितुषविमोकं प्रति अवघातोऽपि कारणं नखविदारणादिकमपि कारणमिति नखविदारणादिसाधनान्तरस्य प्राप्तौ तदानीमवघातस्याप्राप्तौ नियमविधिस्तथा प्रकृतेऽपि सामान्यत आत्मज्ञाने श्रवणमपि कारणं प्रत्यक्षादिकमपि कारणमिति यदा प्रत्यक्षादिनाऽऽत्मानं ज्ञातुं प्रवर्तते तदानीं प्रत्यक्षादिसाधनान्तरस्य प्राप्तौ श्रवणस्याप्राप्तौ नियमविधिः स्यादिति शङ्कार्थः । "**रदोष-फल**" इत्यस्य स्थाने "रदोषः, फलः" इति पाठो युक्तः । अवान्तराशङ्कानिषेधे हेतुमुपदर्शयति-**फलतेति**– व्रीहीनवहन्तीत्यत्रावघातरूपसाधनस्य फलतावच्छेदकं तुषविमोकत्वं तदवच्छिन्नस्य तुषविमोकस्य साधनान्तरं नखविदलनादिकं तत्प्राप्तेर्नियमविधिनाऽपेक्षितत्वात्, प्रकृते तु श्रवणादिलक्षणसाधनस्य फलतावच्छेदकं निर्विशेषात्मज्ञानत्वं तदवच्छिन्नस्यनिर्विशेषात्मज्ञानस्य साधनान्तर न प्रत्यक्षादिक प्रत्यक्षादिप्रमाणतो निर्विशेषात्मज्ञानानुदयादिति साधनान्तरप्राप्त्यभावे तन्निबन्धनाप्राप्तेरभावाच्च नियमविधिसम्भव इत्यर्थः । **अत एव** फलतावच्छेदकावच्छिन्नसाधनान्तरप्राप्तेर्नियमविधिनाऽपेक्षितत्वादेव । **अपूर्वेति**– यस्य यस्य व्रीहेर्नखेन विदारण न सम्भवति तस्याप्यूर्ध्वाधोव्यवस्थितप्रस्तरद्वयकरणकदलनादिना तुषविमोकः सम्भवत्येवेत्येवेति तुषविमोकत्वावच्छिन्ने साधनान्तरप्राप्त्या तत्प्रतिषेधायावघातो नियम्यत इत्यर्थः । यदि च निर्विशेषात्मज्ञाने– प्रत्यक्षादिप्रमाणान्तराप्रवृत्तावपि आत्मज्ञानमात्रे प्रत्यक्षादिसाधनान्तरप्रवृत्तितः श्रवणादिविधेर्नियमविधित्वमुपपाद्यते, तदा फलतावच्छेदकावच्छिन्नसाधनान्तरप्रवृत्तेरनपेक्षितत्वं फलजातीयं यत् किञ्चित् फलं प्रति साधनान्तरप्राप्तेरपेक्षितत्वमित्यस्य नियमविध्युपोद्बलकस्य स्वहस्तितत्वेन स्वर्गकामो यजेतेत्यादावपि "यन्न दुःखेन सम्भिन्नं च ग्रस्तमनन्तरम् ॥ अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम् ॥ १ ॥" [ ] इति वचनलक्षितसुखविशेषलक्षणस्वर्गजातीयसुखमात्रं प्रति स्रक्-चन्दन-वनितादिलक्षणसाधनान्तरप्राप्तेरपि नियमविध्यङ्गत्वतो नियमविधित्वमेव तस्य प्रसज्येत, स्वीकृतस्यापूर्वविधित्वस्योच्छेद एव स्यादित्याह- **आत्मज्ञानमात्र** इति । "**तत्प्रसङ्गतः**" इत्यस्य स्थाने "तत्प्रसङ्गः" इति पाठो युक्तः, तसिल्प्रत्ययस्य सार्वविभक्तिकत्वे तथा पाठोऽपि युक्त एव, तस्य नियमविधित्वप्रसङ्ग इत्यर्थः । **अत एव** स्वर्गकामो यजेतेत्यादौ नियमविधित्व-

वाच्यम्, निर्विशेषात्मबोधेऽपि "इतिहासपुराणाद्यैर्वेदार्थमुपबृंहयेत्" [ ] इत्यादिना पुराणप्राकृतवाक्यश्रवणादेः प्राप्तत्वाद् वेदान्तश्रवणं नियम्यत इति दोषाभावात्। एतच्च श्रवणाद्यावृत्तं तत्त्वधीहेतुः, दृष्टार्थत्वात्, तदेवं बहुजन्मलब्धपरिपाकवशादसौ "तत्त्वमसि" [ ] आदिवाक्यार्थविशुद्धं प्रत्यगभिन्नं परमात्मानं साक्षात्कुरुते। न च प्रामाण्यस्योत्पत्तौ स्वतः स्वभङ्गः, श्रवणादेः प्रतिबन्धकनिवर्तकत्वात् तन्निवृत्तेश्च तुच्छत्वेनोत्पत्तावतिरिक्तानपेक्षणात्। 'तत् त्वम्' इति पदयोः परोक्षत्वापरोक्षत्वविशिष्टचैतन्यरूपपृथगर्थवाचकयोः श्रूयमाणं सामानाधिकरण्यं न तावत् सिंहो देवदत्त इतिवद्गौणम्, मुख्ये संभवति तस्यान्याय्यत्वात्। नापि "मनो ब्रह्म" [ ] इत्यादिवदुपासनार्थम्, श्रुतहानाश्रुतकल्पनाप्रसङ्गात्। मुख्यत्वेऽपि न नीलोत्पलादिवत् सामानाधि-

---

प्रसङ्गादेव, अस्य निषेधे नञर्थेऽन्वयः, तस्य **नियमविध्यङ्गत्वमित्यनेनान्वयः**। अत एवेत्यभिहितहेतुमेव स्पष्टयति- **यजेतेति**। इत्थं श्रवणविधेर्न नियमविधित्वमित्युपपादनपराशङ्काप्रतिक्षेपहेतुमुपदर्शयति- **निर्विशेषात्मबोधेऽपीति**- यद्यपि निर्विशेषात्मज्ञानत्वावच्छिन्नं प्रति प्रत्यक्षादिप्रमाणान्तरस्य प्रवृत्तिर्नास्ति तथापि इतिहासपुराणादिवाक्यश्रवणादिलक्षण-प्रमाणान्तरप्राप्ते**रितिहासपुराणादे**रित्यादिवचनेन सद्भावात् तत्प्रतिषेधार्थं वेदान्तवाक्यश्रवणं नियम्यते, अत एव 'श्रोतव्यः श्रुतिवाक्येभ्यः' [ ] इति वचनं नियमप्रतिपादकमिति फलतावच्छेदकावच्छिन्नसाधनान्तरप्राप्तेरेव नियम-विध्यङ्गत्वेन स्वर्गकामो यजेतेत्यादौ नियमविधित्वप्रसङ्गदोषाभावादित्यर्थः। तत् किं निर्विशेषात्मज्ञानार्थं वेदान्तवाक्यश्रवण-मेकधैव कर्तव्यमुत तदावृत्तिरपेक्षितेत्यपेक्षायामाह- **एतच्चेति**- अनन्तरोपदिष्टस्वरूपं चेत्यर्थः। **श्रवणादी**त्यत्रादिपदान्मनन-निदिध्यासनयोः परिग्रह.। **आवृत्तं** भूयोऽभ्यस्तम्। नियमविधिबोधितस्य श्रवणादेरदृष्टार्थत्ववद् दृष्टार्थत्वमपि, तेन यद्यदृष्टार्थत्वमेव स्यात् तदा सकृद्विधीयमानेनापि श्रवणादिना तत्त्वज्ञानोपयोग्यदृष्टजननतस्तद्द्वारा निर्विशेषात्मज्ञानं सम्भव-तीति निष्प्रयोजनं श्रवणाद्यावर्तनं न विधेयं स्यात्, यदा तु दृष्टमपि तत्त्वज्ञानदृढीकरणादिकं तस्य प्रयोजनं तदा यावदभ्यस्तेन श्रवणादिना निर्विशेषात्मज्ञानं दृढं निष्पद्यते तावदभ्यसनीयं श्रवणादिकमित्यावेदनायाह- **दृष्टार्थत्वादिति**। तथा च पुरुषधुरन्धरो नित्याध्ययनविधिनाऽधीतवेदान्तः साङ्गाध्ययनबलादापाततो वेदान्तवाक्यार्थज्ञानवानिह जन्मनि जन्मान्तरे वाऽनुष्ठितकर्मभिर्विशुद्धान्तःकरणो नित्यानित्यविवेक-विराग-शमादिषट्क-मुमुक्षावान् विशिष्टगुर्वनुसरणतः श्रवण-मनन-निदिध्यासनवान् तत्त्वमसीत्यादिवाक्यार्थविशुद्धप्रत्यगभिन्नपरमात्मानं साक्षात्करोतीत्युपसंहरति- **तदेवमिति**। **परि-पाकश्च** दार्ढ्यं श्रवणादीनाम्। **असौ** पुरुषधुरन्धरः। ननु ब्रह्मसाक्षात्कारस्य प्रमाणात्मकस्य श्रवणादितो भावे तत्प्रामाण्यस्य श्रवणादिनिबन्धनत्वेन प्रामाण्यस्योत्पत्तौ स्वतस्त्वं यद् **वेदान्ति**सम्मतं तद्भङ्गः स्यादित्याशङ्क्य प्रतिक्षिपति- **न चेति**। "**स्वतः स्वभङ्गः**" इत्यस्य स्थाने "स्वतस्त्वभङ्गः" इति पाठो युक्तः। श्रवणादितः परमात्मसाक्षात्कार-प्रतिबन्धकापगमो भवति, ततो विशुद्ध प्रमाणस्वरूप साक्षात्कारात्मकं ज्ञानमुत्पद्यते, इति प्रतिबन्धनिवृत्तेस्तुच्छस्वरूपायाः प्रामाण्योत्पत्तौ प्रयोजकत्वेऽपि कस्यचिद् भावस्य तत्रानपेक्षणात् स्वतस्त्वं न व्याहन्यत इति निषेधहेतुमुपदर्शयति- **श्रवणादेरिति**। **तन्निवृत्तेश्च** प्रतिबन्धकनिवृत्तेश्च, स्वाश्रयज्ञानकारणातिरिक्तभावानपेक्षत्वं प्रामाण्ये स्वतस्त्वं, तच्च प्रामाण्यस्योत्पत्तौ प्रतिबन्धकाभावापेक्षत्वेऽपि निर्वहतीत्याशयः। तत्त्वमसीत्यत्र तत्-त्वपदयोः सामानाधिकरण्यं केनापि प्रकारेणाघटमानमित्यतः शुद्धचैतन्यस्वरूपे ब्रह्मणि तयोर्जहदजहल्लक्षणा, तत एवाखण्डब्रह्मस्वरूपबोधजनकत्वं तत्त्वमसीति वाक्यस्येत्युपदर्शयति- **तत्-त्वमिति पदयोरिति**। **परोक्षत्वेति**- परोक्षत्वविशिष्टचैतन्यरूपभिन्नार्थवाचकस्य तत्पदस्य अपरोक्षत्वविशिष्टचैतन्यरूपभिन्नार्थवाचकस्य त्वपदस्य समानविभक्तिवचनकत्वलक्षणं सामानाधिकरण्यं श्रूयमाण सिंहो देव-दत्त इतिवद् गौण नेत्यर्थ.। निषेधे हेतुमाह- **मुख्ये इति**- मुख्ये सामानाधिकरण्य इत्यर्थः। **तस्य** गौणस्य सामाना-धिकरण्यस्य। सति प्रयोजने गौणमपि सामानाधिकरण्यमाश्रीयते, यथा- "मनो ब्रह्म" [ ] इत्यत्र आरोपितब्रह्माभेदकं मन उपासीतेति, तथा आरोपितपरोक्षत्वादिविशिष्टचैतन्यलक्षणब्रह्माभेदकमपरोक्षत्वविशिष्टचैतन्य त्वंपदवाच्यमुपासीतेत्येवमुपासनार्थं गौणमपि सामानाधिकरण्य न्याय्यमित्याशङ्कां प्रतिक्षिपति- **नापीति**। निषेधे हेतुमाह- **श्रुतहानेति**- श्रुतस्य तत्त्वम्पदयोः मुख्यस्य सामानाधिकरण्यस्य, यद्वा अश्रुतस्य यदुपासनलक्षणफलकस्य गौणसामाना-

करण्यम्, गुणगुणिभावाद्यसम्भवात्, निर्गुणाऽस्थूलादिवचनविरोधाच्च । नापि यः सर्पः सा रज्जुरिति-वद् बाधीयम्, उभयोश्चिद्रूपतया बाधायोगाद् मुक्त्यभावप्रसङ्गाच्च, नहि स्वबाधार्थं जीवप्रवृत्तिरुपपद्यते । तस्मात् पदार्थयोः परस्परव्यावर्तकतया विशेषणविशेष्यभावप्रतीत्यनन्तरं लक्षणया सोऽयं देवदत्त इति-वद्विशुद्धप्रत्यगभिन्नाखण्डपरमात्मप्रतीतिः, सा च लक्षणा पदद्वयेऽपि अन्यथाऽखण्डार्थप्रतीत्यनुपपत्ते-र्लक्षणाबीजविरोधासमाधानाच्च । इयं लक्षणा विशेषणांशत्यागाद् विशेष्यांशात्यागाच्च जहदजहती( भाग-लक्षणा च गीयते ) । नन्वेवं चैतन्याद्वैतसिद्धावपि कथं प्रपञ्चस्य पारमार्थिकत्वाभाव इति चेत् ? उच्यते—यदि त्वंपदार्थे भोक्तृत्वादिपारमार्थिकं कथं तत्पदार्थैक्यसिद्धिः, एवं तत्पदार्थेऽपि परोक्षत्वादि

---

धिकरण्यस्य, कल्पनं तयोः प्रसङ्गादित्यर्थः । भवतु मुख्यमेव सामानाधिकरण्यमित्यत आह- **मुख्यत्वेऽपीति**- समानाधि-करण्यस्य मुख्यत्वेऽपीत्यर्थः । नीलोत्पलमित्यत्र नीलरूपविशिष्टपरस्य नीलपदस्योत्पलात्मकद्रव्यवाचकपदेन सामानाधिकरण्यं संभवति नीलात्मकगुणवत्त्वस्योत्पलात्मके गुणिनि सद्भावात्, प्रकृते तत्पदवाच्ये निर्गुणे ब्रह्मणि त्वम्पदवाच्यसगुणचैतन्याभेदा-संभवादिति निषेधहेतुमाह- **गुणगुणिभावाद्यसंभवादिति** । यदि निरुक्तसामानाधिकरण्यानुरोधेन गुणित्वादिकमपि ब्रह्मण्यु-पेयते तदा निर्गुणत्वादिप्रतिपादकवचनविरोधः स्यादित्याह- **निर्गुणेति** । ननु रज्जौ सर्पोऽयमिति भ्रमानन्तरं रज्जुरियं न सर्प इति बाधप्रतिसन्धाने सति यः सर्पः सा रज्जुरिति यद्वाधीयं सामानाधिकरण्यं तद्वत् प्रकृतेऽपि बाधीयं सामानाधिकरण्यं तत्-त्वम्पदयोरित्याशङ्कां प्रतिक्षिपति- **नापीति** । निषेधे हेतुमाह- **उभयोरिति**- तत्पदार्थ-त्वम्पदार्थयोरित्यर्थः । ननु तत्पदार्थस्य बाधाभावेऽपि त्वम्पदार्थस्य बाधादेव बाधीयं सामानाधिकरण्यं भविष्यतीत्यत आह- **मुक्त्यभावप्रसङ्गाच्चेति** । कथं मुक्त्यभावप्रसङ्ग इत्यपेक्षायामाह- **नहीति**- अस्य 'उपपद्यते' इत्यनेनान्वयः । **स्वेति**- स्वपदार्थस्य मुक्त्यर्थिनो जीवस्य बाधार्थं मम बाधो भवत्वित्येतदर्थं जीवस्य प्रवृत्तिर्नह्युपपद्यत इत्यर्थः । यदि न गौणं सामानाधिकरण्यं नापि मुख्यं नापि बाधीयं तर्हि तत्त्वमसीति वाक्यतः कथं कस्य प्रतीतिर्भवितुमर्हतीत्याकाङ्क्षायामुपसंहरति- **तस्मादिति**- उक्तदिशा सामानाधिकरण्यप्रकारस्य कस्याप्यसम्भवादित्यर्थः । **पदार्थयोरिति**- तत्पदार्थ-त्वम्पदार्थयोर्मध्ये तत्पदार्थस्त्वंपदार्थमन्यतो व्यावर्तयति, त्वंपदार्थस्तत्पदार्थमन्यतो व्यावर्तयतीत्येवं परस्परव्यावर्तकतया यद्व्यावर्तकं यद्विशेषणं तद्व्यावर्त्यं तद्विशेष्यमिति नियमादुभयोर्विशेषणविशेष्यभावेन प्रतीत्यनन्तरं लक्षणया तत्-त्वंपदयोर्विशुद्धप्रत्यगभिन्नाखण्डपरमात्मस्वरूपे शुद्धचैतन्ये जहदजहल्लक्षणया विशुद्धप्रत्यगभिन्नाखण्डपरमात्मप्रतीतिर्भवति, यथा- सोऽयं देवदत्त इति वाक्याच्छुद्धदेवदत्तव्यक्तौ निरुक्त-लक्षणया शुद्धदेवदत्तव्यक्तिप्रतीतिरित्यर्थः । **सा च लक्षणा** विशुद्धप्रत्यगभिन्नाखण्डपरमात्मनि लक्षणा पुनः । **पदद्वयेऽपि** तत्पद-त्वंपदद्वयेऽपि । **अन्यथा** एकपद एव लक्षणाभ्युपगमे । **अखण्डेति**- एकपदस्य शुद्धचैतन्ये लक्षणायामपि लक्ष्ये शुद्धचैतन्ये द्वितीयपदशक्यार्थस्य विशिष्टचैतन्यस्य तत्राभेदेनान्वये सखण्डस्यैव ततो बोधः स्यादित्यखण्डस्य परमात्मरूपार्थस्य प्रतीतेरनुपपत्तेरित्यर्थः । **लक्षणेति**- तत्-त्वंपदशक्यार्थयोरभेदेनान्वयासम्भवलक्षणविरोध एव लक्षणाबीजं तस्यासमाधानात् परिहाराभावाच्च, एकपदलक्षणायामपि तल्लक्ष्ये द्वितीयपदशक्यार्थस्याभेदेनान्वयासम्भवलक्षणविरोधोऽपरिहृत एवेत्यतो विरोध-परिहारार्थं पदद्वये लक्षणाऽऽवश्यकीत्यर्थः । अस्या लक्षणाया जहदजहल्लक्षणात्वं भागलक्षणात्वपर्यवसितं दर्शयति- **इयं लक्षणेति**- तत्पदस्य शक्ये परोक्षत्वविशिष्टचैतन्ये विशेषणांशस्य परोक्षत्ववैशिष्ट्यस्य त्यागाद् विशेष्यांशस्य चैतन्यस्यात्यागात्, एवं त्वंपदस्य शक्ये अपरोक्षत्वविशिष्टचैतन्ये विशेषणांशस्यापरोक्षत्ववैशिष्ट्यस्य त्यागाद् विशेष्यांशस्य चैतन्यस्यात्यागाच्च जहद-जहती- शक्यं विशेषणांशं जहती, विशेष्यं च शक्यमजहतीति जहदजहती, अत एव शक्यस्य भागे विशेष्यरूपैकदेशे लक्षणेति भागलक्षणेयं गीयते इत्यर्थः । शङ्कते- **नन्वेवमिति**- एवमुक्तप्रकारेण, अद्वितीयं चैतन्यमप्यस्तु, प्रपञ्चस्य पारमार्थि-कत्वमप्यस्तु, न हि प्रपञ्चस्य पारमार्थिकत्वाभावमन्तरेण चैतन्यस्याद्वैतमनुपपन्नं येन चैतन्याद्वैतान्यथानुपपत्त्या सिध्येनापि प्रपञ्चस्य पारमार्थिकत्वाभावः, न चैवमित्याशङ्कितुरभिप्रायः । समाधत्ते- **उच्यत** इति । त्वंपदार्थे यदि भोक्तृत्वादिकं पार-मार्थिकं स्वं पारमार्थिकं तदा भोक्तृत्वादिविशिष्टचैतन्यमेकं द्वितीयं च तत्पदार्थचैतन्यमिति न चैतन्याद्वैतं निर्वहति, तथा तत्पदार्थेऽपि परोक्षत्वादि पारमार्थिकं तदा परोक्षत्वादिविशिष्टचैतन्यमेकपरं च त्वंपदार्थचैतन्यमित्येवमपि चैतन्याद्वैतं न सिध्यतीत्याह- **यदीति**- "**परोक्ष्यत्वादि**" इत्यस्य स्थाने "परोक्षत्वादि" इति पाठः समीचीनः । नन्वेवं भोक्तृत्व-

यदि पारमार्थिकं कथं त्वंपदार्थैक्यसिद्धिः, तदेवं भोक्तृत्वादेः कल्पितत्वे भोग्यादिकल्पितमेव, एवं जगत्कर्तृत्वादेः कल्पितत्वे जगतः कल्पितत्वमित्यतः " तत् त्वमसि " [ ] आदिवाक्य-सामर्थ्येनैव निरस्तसमस्तप्रपञ्चात्मैक्यसिद्धिः, सोऽयमित्यत्रेव पदाद् भेदभ्रमानिवृत्तेर्महावाक्याश्रयणस्याावश्यकत्वम् । तदिदमात्मज्ञानमुत्पन्नमेवानन्तजन्मार्जितकर्मराशिं विनाशयति " क्षीयन्ते चास्य कर्माणि " [ ] इति श्रुतेः । न च देहनाशप्रसङ्गः, प्रारब्धस्याविनाशात् तस्य " तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये " [ ] इति श्रुतेः, कर्मविपाकेन प्रारब्धनिवृत्तावप्युक्तशास्त्रेण ज्ञानानिवर्त्यत्वाभिधानात्, ततश्च ज्ञानेन तदानीमेवाज्ञाने सर्वात्मना निवर्तयितव्ये प्रारब्धप्रतिबन्धादनिवृत्तिः, तस्यां चावस्थायां प्रारब्धफलं भुञ्जानः सकलसंसारं बाधितानुवृत्त्या पश्यन् स्वात्मारामो विधि-

---

परोक्षत्वादिकस्य चैतन्यधर्मस्य कल्पितत्वमस्तु, तदन्यस्य प्रपञ्चस्य कल्पितत्वं कथमित्यपेक्षायामाह–**तदेवमिति**– तत्–तस्मात्, एवम्–उक्तप्रकारेण । भोग्यं स्रक्-चन्दन-वनितादिकं यदि पारमार्थिकं स्यात् तदा तन्निरूपितभोक्तृत्वादिकमपि चैतन्यस्य कल्पितं न भवेदिति भोक्तृत्वादेः कल्पितत्वान्यथानुपपत्त्या भोग्यादेः कल्पितत्वमास्थेयमित्याह– **भोक्तृत्वादेरिति** । **एवमिति**– उक्तप्रकारेण तत्पदार्थगतजगत्कर्तृत्वादेः कल्पितत्वं यच्चैतन्याद्वैतान्यथानुपपत्त्या सिद्धं तदपि जगतः कल्पितत्वमन्तरेणानुपपन्नमिति जगतः कल्पितत्वमास्थेयमित्यतस्तत्त्वमसीति वाक्यसामर्थ्यात् सिध्यच्चैतन्याद्वैतं निरस्तसमस्तप्रपञ्चमेव सिध्यतीत्यर्थः, यथा च सोऽयमित्यत्र पूर्वकालीनत्वविशिष्टवर्तमानकालीनत्वविशिष्टयोर्भेदग्रहे जाग्रति सति अभेदग्रहो न भवतीति लक्षणया देवदत्तव्यक्तिमात्रप्रतीतिजनकत्वान्महावाक्यत्व तथा तत्त्वमसीत्यत्र तत्पदशक्यार्थ-त्वंपदशक्यार्थयोर्विशिष्टचैतन्ययोर्भेदभ्रमे सत्यभेदज्ञानाभावतो भेदभ्रमस्य पदादनिवृत्तेर्लक्षणया तत्त्वमसीति वाक्यतोऽखण्डचैतन्यप्रतीतिरिति तस्य महावाक्यत्वमखण्डार्थप्रतीतिजनकत्वलक्षणमास्थेयमित्यर्थः । पुरुषधुरन्धरे उत्पन्नब्रह्मसाक्षात्कारस्य फलमुपदर्शयति– **तदिदमिति** । उत्पन्नमेवेत्येवकारेणात्मतत्त्वसाक्षात्कारानन्तर क्षणमात्रमप्यनन्तजन्मार्जितकर्मराशिविनाशोत्पत्तौ विलम्बो न भवतीति दर्शितम् । ननु " नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥ अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥१॥ " [ ] इत्यादिवचनात् कर्मणां क्षयस्य भोगादेव निर्णीतत्वादप्रमाणकं तत्त्वज्ञानतो निखिलकर्मक्षयं न प्रामाणिकः श्रद्धास्यतीत्यतस्तत्र श्रुतिं प्रमाणयति– **क्षीयन्ते चेति**– " तस्मिन् दृष्टे परावरे " इति चरणमत्रानुसन्धेयम्, तथा च तस्मिन् आत्मनि, परश्चासाववरश्च परावरस्तस्मिन् परावरे, अल्पज्ञापेक्षया तदधिकपदार्थज्ञो जीवोऽपि पर उत्कृष्टो भवति तस्य व्यपोहाय अवरेति, न विद्यते वर उत्कृष्टो यस्मात् सोऽवर इति– सर्वोत्कृष्ट इति, तस्मिन्, दृष्टे सति, अस्य– पुरुषधुरन्धरस्य, कर्माणि– इति बहुवचनादशेषानन्तजन्मार्जितकर्माणि, क्षीयन्ते - विनश्यन्तीत्यर्थः । नन्वखिलकर्मान्तर-देहधारणानुकूलप्रारब्धकर्मणोऽपि तत्त्वज्ञानतो विनाशात् तद्वतो देहधारणमपि न स्यादित्याशङ्क्य प्रतिक्षिपति– **न चेति** । प्रारब्धकर्मणो भोगादेव क्षय इति निर्णयात् 'क्षीयन्ते चास्य कर्माणि' इत्यत्र कर्मपदेन प्रारब्धकर्मेतरकर्मैव विवक्षितमिति तत्त्वज्ञानिनोऽपि प्रारब्धकर्मणो भोगादेव क्षय इति यावदुपभोगं तस्य सद्भावान्न देहविनाश इति प्रतिक्षेपहेतुमुपदर्शयति– **प्रारब्धस्येति**– प्रारब्धकर्मण इत्यर्थः । तत्र श्रुतिं प्रमाणयति– **तस्येति– तस्य " तावदेव** इत्यस्य स्थाने " तस्य तावदेव " इति मुद्रणं युक्तम्, तस्येत्यारभ्य श्रुतिः, तस्य– तत्त्वज्ञानिनः, यावत्– यावत्कालम्, न विमोक्ष्ये– उपभोगप्रभवप्रारब्धकर्मविनाशो न भवति, तावदेव - तावत्कालमेव, चिरम्– अशरीरादिस्वरूपावाप्तिविलम्बो भवति, अथ– भोगतः प्रारब्धकर्मक्षयानन्तरम्, सम्पत्स्ये– अखण्डात्मस्वरूपावाप्तिलक्षणसम्पत्तिमद् भवतीत्यर्थः । उक्तश्रुत्यभिप्रेतार्थमुपदर्शयति– **कर्मविपाकेनेति**– फलदानाभिमुखकर्मोदयेनेत्यर्थः । **प्रारब्धनिवृत्तौ** प्रारब्धकर्मनिवृत्तिसम्भवेऽपि । **उक्तशास्त्रेण** तस्य तावदेव चिरमित्यादिश्रुत्या । **ज्ञानानिवर्त्यत्वाभिधानात्** प्रारब्धकर्मणो ज्ञानानिवर्त्यत्वस्योक्तेः । उपसंहरति– **ततश्चेति**– उक्तशास्त्रस्वारस्याच्चेत्यर्थः । **ज्ञानेनेत्यस्य निवर्तयितव्ये** इत्यनेनान्वयः । **ज्ञानेन** शुद्धचैतन्यसाक्षात्कारेण । **तदानीमेव** स्वोत्पत्त्यनन्तरक्षण एव । **अज्ञाने सर्वात्मना निवर्तयितव्ये** अशेषविक्षेपशक्त्यशेषावरणशक्ति-तदुक्तसर्वप्रपञ्चात्मककार्यकारणात्मना मायाऽविद्याशब्दवाच्येऽज्ञाने निवर्तयितव्ये । **प्रारब्धेति**– प्रारब्धकर्मणा प्रतिबन्धाद् देहाद्यात्मना निरुक्ताज्ञानानिवृत्तिः, प्रारब्धकर्मरूपप्रतिबन्धकाभावसहकृतस्यैवात्मसाक्षात्काररूपज्ञानस्य देहाद्यात्मनाऽज्ञाननिवर्तकत्वमित्यर्थः । **तस्यां**

निषेधाधिकारशून्यः संस्कारमात्रात् सदाचारः प्रारब्धक्षयं प्रतीक्षमाणो जीवन् मुक्त इत्युच्यते, अस्य प्रारब्धक्षये सशक्तिकनिरवशेषाज्ञाननिवृत्तौ परममुक्तिः। ननु केयमज्ञाननिवृत्तिः? न सती, नाप्यसती, नापि सदसती, ज्ञानजन्यत्वाद्वैतप्रसङ्गोद्देश्यत्वविरोधेभ्यश्च, अस्तु तर्ह्यनिर्वचनीया जन्यत्वात्, तदुक्तम्— "जन्यत्वमेव जन्यस्य मायिकत्वसमर्थकम्" [ ] इति, मैवम्— अनिर्वचनीयस्य ज्ञाननिवर्त्यत्वनियमेन निवृत्तिपरम्पराप्रसङ्गात्, सदद्वैतव्याकोपमङ्गीकृत्य तस्या असत्त्वाद् विधानेऽपि विना प्रमाणमद्वैतसङ्कोच एव दूषणम्, पञ्चमप्रकाराश्रयणं त्वत्यन्ताप्रसिद्धम्। अस्तु तर्हि चैतन्यात्मि-

---

चेति— प्रारब्धकर्मतत्कार्यव्यतिरिक्ताखिलाज्ञानप्रभवप्रपञ्चनिवृत्त्यवस्थाया पुरुषधुरन्धरः प्रारब्धकर्मफल भुञ्जान. सन्, सकलसंसारमज्ञानकार्यं बाधितमपि किञ्चित्कालमनुवर्तत इति बाधितानुवृत्त्या पश्यन् सन्, स्वात्मन्येव रमत इति स्वात्मारामः विधि-निषेधाधिकारशून्यः— विहितकर्मकरणे तत्फलकामलक्षणरागः पुरुषस्य विशेषणत्वादधिकारः, निषिद्धकर्मानाचरणे निषिद्धकर्मफलद्वेषोऽधिकारिविशेषणत्वादधिकारः, अथवा निषिद्धकर्माचरणे निषिद्धकर्मफलकामोऽधिकारिविशेषणत्वादधिकारस्तदुभयशून्यः, यथा चक्रभ्रमणकारणापगमेऽपि कञ्चित् कालं पूर्वोत्पन्नवेगाख्यसंस्कारविशेषवशाच्चक्र भ्रमति एवं संस्कारमात्रात् सम्यक्कर्मानुष्ठानपरो भवतीति सदाचारः, प्रारब्धक्षय– प्रारब्धकर्मविनाशम्, प्रतीक्षत इति प्रतीक्षमाण., जीवन्मुक्त इत्येवमुच्यते- कथ्यत इत्यर्थः। जीवन्मुक्त्यनन्तरं परममुक्तिरस्य भवतीत्युपदर्शयति— अस्येति— अस्य **परममुक्तिरित्यनेनान्वयः। सशक्तिकेति**— आवरणशक्ति-विक्षेपशक्तिसमन्वितेत्यर्थः। **निरवशेषेति**— अशेषकार्यकारणात्मकेत्यर्थः। **परममुक्तिरित्यनन्तरं** भवतीति शेषः। नन्वज्ञाननिवृत्तौ सत्या परममुक्तिरुपपादिता, परमज्ञाननिवृत्तिरेव विकल्पजर्जरितेति शङ्कते— **नन्विति**। "**ज्ञानजन्यत्वा**" इत्यस्य स्थाने "ज्ञानजन्यत्व" इति पाठो युक्तः, अज्ञाननिवृत्तेः सत्यत्वाभ्युपगमे तस्याः सर्वदा सत्त्वं सर्वदा मुक्त्यापत्तिभयान्नास्त्येवाभ्युपगम्यमिति कादाचित्क्यास्तस्या ज्ञानजन्यत्वमुपेयं स्यात्, तथा च द्वैतप्रसङ्गः; तस्या असत्यत्वाभ्युपगमे न सा कदाचिद् भवतीत्यज्ञानमेव सर्वदाऽवतिष्ठित इत्यज्ञाननिवृत्तौ मुक्तिर्भवतीति यदुद्देश्यं तद्भावलक्षणोद्देश्यत्वस्य विरोधः, अज्ञाननिवृत्तेः सदसदुभयरूपत्वे विरोधः स्पष्ट एव, सत्यत्वाऽसत्यत्वयोः परस्परनिषेधरूपयोरेकत्रासम्भवात्, वस्तुतः "**उद्देश्यत्व**" इत्यस्य स्थाने "उद्देश्यासिद्धि" इति पाठः सम्यक्, तथा च विरोधस्य द्विधाऽऽश्रयणं कर्तव्यं न भवतीति बोध्यम्। ननु सत्यत्वाऽसत्यत्वाभ्या वक्तुमशक्यत्वादज्ञाननिवृत्तिरनिर्वर्तनीयैवास्त्विति शङ्कासमाधानमाशङ्कते— **अस्त्विति**— उक्ताशङ्कास्वारस्याज्ज्ञानजन्यत्वस्य तत्रेष्टत्वेन तत्र ज्ञानजन्यत्वप्रसङ्गस्येष्टापादनरूपतयाऽदूषणत्वमिति पूर्वं **ज्ञानजन्यत्वेति** स्थाने ज्ञानाजन्यत्वेति पाठ एव भवितुमर्हति, **सतीति** विकल्पे सत्त्व सर्वदा सत्त्वमेव विवक्षितं द्वैतप्रसङ्गश्च पृथगेव दूषणमिति बोध्यम्। अत्र यज्जन्यं तदनिर्वचनीयमिति व्याप्तिबलादेवाज्ञाननिवृत्तेर्जन्यत्वलक्षणहेतुबलादनिर्वचनीयत्वं साध्यतेऽतस्तादृशव्याप्तौ प्राचीनवचनसंवादमाह— **तदुक्तमिति**— मायिकत्वम्- अनिर्वचनीयत्वं तस्य समर्थकं— साधकमिति मायिकत्वसमर्थकमित्यस्यार्थः। निरुक्तसमाधानाशङ्कां प्रतिक्षिपति— **मैवमिति**। **अनिर्वचनीयस्येति**— यदनिर्वचनीयं तज्ज्ञाननिवर्त्यमिति नियमेन "अज्ञाननिवृत्तिर्ज्ञाननिवर्त्या अनिर्वचनीयत्वाद्," इत्यनुमानतोऽज्ञाननिवृत्तिनिवृत्तिसिद्धौ 'अज्ञाननिवृत्तिर्ज्ञाननिवर्त्याऽनिर्वचनीयत्वाद्' इत्यनुमानात् तस्या अप्येवं निवृत्तिरेवं तस्या अपीत्येवं निवृत्तिपरम्परालक्षणानवस्थानप्रसङ्गादित्यर्थः। न च सत्येवाज्ञाननिवृत्तिः, तस्या असत्त्वाद्, अज्ञान- तत्कार्यस्यानिर्वचनीयस्य विधावपि न तस्य सत्त्वं किन्तु ब्रह्मण एव सत्त्वमित्यद्वैतस्य ममाभ्युपगतस्य सदद्वैतरूपत्वमेवेत्येवं सदद्वैतवादो न व्याहन्यते सदद्वैताभावादिति यद्युच्यते, तदाऽद्वैतस्य सदद्वैतरूपत्वेन सङ्कोचो निष्प्रमाणको दूषणमेवेत्याह— **सदद्वैतव्याकोपमङ्गीकृत्येति**— सदद्वैताव्याकोपमङ्गीकृत्येति पाठो युक्तः, सदद्वैतव्याकोपः सदद्वैतव्याघातो मा भवत्वित्येवमङ्गीकृत्येत्यर्थः। **तस्याः** अज्ञाननिवृत्तेः। **विधानेऽपि** अनिर्वचनीयाज्ञान-तत्कार्ययोर्निवृत्त्यभावाद् विधानेऽपि अनिर्वचनीयतया विध्यभ्युपगमेऽपि। **विना प्रमाणमिति**— एकमेवाद्वितीयं ब्रह्म नेह नानाऽस्ति किञ्चनेत्याद्या. श्रुतयोऽद्वैत एव प्रमाणं न सदद्वैत इति प्रमाणमन्तरेणेत्यर्थः। **अद्वैतसङ्कोच** इति— अद्वैतपदस्य सदद्वैतपरत्वमित्यर्थः। यद्यत्र सङ्कोचे प्रमाणं स्यात् तदा प्रामाणिकसङ्कोचो न दूषणम्, यथा— पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेत्यत्र व्युत्पत्तौ सम्पन्नो व्रीहिरित्यत्रैकवचनविभक्त्यात्मकपदार्थस्यैकत्वस्य व्रीहिपदार्थतावच्छेदके व्रीहित्वेऽन्वयस्य व्रीहावेकत्वान्वये तत्र सम्पत्तेर्बहुत्व-

केति चेत् ? न- जन्यत्वादेव । नास्त्येव जन्यत्वमिति चेत् ? न- ज्ञानानर्थ[ क्य ]प्रसङ्गात्, चैतन्यस्य सदा सत्त्वेन प्रयत्नविशेषानुपपत्तेश्च । अत्र केचित्- तत्त्वज्ञानोपलक्षितं चैतन्यमेवाज्ञाननिवृत्तिः, तच्च न तत्त्वज्ञानतः प्रागस्ति, उपलक्षणत्वस्य संबन्धाधीनत्वात्, [ यथा ] काकसंबन्धो हि गृहस्य काकोपलक्षितत्वम्, तदपि न- ज्ञानोपलक्षितस्यापि सत्त्वेऽद्वैतव्याघातात्, असत्त्वे उद्देश्यत्वानुपपत्तेः, मिथ्यात्वे ज्ञाननिवर्त्यत्वापत्तेः, चिन्मात्रत्वे उक्तदोषानतिवृत्तेः। न च तत्त्वज्ञानानुपलक्षितभिन्नं चैतन्यमेव सा; अवस्थाभेदं विना तस्यापि दुर्वचस्त्वादतो दुर्वचस्स्वरूपेयमज्ञाननिवृत्तिः, अत्रोच्यते-नाज्ञानस्य निवृत्तिध्वंसः, रूपान्तरपरिणतोपादानस्यैव तद्रूपत्वात्, घटध्वंसो हि चूर्णाकारपरिणता मृदेव, न च चैतन्यस्य

---

विशेषलक्षणाया. सयोगविशेषरूपाया वाऽन्वयानुपपत्त्या प्रामाणिकस्य निर्वाहार्थं सङ्कोचोऽपदार्थतावच्छेदकस्य सम्पन्नो व्रीहिरिति वाक्यघटकव्रीहिपदार्थतावच्छेदकव्रीहित्वभिन्नपदार्थतावच्छेदकस्वरूपत्वं न दूषणम्, न त्वेवं प्रकृते सङ्कोचः प्रामाणिक इति स दूषणं स्यादेवेति भावः। नन्वज्ञाननिवृत्तिर्न सती, नाप्यसती, नापि सदसती, नाप्यनिर्वचनीया, किन्तु पञ्चमप्रकारैव, तत्र नोक्तदूषणप्रसङ्ग इत्यत आह- **पञ्चमप्रकाराश्रयणमिति**- तथा चात्रात्यन्ताप्रसिद्धिरेव दूषणमित्याशय· । नन्वभावस्याधिकरणात्मकत्वमेव लाघवादित्यज्ञाननिवृत्त्यधिकरणं चैतन्यमिति चैतन्यात्मिकैवाज्ञाननिवृत्तिरिति समाधानमाशङ्कते- **अस्तु तर्हीति** । चैतन्यस्य नित्यत्वेनाज्ञाननिवृत्तेर्जन्यत्वेन विरुद्धधर्माध्यासात् तयोस्तादात्म्यासम्भव इति प्रतिक्षिपति- **नेति** । ननु चैतन्यात्मकत्वादेवाज्ञाननिवृत्तौ जन्यत्वं नास्तीति शङ्कते- **नास्त्येवेति**- चैतन्यात्मिकाया अज्ञाननिवृत्तेर्जन्यत्वं नास्त्येवेत्यर्थः। अज्ञाननिवृत्त्यर्थमेव चैतन्यसाक्षात्कार उपादीयते, यदि चाज्ञाननिवृत्तिर्न जन्या तर्ह्यात्मसाक्षात्कारस्यानर्थक्यात् तदर्थं मुमुक्षुर्न प्रवर्तेतेति निषेधति- **नेति**। चैतन्यं यद्यज्ञाननिवृत्तिस्तदा चैतन्यस्य सदा सत्त्वात् तदर्थं प्रयत्नविशेषानुपपत्तिरप्यासज्यत इत्याह- **चैतन्यस्येति** । ननु केयमज्ञाननिवृत्तिरित्यादिना पल्लवितायामाशङ्कायां केषाञ्चित् प्रतिविधानमुपदर्शयति- **अत्रेति**- उक्ताशङ्कायामित्यर्थः। **तच्च** तत्त्वज्ञानोपलक्षितं चैतन्यं पुनः, तत्त्वज्ञानतः प्राक् तत्त्वज्ञानोपलक्षितचैतन्यस्यासत्त्वे हेतुमुपदर्शयति- **उपलक्षणत्वस्येति**- यद्यसबद्धस्याप्युपलक्षणत्वं तदा सर्वं सर्वस्योपलक्षण भवेन्न भवति च सर्वं सर्वस्योपलक्षणमित्युपलक्ष्योपलक्षकयोः सम्बन्धोऽवश्यमेषितव्यः, सम्बन्धश्च समकालं विद्यमानयोरेवेति तत्त्वज्ञानकाल एव तत्त्वज्ञानोपलक्षितं चैतन्यमतो न तत्त्वज्ञानत प्राक् तत्त्वज्ञानोपलक्षितचैतन्यम्, ततस्तत्त्वज्ञानोपलक्षितचैतन्यस्वरूपाज्ञाननिवृत्त्यर्थं तत्त्वज्ञानमुपादेयम्, तदर्थं यत्नविशेषस्यापि साफल्यमित्यर्थः। उपलक्षणत्वस्य सम्बन्धाधीनत्वे दृष्टान्तमाह- **यथेति** । निरुक्तसमाधान प्रतिक्षिपति- **तदपि नेति** । ज्ञानोपलक्षितत्वं सत् असत् अनिर्वचनीयं चिन्मात्र वा, प्रथमपक्षे- एकं ज्ञानोपलक्षितत्वं द्वितीयं चैतन्यमित्येव द्वैतव्यवस्थितावद्वैतं व्याहन्येतेत्याह- **ज्ञानोपलक्षितत्वस्यापीति** । द्वितीये- नह्यसत उद्देश्यत्वमिति तस्योद्देश्यत्वमनुपपन्न स्यादित्याह- **असत्त्व इति**- ज्ञानोपलक्षितत्वस्यासत्त्वे इत्यर्थः। यदनिर्वचनीयं तन्मिथ्येत्यनिर्वचनीयत्वमेव मिथ्यात्वम्, अत एव क्वचिदप्युपाधावप्रतीयमानत्वलक्षणासत्त्वतोऽस्य भेदः, एवं च यदनिर्वचनीयं तज्ज्ञाननिवर्त्यमिति नियमस्याज्ञान-तत्कार्ययोः स्वहस्तितत्वात् तत्त्वज्ञानोपलक्षितचैतन्यलक्षणाज्ञाननिवृत्तेरपि निवृत्त्यापत्तेस्तृतीयपक्षस्याप्ययुक्तत्वमित्याह- **मिथ्यात्व इति**- तत्त्वज्ञानोपलक्षितत्वस्य मिथ्यात्व इत्यर्थ· । तुरीयपक्षे- चिन्मात्रस्वरूपाज्ञाननिवृत्तेः सदा सत्त्वेन ज्ञानजन्यत्वाभावाज्ज्ञानानर्थक्यं प्रयत्नविशेषणानुपपत्तिश्च स्यातामित्याह- **चिन्मात्रत्व इति**- ज्ञानोपलक्षितत्वस्य चिन्मात्रस्वरूपत्वे इत्यर्थः। तत्त्वज्ञानासमाधानान्तरमाशङ्क्य प्रतिक्षिपति- **न चेति** । सा अज्ञाननिवृत्ति । निषेधे हेतुमाह- **अवस्थाभेदं विनेति**- चैतन्यस्य तत्त्वज्ञानोपलक्षितत्वावस्था तत्त्वज्ञानानुपलक्षितत्वावस्था तत्त्वज्ञानानुपलक्षितभिन्नत्वावस्थेत्येवमवस्थात्रयमन्तरेणेत्यर्थः। **तस्यापि** तत्त्वज्ञानानुपलक्षितभिन्न चैतन्यस्वरूपत्वस्यापि । उपसंहरति- **अत इति**- पूर्वोपदर्शितविकल्पजर्जरितत्वादित्यर्थः। समाधत्ते - **अत्रोच्यत इति**- कथमज्ञाननिवृत्तिरित्याङ्कायां समाधानं कथ्यत इत्यर्थः। अज्ञाननिवृत्तेरज्ञानध्वंसरूपत्वाभावे हेतुमाह- **रूपान्तरेति**- रूपान्तरात्मना परिणतं यदुपादानं- परिणामिकारणं तस्यैव तद्रूपत्वात्- ध्वंसरूपत्वादित्यर्थ.। रूपान्तरपरिणतोपादानस्यैव ध्वंसरूपत्वमिति दृष्टान्तोपदर्शनेन स्पष्टयति- **घटध्वंस इति**- चूर्णाकारेण परिणता या मृत् सैव घटध्वंस इत्यर्थः। ननु प्रकृतेऽपि रूपान्तरात्मना परिणतं चैतन्यस्वरूपमुपादानमेवाज्ञानध्वसोऽस्त्वित्यत आह- **न चेति**- अस्य 'अस्ति' इत्येनेनान्वयः, चैतन्यस्याखण्डस्वरूपस्या परिणामिनो रूपान्तरपरिणामाभावादित्यर्थः। एवं चाज्ञाननिवृत्तिर्नाज्ञानध्वसरूपेत्युपसंहरति- **तस्मादिति**।

रूपान्तरमस्ति, तस्मादत्र नास्त्येवाज्ञानध्वंसः, किन्त्वज्ञानस्य कल्पितत्वादत्यन्ताभाव एव तन्निवृत्तिः। किं तर्हि तत्त्वज्ञानस्य साध्यमिति चेत् ? नास्त्येवाज्ञानात्यन्ताभावबोधात्मकत्वबाधव्यतिरेकेण, तदुक्तम्–

"तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः। अविद्या सह कार्येण, नासीदस्ति भविष्यति ॥१॥"

[ ] इति, शुक्तिबोधेनापि हि रजतात्यन्ताभावबोधरूपो बाध एव क्रियते, मिथ्याभूतस्य च बाध एव ध्वंस इत्यभिधीयते, तद्वदिहापि द्रष्टव्यम्, स चायमधिष्ठानात्मक एव। कथं तर्हि सर्वथा सत इच्छाप्रयत्नाविति चेत् ? कण्ठगतचामीकरन्यायेनानवाप्तत्वभ्रमात्, पुरुषार्थत्वं तु तत्राभिलषितत्वादेव कृतिसाध्यत्वस्य तत्र गौरवेणाप्रवेशात्। चन्द्रामृतपातादौ पुरुषार्थत्वमिष्टमेवाऽप्रवृत्तिस्तु तत्र कृतिसाध्यत्वज्ञानरूपकारणान्तराभावादिति प्रतिपत्तव्यम्। कथं पुनः दृष्टिसृष्टिवादे श्रवणादिपरि-

अत्र चैतन्ये। तर्ह्यज्ञाननिवृत्तिः किंस्वरूपेति पृच्छति– **किन्त्विति**। उत्तरयति– **अज्ञानस्येति**। **तन्निवृत्तिः** अज्ञाननिवृत्तिः। नन्वत्यन्ताभावस्य परमतेऽतिरिक्तस्य नित्यत्वात् स्वमतेऽधिकरणस्वरूपत्वाज्ज्ञानसाध्यत्वाभावेन किं साध्यम् ? कस्यचिज्ज्ञानसाध्यस्याभावे ज्ञानानर्थक्यमापन्नमिति पृच्छति– **किमिति**– अस्य **साध्यमित्यनेनान्वयः**। उत्तरयति– **नास्त्येवेति**– "**बोधात्मकत्वबाध**" इत्यस्य स्थाने "बोधात्मकबाध" इति पाठो युक्तः, अज्ञानात्यन्ताभावबोधात्मकबाधव्यतिरेकेण नास्त्येवेत्यन्वयः, तथा चाज्ञानात्यन्ताभावबोधलक्षणाज्ञानबाध एव ज्ञानसाध्योऽज्ञाननिवृत्तिरित्यर्थः। उक्तबाधस्वरूपाज्ञाननिवृत्तेर्ज्ञानसाध्यत्वे प्राचां संवादमुपदर्शयति– **तदुक्तमिति**। **तत्त्वमस्यादीति**– 'तत्त्वमसि, अहं ब्रह्मास्मि' इत्यादिवाक्यजन्य यच्छुद्धचैतन्यज्ञानं तज्जन्यमात्रेण कार्येण सहाविद्याऽज्ञानस्वरूपा नासीत्– पूर्वकाले नाभवत्, नास्ति– वर्तमानकाले न विद्यते, न भविष्यति– उत्तरकाले नैव स्यास्यतीत्यर्थः, अनेन कालत्रयेऽपि कार्येण सहाज्ञानस्यात्यन्ताभावबाध उपजायत इति स एव बाधः। उक्तमर्थं दृष्टान्त-दार्ष्टान्तिकभावावष्टम्भेन भावयति– **शुक्तिबोधेनापीति**– शुक्ताविद रजतमिति भ्रमानन्तर त्रिकोणत्वादिकशुक्त्यसाधारणधर्मस्य तत्र ज्ञानत इयं शुक्तिरिति ज्ञानेन प्रातीतिकशुक्तिरूप्यस्य निवृत्तिर्भवति, तत्रापि त्रिकालेऽपि रजतं न भवतीदमिति रजतभेदबोधो नात्र रजतमिति रजतात्यन्ताभावबोधलक्षणबाध एव क्रियत इति मिथ्याभूतस्य रजतस्य बाध एव तस्य ध्वंस इत्यभिधीयत इत्यर्थः। **तद्वदिति**– तत्र यथा त्रैकालिकशुक्तिरजतात्यन्ताभावबोधो बाधः शुक्तिरजतनिवृत्तिस्तथेत्यर्थः। **इहापि** अज्ञाननिवृत्तावपि, त्रैकालिकसकार्याज्ञानात्यन्ताभावबोधात्मकबाधोऽज्ञाननिवृत्तिर्न त्वज्ञानध्वंस इति भावः। **स चायमिति**– निरुक्तबाधश्चाधिष्ठानभूतब्रह्मात्मक एव, तेन बाधस्वरूपद्वितीयसद्भावाशाद्वैतभङ्ग इति बोध्यम्। यदि निरुक्तबाधात्मकाज्ञाननिवृत्तिर्ब्रह्मात्मिकैव तदा तस्याः सर्वदा सत्त्वान्नोत्पत्तिरिति तद्विषयकाविच्छा-प्रयत्नौ कथं स्यातामिति पृच्छति– **कथं तर्हीति**। उत्तरयति– **कण्ठेति**–स्वकण्ठे स्थितमपि चामीकर दोषवशादनवगच्छन् प्रत्युत चामीकरं विनष्टमिति भ्रान्त्या तद्गवेषणप्रवृत्तः केनचिदाप्तेन अरे! तव कण्ठ एव स्थितं चामीकरं किमर्थमितस्ततस्तदन्वेषयसीत्येवं प्रतिबोधितोऽवाप्तमेव तदवाप्तमित्यवगच्छति तथा प्रकृतेऽप्युक्तस्वरूपं ब्रह्मावाप्तमेवानवाप्तत्वभ्रमादुक्तदिशा तदवाप्त्यर्थमिच्छा-प्रयत्नौ तदुपायविषयिणावात्मसात्कुर्वन् तदवाप्तितः कृतार्थो भवतीत्यर्थः। ननु निरुक्ताज्ञाननिवृत्त्यात्मकमोक्षो भवन्मते पुरुषार्थः; पुरुषेण कृत्या साध्य एव पुरुषार्थो भवति, निरुक्तमोक्षश्च नित्यब्रह्मस्वरूपत्वान्न कृतिसाध्य इति पुरुषार्थत्वं तस्य न स्यादित्यत आह– **पुरुषार्थत्वं त्विति** पुरुषेणार्थ्यते– अभिलष्यत इति पुरुषार्थ इति व्युत्पत्त्या पुरुषेच्छाविषयत्वं पुरुषार्थत्वम्, साधनस्य पुरुषार्थत्वं मा प्रसाङ्क्षीदित्येतदर्थमन्येच्छानधीनेच्छाविषयत्व तत् परिष्कृतं भवति, एवं च ब्रह्मस्वरूपमोक्षेऽपि निरुक्तेच्छाविषयत्वात् पुरुषार्थत्वं स्यादेव, कृतिसाध्यत्वे सति निरुक्तेच्छाविषयत्व यदि पुरुषार्थत्वं भवेन्न भवेदपि कृत्यसाध्ये तस्मिन् पुरुषार्थत्वम्, किन्तु गौरवेण कृतिसाध्यत्वं तत्र न प्रवेश्यत इत्यर्थः। नन्वेवं चन्द्रगतामृतपानादिविषयिण्यपि पुरुषेच्छा भवत्येवेति पुरुषेच्छाविषयत्वाच्चन्द्रगतामृतपानादावपि पुरुषार्थत्वं स्यादित्याशङ्कामिष्टापत्त्या परिहरति– **चन्द्रेति**– "**चन्द्रामृतपातादौ**" इत्यस्य स्थाने "चन्द्रामृतपानादौ" इति पाठ सम्यग्। यदि पुरुषार्थे चन्द्रामृतपानादि कथं तर्हि तदर्थिना न तत्र प्रवृत्तिरित्याकाङ्क्षायामाह– **अप्रवृत्तिस्त्विति**। **तत्र** चन्द्रामृतपानादौ। प्रवृत्तिं प्रति यथेच्छा कारण तथा कृतिसाध्यताज्ञानमपि कारणम्, तदभावान्न चन्द्रामृतपानादौ प्रवृत्तिरित्यर्थः। ननु वेदान्तिना दृष्टिसृष्टिवाद एव प्रधानः, तत्र यदैव यस्य दर्शनं तदेव तस्य सत्त्वमित्येकजन्मन्यप्याजन्ममरणान्तसमयतया प्रसिद्धे न

पाकजन्मना ज्ञानेन अज्ञानादिबाधः, तथाहि–तस्मिन् मते चैतन्यातिरिक्तपदार्थानामज्ञातसत्त्वं नास्ति, मिथ्यात्वस्य स्वप्नादिदृष्टान्तसिद्धत्वात् तादृशस्यैव सत्त्वस्याङ्गीकारात् एवं च घटादीनां यदा प्रतीतिस्तदा तत्त्वम्, नान्यदेति न दण्डादिजन्यत्वम्, किन्त्वज्ञानमात्रजन्यत्वम्, स्वप्नवच्च दण्डाद्युपादानम् । अज्ञान-देहादिकं तु भासमानमेव तिष्ठति । अभावनिश्चयाभावाच्च पुत्राद्यभावकृतरोदनाद्यप्रसङ्गः, प्रत्यभिज्ञानमपि भ्रम एव, ततश्चाकाशादिक्रमेण सृष्टिः, पञ्चीकरणं ब्रह्माण्डाद्युत्पत्तिश्चैतन्मते नास्त्येव, घटादेरपरोक्षं

---

कस्यापि सत्त्वमित्यनेकजन्मसाध्यत्वान्ताऽभ्यासलक्षणश्रवणादिपरिपाकासम्भवात् कुतस्तत्प्रभवेनाऽऽत्मसाक्षात्कारेणाज्ञानादिबाधसम्भव इत्याशङ्कते– **कथं पुनरिति** । निरुक्ताज्ञानादिबाधासम्भवमेव भावयति– **तथाहीत्यादिना** । **तस्मिन् मते** दृष्टिसृष्टिवादिमते । चैतन्यरूपस्य ब्रह्मणः सदातनत्वं तन्मतेऽप्यङ्गीक्रियत इत्यत उक्तं **चैतन्यातिरिक्तेति** । **अज्ञातसत्त्वं नास्तीत्यनेनाज्ञातसत्त्वप्रतिषेधेन** चैतन्यातिरिक्तपदार्थानां ज्ञातसत्त्वमेव– ज्ञानकालीनसत्त्वमेव तन्मते समस्तीत्युपदर्शितम् । **मिथ्यात्वस्येति**– प्रपञ्चो मिथ्या दृश्यत्वात् स्वप्नादिवदित्यनुमानतः प्रपञ्चमात्रस्य स्वप्नादिदृष्टान्तेन मिथ्यात्वस्य सिद्धत्वात्, तादृशस्यैव–मिथ्यात्वस्वरूपस्यैव ज्ञातसत्त्वस्य प्रपञ्चे स्वीकारादित्यर्थः । **एवं च** प्रपञ्चेऽज्ञातसत्त्वाभावस्य सिद्धौ च । **तदा** प्रतीतिकाले । **तत्त्वं** घटादीना सत्त्वम् । **नान्यदा** प्रतीतिसमयातिरिक्तसमये न सत्त्वम् । **इति** एतस्माद्धेतोः । **न दण्डादिजन्यत्वमिति**– दण्डादिममवधानसमयातिरिक्तसमये प्रतीयमानस्य घटादेस्तदैवोत्पत्तिः, तदानीं च दण्डादिसमवधानाभावाद् दण्डादेर्घटादिनियताव्यवहितपूर्ववर्तित्वाभावेन कारणत्वाभावाद् दण्डादिनिष्ठकारणतानिरूपितकार्यतालक्षणं दण्डादिजन्यत्वं घटादीना नास्तीत्यर्थः । तत् किं कारणं विनैव घटादीनामुत्पत्तिरिति पृच्छति– **किन्त्विति** । अज्ञानस्यानादेस्तन्मतेऽपि स्वीकारात् तस्य घटादिकारणत्वसम्भवेन तज्जन्यत्वं घटादेः सम्भवतीत्युत्तरयति– **अज्ञानमात्रजन्यत्वमिति**– घटादीनामित्यनुवर्तते । नन्वेवं घटादीनां दण्डादिजन्यत्वमाकलय्य तदर्थं दण्डादीनामुपादानं लोकैः क्रियते तदप्यनुपपन्नं स्यादित्यत आह– **स्वप्नवच्चेति**– स्वप्नेऽपि घटादीनामज्ञानमात्रप्रभवाणामुत्पत्त्यर्थं दण्डाद्युपादान यथा तथा प्रकृतेऽपीत्यर्थः, तथा च तत् कल्पितत्वान्मिथ्यैवेति भावः । कथं तर्ह्यज्ञानादीनामवस्थानमत आह– **अज्ञानेति**– तदवभासनं च साक्षिणेति बोध्यम् । ननु पितृ-मात्रादीना यदा पुत्रादिदर्शन नास्ति तदानीं पुत्राद्यभावात् तत्कृतरोदनादिप्रसङ्गः स्यादित्यत आह– **अभावेति**– अदर्शनकाले पुत्रादीनामभावेऽपि पित्रादेः पुत्राद्यभावनिश्चयो नास्ति, पुत्राद्यभावनिश्चय एव रोदनादिकारणम्, वास्तविकसत्त्ववादिमतेऽपि देशान्तरगतस्य पुत्रादेर्मरणे तदभावो विद्यते, नैतावता पित्रादिभी रोदनं क्रियते, यदा दलादिना तदभावनिश्चायकेन तदभावो निश्चीयते तदैव रोदनादिकं क्रियते इति स्वरूपसतः पुत्राद्यभावस्य न रोदनादिकारणत्वं किन्तु निश्चितस्यैवेति तदभावनिश्चयरूपकारणाभावान्न रोदनादिप्रसङ्ग इत्यर्थः । ननु 'स एवायं घटः, स एवायं पुत्रः' इत्यादिप्रत्यभिज्ञानात् पूर्वकालीनदर्शनविषयेण घटादिना वर्तमानकालीनदर्शनविषयस्य घटादेरभेदः सिध्यति, स च तदैवोपपद्यते यद्यन्तरालसमयेऽज्ञातोऽपि घटादिः स्यादित्यन्तरालकालेऽपि घटादिर्विद्यते, एवं च प्रत्यभिज्ञानेन बाधान्न ज्ञातमात्रसत्त्वं घटादीनामित्यत आह– **प्रत्यभिज्ञानमपीति**– लून-पुनर्जातनख-केशादौ स एवायं नख-केशादिरिति प्रत्यभिज्ञान लून-पुनर्जातनख केशादेरभेदाभावेऽपि सौसादृश्यादिदोषाद् भ्रान्तं समुद्भवति; दीपकलिकादावप्यनवरतविभिन्नतैलाद्युपादानतो विभिन्नमेव दीपकलिकादिकमुपजायत इति पूर्वापरदीपकलिकायोरभेदाभावेऽपि सैवेयं दीपकलिकेति प्रत्यभिज्ञानमभेदावगाहि भ्रान्तमुपजायते सौसादृश्यादिदोषात् तथा सर्वं प्रत्यभिज्ञानं भ्रम एवेति न ततोऽज्ञातसत्त्वसिद्धिरित्यर्थः । तत्र सृष्टिक्रमो न विद्यत इत्याह– **ततश्चेति**– यदा घटादीनां प्रतीतिस्तदानीमेव घटादीनां सत्त्वमित्युपगमाच्चेत्यर्थः । **आकाशादिक्रमेण सृष्टिरित्यस्य नास्त्येवेत्यनेनान्वयः**, एवं **पञ्चीकरणं ब्रह्माण्डाद्युत्पत्तिश्चेत्यस्यापि** । **एतन्मते** दृष्टिसृष्टिवादिमते । ननु अपरोक्षकारणस्येन्द्रियादेरज्ञानकाले सत्त्वं नैतन्मते समस्तीति यदा घटादीनां दर्शन तत्पूर्वकाले इन्द्रियादेर्दर्शनाभावादतीन्द्रियत्वाच्च न सत्त्वमिति तज्जन्यत्वाभावादिन्द्रियादिजन्यं ज्ञानं प्रत्यक्षमिति लक्षणलक्षितप्रत्यक्षस्वरूपं घटादेर्ज्ञानं न स्यादित्यत आह– **घटादेरपरोक्षमिति**– अपरोक्षस्वरूपचैतन्येऽध्यासादेव घटादेरपरोक्ष ज्ञानमित्यर्थः । ननु क्षणमात्रस्थायित्वाद् घटादिज्ञानं क्षणिकं तदात्मकसत्त्वमेव घटादेरिति तस्यापि क्षणिकत्वमिति यत् सत् तत् क्षणिकमिति व्याप्तितः सर्वस्य क्षणिकत्वमभ्युपगच्छतो बौद्धस्य मते दृष्टिसृष्टिवादिमतस्य प्रवेशः

तत्तदभ्यासादेव, अधिष्ठानस्य स्थायित्वाऽबाधितत्वाभ्यामज्ञानस्य चानादेः सकलसृष्टिहेतोरङ्गीकाराद् न बौद्धमतप्रवेशः, तदेवमज्ञानातिरिक्तकारणाभावात् कथं श्रवणादिजन्यं तत्त्वज्ञानमिति; अत्रोच्यते- लोके अज्ञानातिरिक्तानात्मदृष्टिकारणाभावेऽपि वेदे याग-स्वर्गादौ कार्यकारणभाववादीनां वेदान्तिनां यथेष्टाचरणप्रसङ्गात्, तस्माद् घटादेरिव स्वर्ग-नरकादेर्नाज्ञानमात्रजन्यत्वम्, अपि तु विहित-निषिद्ध-क्रियाजन्यत्वमपीति। दृष्टानुश्रविकस्थले अर्द्धजरतीयं प्रामाणिकं नो चेत्? अनात्मदृष्टिसृ[ष्टे]रनवसान-प्रसङ्गः। अधिष्ठानज्ञाने तदवसानप्रसङ्ग इति चेत्? न- तस्यैव हेतुत्वाभावात्। अज्ञानं तद्धेतुरिति चेत्? न- ततो दृष्टकारणनिरपेक्षया तदुत्पत्त्या शमाद्यनुष्ठानप्रसङ्गात्, भ्रान्त्या शमाद्यनुष्ठानमिति चेत्?

स्यादित्यत आह- **अधिष्ठानस्येति**- अधिष्ठानस्य शुद्धचैतन्यस्य सकलकालस्थायित्व-त्रिकालाबाधितत्वलक्षणपारमार्थिक-सत्त्वाभ्यामङ्गीकारात् सकलसृष्टिहेतोरनादेरज्ञानस्य चाभ्युपगमाद् दृष्टिसृष्टिवादस्य बौद्धमतप्रवेशो नेत्यर्थः। प्रश्नकर्ता स्वाशङ्कामुपसंहरति- **तदेवमिति**- तत्- तस्मात्, एवम्- उक्तप्रकारेण। यद्यपि लोके घट-पटादिकमज्ञानात्मदृष्टिमात्रजन्य तथापि वेदे स्वर्गादिकं प्रति अज्ञानात्मदृष्टिव्यतिरिक्तं यागादि-तत्प्रभावादृष्टादिकमपि कारणम्, अन्यथा स्वर्गकामो ब्राह्मण-हननादिकमपि कुर्वन्नज्ञानात्मदृष्टिरूपकारणबलात् स्वर्गादिकं प्राप्नुयादेवेति यथेष्टाचरण प्रसज्येतेति वैदिकस्वर्गादिकं प्रति विहितयागादिकमप्यदृष्टद्वारा कारण नरकादिक प्रति निषिद्धहननादिकमप्यदृष्टद्वारा कारणमवश्यमभ्युपगन्तव्यम्, तथा च वैदिकनिरुक्ताज्ञाननिवृत्त्यात्मकमोक्षं प्रति अज्ञानात्मदृष्टिव्यतिरिक्तश्रवणादिकमपि कारणमिति भवत्येव निरुक्तमोक्ष. श्रवणादि-प्रभव इत्येवं दृष्टिसृष्टिवादे श्रवणादिपरिपाकजन्मना ज्ञानेनाज्ञानादिबाधो निर्वहत्येवेति समाधत्ते- **अत्रोच्यत** इति। दृष्टि सृष्टिवादे घटादिक प्रत्यज्ञानमिवात्मदृष्टिरपि कारणमतोऽ**नात्मदृष्टी**त्यात्मदृष्टिभिन्नार्थमुक्तम्। "**वादीनाम्**" इत्यस्य स्थाने "वादिनाम्" इति पाठो युक्तः। **वेदान्तिनामि**त्यस्यानन्तर "विहित-निषिद्धकर्मादिकमपि कारणम्, अन्यथा" इति पाठो दृश्यः, तदर्थस्त्ववतरणेन स्पष्टीकृत एवेति। **तस्मात्** यथेष्टाचरणप्रसङ्गात्। **घटादेरिवे**ति व्यतिरेकिदृष्टान्तः, घटादेर्यथाऽज्ञानमात्रजन्यत्वं न तथा स्वर्ग-नरकादेरज्ञानमात्रजन्यत्वमिति तदर्थः। यदि स्वर्ग-नरकादेर्नाज्ञानमात्रजन्यत्वं तर्ह्यज्ञानव्यतिरिक्तकिंजन्यत्वमित्यपेक्षायामाह- **अपि त्विति**। ननु लोके घट-पटादिक प्रति अज्ञानात्मदृष्टिद्वयमेव कारण वेदे स्वर्गनरकादिकं प्रति विहित-निषिद्धकर्मादिकमपि कारणमित्यर्द्धजरतीयमप्रामाणिक किमित्युपेयमित्यत आह- **दृष्टाऽऽनु-श्रविकस्थल** इति- दृष्टघटपटादिकस्थले आनुश्रविकस्वर्गादिस्थले चेत्यर्थ., अध्यापकपरम्परया श्रूयत एव न तु केनापि क्रियत इत्यनुश्रवोऽपौरुषेयो वेदस्तदीयं तत्प्रतिपादितमित्यानुश्रविक स्वर्गादिकमिति बोध्यम्। **अर्द्धजरतीयमिति**- एका गौरर्द्धभागे युवती अर्द्धभागे वृद्धेत्यर्द्धजरती यथा तथा प्रकृते एकत्र यादृशः कार्यकारणभावस्तदन्यादृशोऽन्यत्र कार्यकारणभाव इत्यभ्युपगमेऽर्द्धजरतीन्याय आयोजनीयः, उक्तयुक्त्या प्रामाणिक एवायमुपगमस्तथापि नोपेयते चेदित्यर्थः। "**अनात्म-दृष्टिसृष्टेः**" इत्यस्य स्थाने "अज्ञानात्मदृष्टिसृष्टेः" इति पाठो युक्तः। यद्यदिच्छामात्रत उपेयते तत्तदुत्पत्तेरज्ञानात्म-दृष्टित. सम्भवादज्ञानात्मदृष्टेरवसानं न स्यादनवस्थाप्रसङ्ग इत्यर्थः। तदवसानमाशङ्कते- **अधिष्ठानज्ञाने** इति- जगच्छुद्ध-चैतन्ये कल्पितमित्यधिष्ठानं शुद्धचैतन्यं तज्ज्ञाने, अज्ञानात्मदृष्टिसृष्टेरवसानमित्यर्थः। समाधत्ते-**नेति**। **तस्यैव** अधिष्ठानस्यैव, निरूपितत्व षष्ठ्यर्थः, तथा च तत्त्वज्ञाननिरूपितहेतुत्वं न कस्यापीति अधिष्ठानसाक्षात्कार एव नोत्पद्येतेत्यर्थः। शङ्कते- **अज्ञानमिति**- अधिष्ठानज्ञाने तदवसानमित्यस्याधिष्ठानज्ञानं नाज्ञानजन्यमिति तत्रावसानमिति नार्थः, किन्त्वधिष्ठानज्ञानम-ज्ञानमात्रजन्यमेव, तदनन्तरमज्ञाननिवृत्त्या तज्जन्यं न किमपीति तदवसानमित्यर्थः, एव चाधिष्ठानज्ञानमज्ञानमात्रजन्यमेवेति नाधिष्ठानज्ञाननिरूपितहेतुत्वाभाव इति शङ्कार्थः। समाधत्ते- **नेति**। **ततः** अज्ञानमात्रतः। **तदुत्पत्त्या** अधिष्ठानचैतन्य-साक्षात्कारोत्पत्त्या। **शमादीति**- अज्ञानमात्रत एव चैतन्यसाक्षात्कारोत्पत्तेः सम्भवेन तदर्थं शमाद्यनुष्ठानस्याकर्तव्यत्व प्रसज्येतेत्यर्थः। चैतन्यसाक्षात्कारोत्पत्तितः प्राग् भ्रान्तिः शमादिकमात्मसाक्षात्कारजनकमिति ज्ञानं समस्तीत्यतः शमाद्य-नुष्ठानमिति शङ्कते- **भ्रान्त्येति**। समाधत्ते- **नेति**- एकवार तत्त्वमसीत्यादिमहावाक्यलक्षणवेदान्तश्रवणवता ब्रह्मभिन्न-

न– सकृद्वेदान्तार्थश्रवणवतां तदभावप्रसङ्गात्। किञ्च, भ्रमे अज्ञानमात्रजन्यत्वं युक्तम्, न त्वधिष्ठानज्ञाने, [ न ]हि रजतभ्रमवत् शुक्तिज्ञाने शुक्त्यज्ञानजन्यत्वम्। तदवश्यं दृष्टिसृष्टिपक्षे लोके अज्ञानातिरिक्तकारणाभावेऽपि वेदे यागादौ स्वर्गादिसाधनतया सम्मतैव। ततश्च यागादेः स्वर्गादिसाधनत्वं प्रतीत्य यागमनुतिष्ठतां उत्पन्नस्य स्वर्गसूक्ष्मरूपस्य [ यागसूक्ष्मरूपस्य ] वा अपूर्वस्य साक्षिसिद्धस्य स्वर्गजनकत्वम्, अपूर्वस्य साक्षिसिद्धत्वं नानुभूयते इति चेत्? न– अज्ञातसत्त्वानङ्गीकारेणाज्ञानकारणताया इव अपूर्वस्य साक्षिसिद्धताभ्युपगमस्यावश्यकत्वात्, ततश्च यागादेः स्वर्गादिजन्मवत् श्रवण-मननादिसहजकृतवेदान्तवाक्यात् तत्त्वज्ञानोत्पत्तिरविरुद्धा। दृष्टिसृष्टिवादे ईश्वरो नास्तीति "तत् त्वमसि" [ ] इत्यत्र कथं तदभेदप्रतीतिरिति चेत्? कुत एतदवगतम्? सर्वदाऽप्रतीतेरिति चेत्? तर्हि जीवोऽपि नास्त्येव, चिद्रूपतया भासमानत्वं चोभयत्र तुल्यम्, ईश्वरत्वं सदा न भासते इति चेत्? जीवत्वेऽपि तुल्यमेतत्, उभयमपि तर्हि नास्त्येवेति चेत्? न– साक्षित्वस्यानुभवसिद्धत्वात्,

---

जगन्मिथ्यात्वज्ञाने शुद्धचैतन्यज्ञाने सति शमादिकं शुद्धचैतन्यज्ञानकारणमिति भ्रान्तेरभावात् तज्जन्यस्य शमाद्यनुष्ठानस्याप्यभावप्रसङ्गादित्यर्थः। अधिष्ठानचैतन्यज्ञानं प्रमात्मकमिति न तत् प्रति अज्ञानात्मकदोषस्य कारणत्वम्, भ्रमं प्रत्येव तस्य कारणत्वादित्यज्ञानमात्रजन्यत्वं भ्रमे भवेत्, न तु चैतन्यसाक्षात्कारे इत्याह– **किञ्चेति**। अधिष्ठानज्ञाने नाज्ञानस्य कारणत्वमित्यत्र दृष्टान्तमाह– **नहीति**– शुक्ताविदं रजतमिति भ्रमे शुक्त्यज्ञानस्य करणत्व न तु शुक्तिज्ञाने शुक्त्यज्ञानस्य कारणत्वमिति यथा शुक्तौ रजतभ्रमं शुक्त्यज्ञानजन्यत्व न तु शुक्तिज्ञाने शुक्त्यज्ञानजन्यत्वं तथा प्रकृतेऽपीत्यर्थः। उपसंहरति– **तदिति**– तस्मादित्यर्थः। **अज्ञानातिरिक्तकारणाभावेऽपीत्यस्याज्ञानात्मदृष्टिव्यतिरिक्तकारणाभावेऽपीत्यर्थः।** ततश्च वेदे यागादौ स्वर्गादिसाधनतायाः सम्मतत्वाच्च। **स्वर्गसूक्ष्मरूपस्येत्यस्यापूर्वस्येत्यनेनान्वयः**, अपूर्वस्यादृष्टाख्यस्य स्वर्गसूक्ष्मरूपत्वं स्वर्गकारणत्वादेव, एव तस्य यागसूक्ष्मरूपत्वमपि यागव्यापारत्वात्, यदा च यागजन्यं स्वर्गजनकमपूर्वमुत्पद्यते तदैव किञ्चिदंशेन स्वर्गस्य सूक्ष्मरूपमपि सम्पद्यत इति स्वर्गसूक्ष्मरूपत्वमपूर्वस्य, अपूर्वोत्पत्तिकाले स्थूलरूपेण यागस्य विनाशेऽपि सूक्ष्मरूपेणावस्थानं समस्त्येवेत्यभिसन्धिः। एतादृशस्यापूर्वस्य प्रमाणाभावादसिद्धत्वमिति नाशङ्कनीयं तस्य साक्षिसिद्धत्वादित्याशयेनाह– **साक्षिसिद्धस्येति**। **स्वर्गजनकत्वमित्यत्र** च्छेदः। अपूर्वस्य साक्षिसिद्धत्व यदि भवेत् तदा स्वर्गजनकत्वं तस्य स्वीक्रियेतापि, न च तस्य साक्षिसिद्धत्वमननुभवादित्याशङ्कते– **अपूर्वस्येति**।

"चिरध्वस्तं फलायालं न कर्मातिशयं विना" [ कुसुमाञ्जलौ ] इति वचनात् चिरध्वस्तस्य यागादेः साक्षात् स्वर्गोत्पत्तितोऽव्यवहितपूर्वसमयेऽसत्त्वेन वेदबोधितकारणत्वमनुपपन्नमिति तदन्यथानुपपत्त्या यागव्यापारतयाऽपूर्वं कल्प्यत इति तस्य यागजन्यत्वं स्वर्गजनकत्वं चान्यथानुपपत्तिलक्षणार्थापत्तिप्रमाणसिद्धमेव, किन्तु दृष्टिसृष्टिवादे सर्वस्य ज्ञातसत्त्वमेव– यदेव ज्ञायते तदेव सदित्यज्ञातसत्त्वं न कस्यापि स्वीक्रियते, तत एव चाज्ञानस्य कारणता साक्षिवेद्येत्युपेयते, एवं चापूर्वमपि यद्यज्ञातं स्यान्न सत् स्यादित्यतस्तस्य साक्षिवेद्यत्वात् साक्षिसिद्धत्वमवश्यमभ्युपगन्तव्यमिति समाधत्ते– **नेति**। **अज्ञानकारणताया इवेति**– अज्ञाननिष्ठकारणताया यथा साक्षिसिद्धत्वाभ्युपगमस्तथेत्यर्थः। उपसंहरति– **ततश्चेति**। अन्यत् स्पष्टम्। शङ्कते– **दृष्टिसृष्टिवाद** इति। **तदभेदप्रतीतिः** त्वंपदार्थे जीवे तत्पदार्थस्येश्वरस्याभेदप्रतीतिः। समाधाता शङ्कितारं पृच्छति– **कुत** इति– दृष्टिसृष्टिवादे ईश्वरो नास्तीत्यवगतिर्भवतः कस्मात् कारणात् समुत्पन्नेत्यर्थः। प्रश्नयिता प्राह– **सर्वदेति**– दृष्टिसृष्टिवादे यदेव प्रतीयते तदेव सत्, ईश्वरस्तु कदाचिदपि न प्रतीयत इति सर्वदाऽप्रतीतत्वान्नास्तीश्वर इत्यर्थः। समाधाता प्राह– **तर्हीति**। सर्वदाऽप्रतीतेर्जीवोऽपि तन्मते नास्त्येवेति कथ जीवासत्त्वनिबन्धनाऽपि तदभेदप्रतीत्यनुपपत्तिर्नाशङ्किता? यदि च चिद्रूपतया भासमानत्वाज्जीवस्य प्रतीतेर्न तस्यासत्त्व तर्हि चिद्रूपतया भासमानत्वेन तत्प्रतीतेरपि सद्भावादीश्वरस्यापि नासत्त्वमित्याह– **चिद्रूपतयेति**। **उभयत्र** जीवे ईश्वरे च। यद्यपि भासमानत्वमस्तीश्वरस्य, तथापीश्वरत्वं सदा न तत्र भासत इतीश्वरत्वेनेश्वरोऽप्रतीयमानो नास्तीत्युच्यते इत्याशङ्कते– **ईश्वरत्वमिति**। समाधाता प्राह– **जीवत्वेऽपीति**– जीवत्व सदा न भासत इति जीवत्वेन जीवो नास्तीत्यप्युच्यतामित्यर्थः। दुर्घटः

अघटकाज्ञाने शक्तिद्वयस्यावश्यकत्वेन तद्गर्भजीवत्वेश्वरत्वयोरनादित्वस्य यौक्तिकत्वात् तयोरभेदानुपपत्तेर्लक्षणया अद्वयचिन्मात्रधीर्वक्तव्या । तस्माद् दृष्टिसृष्टिवादेऽपि यथोक्तानुष्ठानवता तत्त्वज्ञानादखण्डानन्दब्रह्मस्वरूपा मुक्तिर्युक्तैव, एतच्छुद्धद्रव्यास्तिकप्रकृतिकमतद्वयं पर्यायार्थिकनययुक्तिभिर्निर्लोठनीयमवतारणीयं च स्याद्वादे ॥ ११० ॥

**अशुद्धाद् व्यवहाराख्यात्, ततोऽभूत् सांख्यदर्शनम् ।**
**चेतना-ऽचेतनद्रव्याऽनन्तपर्यायदर्शकम् ॥ १११ ॥**

**नयामृत०**—अशुद्धादिति । व्यवहाराख्यात्– व्यवहारनामधेयात्, अशुद्धात् ततः– द्रव्यार्थिकनयात् साङ्ख्यदर्शनमभूत्, कीदृशं तत् ? चेतनश्चाचेतनद्रव्यं च अनन्तपर्यायाश्च– आविर्भाव-तिरोभावात्मकाः, तेषां दर्शकं प्रतिपादकमिति यावत् । तथा च तन्मतरहस्यम्– पुरुषस्तावच्चिद्रूपो न कस्यापि

प्रश्नयिता पुनः शङ्कते– **उभयमपीति**– ईश्वरत्व जीवत्व चेत्युभयमपीत्यर्थः, तथा चेश्वरत्वेनेश्वराभावस्येव, जीवत्वेन जीवाभावस्यापीष्टत्वमेवेति भावः । समाधत्ते–नेति । "**साक्षित्व**" इत्यस्य स्थाने "साक्षिभास्यत्व" इति पाठो युक्तः, साक्षी द्विविधो जीवसाक्षी ईश्वरसाक्षी च; साक्षी च स्वयं भासत इति तेनेश्वरो जीवश्च भासते, साक्षी च साक्षित्वेनैवावभासत इत्यनुभवसिद्धत्वादीश्वरजीवयोरीश्वरत्व-जीवत्वधर्माक्रान्तयोर्नाभाव इत्यर्थः । जीवत्वेश्वरत्वयोरनादित्वं व्यवस्थापयति– **घटकेति**– "**अघटकाज्ञाने**" इत्यस्य स्थाने "घटकाज्ञाने" इति पाठो युक्तः, अज्ञानावरणविशिष्टचैतन्यत्वं जीवत्वमज्ञानविक्षेपशक्तिविशिष्टचैतन्यत्वमीश्वरत्वमित्येव जीवत्वेश्वरत्वलक्षणेऽज्ञानघटिते घटकं यदज्ञानं तत्र **शक्तिद्वयस्य** आवरणशक्ति-विक्षेपशक्तिद्वयस्य । **आवश्यकत्वेन** अवश्य स्वीकर्तव्यत्वेन । **तद्गर्भजीवत्वेश्वरत्वयो**र्निरुक्तशक्तिमदज्ञानघटितत्वेन तद्गर्भजीवत्वेश्वरत्वयोः, **अनादित्वस्य** निरुक्ताज्ञानस्यानादित्वेन तद्घटितयोरप्यनादित्वमित्येवमनादित्वस्य, **यौक्तिकत्वात्** युक्तिसिद्धत्वात्, विशिष्टस्वरूपसन्निविष्टयोर्विशेषणविशेष्ययोरनादित्वे विशिष्टस्याप्यनादित्वमित्यत्र युक्तिः, **तयोः** अनादिभूतजीवत्वेश्वरत्वरूपविरुद्धधर्मविशिष्टयोर्जीवेश्वरयोः– **अभेदानुपपत्तेः** तादात्म्यानुपपत्तेः, **लक्षणया** तत्-त्वंपदयोः शुद्धचैतन्ये जहदजहल्लक्षणया, **अद्वयचिन्मात्रधीः**, अद्वितीय यच्चैतन्यमात्रं शुद्धचैतन्य तस्य तत् त्वमसीतिवाक्यजन्या धीः, वक्तव्येत्यर्थः । दृष्टिसृष्टिवादे मुक्तेर्युक्तत्वमुपसंहरति– **तस्मादिति** । **यथोक्तानुष्ठानवता** शमदमाद्यनुष्ठानवता पुरुषधुरन्धरेण, **एतत्** भर्तृहरिमतं वेदान्तिमतं च क्रमेणानन्तरमेवोपपादितम् । **शुद्धेति**– शुद्धद्रव्यास्तिको यः सङ्ग्रहाख्यो नयस्तत्प्रकृतिकं– तत्कारणक मतद्वयम्, पर्यायार्थिकनय.– ऋजुसूत्रादिनयः, तस्य यैकान्तनित्ये अर्थक्रियाकारित्वलक्षणसत्त्वासम्भवादेकान्तनित्याद्वैतादिकं न सम्भवतीत्यादिका युक्तिस्ताभिर्निर्लोठनीयं– खण्डनीयमित्यर्थः । तत् किमद्वैतादिक न सम्भवति ? सम्भवति अपेक्षाभेदतः 'स्यादद्वैतं स्यादभेदः' इत्येवं कथंचिदर्थसङ्घटनेन स्याद्वादे, न त्वेकान्तवादे इत्याह– **अवतारणीयं च स्याद्वाद** इति– ग्रन्थगौरवभयाद् ग्रन्थकारेण तत्खण्डनमण्डनयुक्तिजालं नोपन्यस्तं किन्तु ग्रन्थान्तरे स्वयं पूर्वसूरिभिश्चोपदर्शितं तत्तदभिलाषुकैरवलोकनीयमिति सूचितम् ॥ ११० ॥

व्यवहारनयप्रकृतिकं साङ्ख्यदर्शनं चेतनाऽ-चेतनादिप्रतिपादकमित्यावेदकमेकादशोत्तरशततमपद्यं विवृणोति– **अशुद्धादितीति**। **व्यवहाराख्यादि**त्यस्य विवरण– **व्यवहारनामधेयादिति**। **तत** इति मूलस्य विवरणं– **द्रव्यार्थिकनयादिति** । उत्तरार्द्धमवतार्य विवृणोति– **कीदृशमिति** । **तत्** साङ्ख्यदर्शनम् । अनन्तपर्याया किंस्वरूपा इत्यपेक्षायामाह– **आविर्भावतिरोभावात्मका** इति, तन्मते कारण-कार्ययोरभेदादुत्पत्तेः प्रागपि कार्यं विनाशानन्तरमपि च कारणात्मना समस्त्येव, उत्पत्तिस्तस्याविर्भावः, विनाशस्तिरोभाव इति। **तथा च** साङ्ख्यदर्शनस्य चेतनाऽचेतनद्रव्याऽनन्तपर्यायप्रदर्शकत्वे च । **तन्मतरहस्यं** साङ्ख्यमताभिप्रेतम् । तन्मते पुरुषः किंस्वरूप इत्यपेक्षायामाह– **पुरुष** इति । **तावदिति** वाक्यालङ्कारे । **चिद्रूपः** चैतन्यस्वरूप । **न कस्यापि कारणमि**त्यादिना **पुरुष. कूटस्थनित्य** इत्यस्य समर्थनम्, पुरुषस्य यत्, किञ्चित् कार्यं प्रति कारणत्वे कार्य-कारणयोरभेदात् कार्यनाशे तस्यापि तदात्मना नाशादप्रच्युतानुत्पन्नस्थिरैकत्वभावत्वलक्षणं कूटस्थनित्यत्वं न स्यादित्यकारणं पुरुषः, कार्यरूपत्वे भावकार्यस्य नाशोऽवश्यम्भावीति न निरुक्तकूटस्थनित्यतेति

कारणं न कस्यापि कार्यं नवा जन्यधर्माश्रय इति कूटस्थनित्य इत्युच्यते, बुद्धिगताश्च धर्मा अज्ञात-परमार्थैस्तत्रारोप्यन्ते भटविजयपराजयौ राज्ञीव, प्रकृतिरचेतना परिणामिनी आदिकारणं च, तस्याश्चाद्य-परिणामो बुद्धिर्महत्तत्त्वापरपर्याया, तस्या धर्मा— ज्ञाना-ज्ञानैश्वर्या-नैश्वर्य-वैराग्या-ऽवैराग्य-धर्मा-ऽधर्मरूपा-अष्टौ, बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्ना अपि, भावनायास्तैरनङ्गीकारादनुभवस्यैव स्मृतिपर्यन्तं सूक्ष्मरूप-तयाऽवस्थानाभ्युपगमात्, महत्तत्त्वादहङ्कारः, अहङ्काराद् रूप-रस-गन्ध-स्पर्श-शब्दतन्मात्राणि पञ्च एका-दशेन्द्रियाणि च । पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानि जायन्ते, तदुक्तम्—

न कार्यः पुरुषः, जन्यधर्माश्रयत्वे धर्मधर्मिणोरभेदाद् धर्मनाशे धर्मिणस्तस्यापि नाशः प्रसज्येतेत्येवमपि कूटस्थनित्यता न स्यादिति जन्यधर्मानाश्रयः पुरुषः कूटस्थनित्य इत्येवमुच्यत इत्यर्थः । नन्वेवं सुख-दुःखादिधर्माधारतया पुरुषप्रतीतिर्न स्यादित्यत आह— **बुद्धिगताश्चेति**— बुद्धिरन्तःकरणं महत्तत्त्वम्, तद्गताः—तद्वर्तिनः सुख-दुःखादयो धर्माः, **तत्र** पुरुषे आरोप्यन्ते । कैरारोप्यन्त इत्यपेक्षानिवृत्तये उक्तम**ज्ञातपरमार्थैरिति**— अज्ञातः परमार्थो वास्तविकार्थो यैस्तेऽज्ञातपरमार्थाः पुरुषास्तैः कूटस्थनित्ये पुरुषे बुद्धिधर्माः सुख-दुःखादय आरोप्यन्त इति सुख-दुःखाद्याधारतया पुरुषप्रतीतिर्भ्रान्तैवेति तथाविधायास्तस्या नापलाप इति भावः । अन्यगतधर्माणामन्यत्रारोपतस्तथाप्रतीतिर्भवतीत्यत्र दृष्टान्तमाह— **भटविजय-पराजयौ राज्ञीवेति**— रणे मल्लप्रतिमल्लभावेनान्योऽन्य प्रतां भटानां मध्ये यस्य जयः पराजयो वा भवति तज्जय-पराजयौ तत्स्वामिनि राजनि आरोप्यासौ राजाऽमु राजानं जितवान् अनेन राज्ञा वा पराजित इति बुद्धिरारोपरूपत्वाद् भ्रान्ता यथा भवति तथेत्यर्थः । साङ्ख्यमते पुरुषमुपादाय प्रकृत्यादिक पञ्चविंशतिविध तत्त्वमिति क्रमेण प्रकृत्यादिस्वरूपं निरूप-यितुमाह— **प्रकृतिरिति**— सत्त्व-रजस्तमसा साम्यावस्था प्रकृतिरिति गीयते ।

" सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः । गुरु वर्णकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ १ ॥ " [ ]

इतीश्वरकृष्णवचनाद् यद् वस्तु लघुताशालि प्रकाशकताशालि तत् सत्त्वं साङ्ख्याचार्यैरिष्टम्, उपष्टम्भकं यदि रजो गुणो न भवेत् तदा गुरुणा तमसा प्रतिरुद्ध सत्त्व स्वकार्यं न साधयेदित्युपष्टम्भकं— सत्त्वादेः कार्यकरणे उत्तम्भकं सहकारि रजः, तथा यदि रजोगुणो न भवेत् तर्हि गुरुणा तमसा व्याप्तं वस्त्वक्रियमेव भवेत् ततश्चलं चल-नात्मकक्रियाविष्टं रज उपयते, एव च गुर्वपि रजसा चालितं सद् वस्तु सक्रियं भवति, यदि तमो न भवेत् तदा रजसा चालित लघु सत्त्वोपेतं वस्तु सर्वदा चलेदेव न क्वचिदवस्थानमासादयेत्, गुरुणा तमसाऽवष्टब्धं सर्वदा चलितुमशक्नुवत् किञ्चिच्चलति किञ्चिन्न चलत्यपीति गुरु तमः, एवं यदि तमो न स्यात् प्रकाशकस्वभावेन सत्त्वेनालिङ्गितं वस्तु सर्वदा प्रकाशेत एव कदाचिदप्यप्रकाशो न भवेदिति वरणकमावरणकारि तमः, एवं च यदा तमसः सत्त्वापेक्षया प्राबल्यं तदा न प्रकाशते, यदा च दौर्बल्य तदा प्रकाशत इति सिद्ध्यतः प्रकाशाऽप्रकाशाविति निरुक्तवचनाभिप्रेतार्थः । सा च प्रकृतिः **अचेतना** न चेतयते, चेतनात्मकपुरुषाभेदारोपाच्च चेतनेव भवति । एवं **परिणामिनी** बुद्ध्याद्यात्मना परिणमते । प्रकृतेर्न किञ्चित् कारण तस्या अपि कारणाभ्युपगमेऽनवस्थानं प्रसज्यत इति न कार्यस्वरूपा सा किन्तु सर्वस्य कार्यस्य कारणमित्याह— **आदिकारणं च । तस्याश्च** प्रकृतेः पुनः । **आद्यपरिणामः** प्रथमपरिणामः, प्रकृतिः सत्त्वोद्रेकात् प्रथमतो बुद्धिरूपेण परिणमत इत्यर्थः । " बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् " [ ] इति गौतमसूत्रात् कौशाच्च बुद्धिर्ज्ञानमिति व्यवह्रियते लोके, नात्र तद्ग्रहण किन्तु बुद्धिरन्तःकरणम्, तस्याश्च महत्तत्त्वमिति नामान्तरमित्याह— **महत्तत्त्वापरपर्यायेति** । बुद्धेरेव ज्ञानाऽज्ञानादयो धर्मा न चैतन्यस्वरूपस्यात्मन इत्याह- **तस्या** इति— बुद्धेरित्यर्थः । ज्ञानाऽज्ञानेत्यत्र ज्ञानपदेनैव ज्ञानस्वरूपाया बुद्धेर्ग्रहणे पुनर्बुद्धि-**सुखेत्यत्र** ग्रहणं बुद्धेरन्तःकरणस्य धर्मोऽन्तःकरणरूपा बुद्धिर्न भवति, किन्तु ज्ञानस्वरूपा बुद्धिरपि साङ्ख्याभिमता, सा च बुद्धिधर्म इत्यावेदनाय । **अपीत्यनेन** 'तस्या धर्माः' इत्यनुकृष्यते । ननु अनुभवात् कालान्तरे स्मृतेरुत्पत्तये तद्व्यापारो भावनाख्यसस्कारो नैयायिकैरुपेयत इति भावनाख्य-सस्कार. साङ्ख्यमते बुद्धिधर्मो भवितुमर्हतीति भावनाया अपि बुद्धिधर्मतया कथनमुचितमित्यत आह— **भावनाया** इति— भावनाख्यसंस्कारस्येत्यर्थः । **तैः**, साङ्ख्यैः । **अनङ्गीकारात्** अनभ्युपगमात् । नन्वेवं कालान्तरीयानुभवात् स्मृत्युत्पत्त्य-

मूलप्रकृतिरविकृतिः, महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकश्च विकारो, न प्रकृतिर्न विकृतिः पुरुषः ॥ १ ॥ [ ] इति,

पञ्च महाभूतान्येकादशेन्द्रियाणि चेति षोडशको वर्गः, तत्राचेतनाया अचेतनप्रकृतिकार्याया बुद्धेश्चैतन्याभिमानानुपपत्त्या स्वाभाविक-चैतन्यरूपः पुरुषः सिद्ध्यति। चैतन्यस्य तु नित्यस्य स्वाभाविकेष्टाऽनिष्टविषयावच्छिन्नत्वस्वभावे अनिर्मोक्षापत्तिः, प्रकृत्यधीनत्वेऽपि विषयावच्छिन्नत्वस्य तस्याऽति(पि) नित्यतया तथैवानिर्मोक्षत्वापत्तिः, घटादेरेवानित्यस्य चैतन्यावच्छेदस्य व्यासङ्गानुपपत्तिः, अतो मनः सिद्ध्यति, तत्सम्बद्धेन्द्रियस्य विषयचैतन्यावच्छेदनियामकत्वम्। स्वप्नावस्थायां 'व्याघ्रोऽहम्' 'वराहोऽहम्' इत्यभिमानो दृश्यते, न तु 'नरोऽहम्' इत्यभिमानः, अस्ति च तत्र नरत्वं सन्निहितमिन्द्रिय-

---

व्यवहितपूर्वसमयेऽसतः कथं स्मृत्युत्पत्तिरित्यत आह- **अनुभवस्यैवेति**- तथा च स्मृत्युत्पत्त्यव्यवहितपूर्वसमये सूक्ष्मरूपेणावस्थितादेवानुभवात् स्मृत्युत्पत्तिसम्भवे भावनाख्यसंस्कारकल्पनं परेषामप्रामाणिकमित्याशयः। प्रकृत्यादिपञ्चविंशतितत्त्वं साङ्ख्यसम्मतमित्यावेदनाय तत्प्रतिपादिकामीश्वरकृष्णकारिकामुपनिबध्नाति- **तदुक्तमिति**। **मूलप्रकृतिः** बुद्ध्याद्यशेषविकृतिप्रथमकारणं प्रकृतिः। **अविकृतिः** न कस्यापि कार्यमिति विकृतिरूपा न भवति। **महदाद्याः सप्त** महदहङ्कारपञ्चतन्मात्राणि। **प्रकृतिविकृतय** इति- महत्तत्त्वमहङ्कारस्य कारणमिति प्रकृतिः, मूलप्रकृतेः कार्यमिति विकृतिरिति प्रकृतिविकृतिः अहङ्कारः, पञ्चतन्मात्रादिषोडशविकारकारणमिति प्रकृतिः, महत्तत्त्वस्य कार्यं इति विकृतिरित्येवं प्रकृतिविकृतिः, पञ्चतन्मात्राणि पञ्चमहाभूतकारणमिति प्रकृतिः, अहङ्कारकार्यमिति रीत्येवं प्रकृतिविकृतिरित्यर्थः। **षोडशकश्च** एकादशेन्द्रियाणि पञ्च भूतानीत्येवं षोडशसङ्ख्यको गणः। **विकारः** अहङ्कारस्य कार्यत्वादेकादशेन्द्रियाणि विकृतिः, पञ्चतन्मात्रकार्यत्वात् पञ्च महाभूतानि विकृति॰, न चायं षोडशको गणः कस्यापि तत्त्वान्तरस्य कारणमिति प्रकृतिर्न भवति, यद्यपि मृदाद्यात्मिका पृथिवी घटादेः कारण भवति तथापि न तस्य तत्त्वान्तरत्वमिति बोध्यम्। **पुरुषः** चैतन्यस्वरूपो न कस्यापि कारणमिति **न प्रकृतिः** प्रकृतिर्न भवति, एवं न कस्यापि कार्यमिति **न विकृतिः** विकृतिर्न भवतीत्यर्थः। षोडशको वर्गः क इत्यपेक्षायामाह- **पञ्चेति**। ननु प्रकृत्यादित एव जगदुत्पद्यत इति निष्प्रयोजनत्वात् पुरुषः प्रकृतिविकृत्यनात्मको नाभ्युपेय इत्यत आह- **तत्रेति**- पञ्चविंशतितत्त्वेष्वित्यर्थः। **अचेतनाया** इति- यदि पुरुषधर्माः सर्वेऽपि बुद्धावेवाभ्युपगतास्तर्हि चैतन्यमपि पुरुषधर्मो बुद्धिधर्म एवास्त्विति कथं बुद्धिरचेतनेत्यपेक्षायामाह- **अचेतनप्रकृतिकार्याया** इति- कार्यकारणयोरभेदात् कारणस्याचैतन्ये कार्यस्याप्यचैतन्यमित्यचेतनप्रकृतिकार्यत्वाद् बुद्धेरचैतन्यं सिद्ध्यतीत्यर्थ., तथा चाचेतनाया बुद्धेश्चेतनोऽहं करोमीति चैतन्याभिमानो नातिरिक्तचेतनमन्तरेणेति बुद्धिगतचैतन्याभिमानानुपपत्त्या स्वाभाविकचैतन्यरूपः पुरुषः सिद्ध्यतीति। बुद्ध्यहङ्कारादिकल्पनस्यावश्यकत्वमुपदर्शयति- **चैतन्यस्य त्विति**- चैतन्यस्य पुरुषस्य इष्टानिष्टविषयावच्छेदस्वभावो यदि स्वाभाविकस्तदा पुरुषस्य नित्यत्वात् तत्स्वभावोऽपि नित्य एवाभ्युपेयः, अन्यथा स्वभाव-तद्वतोरभेदात् स्वभावनाशे तद्वतः पुरुषस्यापि नाशः स्यादिति कूटस्थनित्यता तस्य भज्येत, एव च, स्वाभाविकेष्टानिष्टविषयावच्छिन्नस्वभाव॰ पुरुषः सदैवेत्यनिर्मुक्त एव प्रसज्येतेत्यर्थः। ननु प्रकृतिरुपेयत एव, तदधीन एव पुरुषस्येष्टानिष्टविषयावच्छेदस्वभाव इत्यौपाधिक एवेति तन्नाशान्मुक्तिर्भविष्यतीत्यत आह- **प्रकृत्यधीनत्वेऽपीति**- विषयावच्छिन्नत्वस्य प्रकृत्यधीनत्वेऽपीत्यन्वयः। **तस्यापि** प्रकृत्यधीनविषयावच्छिन्नत्वस्यापि। **नित्यतयेति**- उपाधिसन्निधानस्यानित्य एवौपाधिकस्यानित्यत्वम्, उपाधिसन्निधानस्य नित्यत्वे त्वौपाधिकस्यापि नित्यत्वमेव, प्रकृते चैतन्यरूपपुरुषो नित्यो विभुश्च, प्रकृतिरपि नित्या विभ्वी चेति पुरुषे प्रकृतिसन्निधानस्य सदैव भावेन तन्निबन्धनस्येष्टानिष्टविषयावच्छेदस्यापि सर्वदा भावादनिर्मोक्षापत्तिस्तदवस्थैवेत्यर्थः। ननु घटादेरेवानित्यस्य चैतन्यावच्छेदस्वभाव इति घटादिनाशात् तद्गतचैतन्यावच्छेदस्वभावस्यापि नाशे पुरुषस्य मोक्षो भविष्यतीत्यत आह- **घटादिरेवेति**- घटादेश्चैतन्यावच्छेदस्वभावे घटादिज्ञानं भवति, तदभावे न भवतीत्यभ्युपेयं स्यात्, किन्तु घटादेश्चैतन्यावच्छेदस्य यदाऽपि भावस्तदापि कदाचिद् घटज्ञानं कदाचित् पटज्ञानमित्येवं व्यासङ्गस्यानुपपत्ति. स्यादित्यर्थः। **अतो** व्यासङ्गानुपपत्तिप्रसङ्गभयात्। **मनः सिद्ध्यतीति**-मनोऽभ्युपगमे च कथ व्यासङ्गोपपत्तिरित्यपेक्षायामाह- **तत्सम्बद्धेन्द्रियस्येति**- मनःसंबद्धचक्षुरादीन्द्रियस्येत्यर्थः, तथा च मनसा संयुक्तस्य चक्षुरादेर्येन

मनःसम्बन्धश्चेति तद्भिन्नोऽहङ्कारो नियतविषयाभिमानव्यापारः स्वीकार्यः। सुषुप्ताविन्द्रियस्य व्यापार-विरतावपि यद्व्यापारादुच्छ्वास-प्रश्वाससन्ततिर्जायते तद् बुद्धितत्त्वं प्रागुक्तभावाष्टकयोगि स्वीकार्यम्, तस्य ज्ञानरूपपरिणामेन सम्बन्धो विषयः पुरुषस्य स्वरूपतिरोधायकः। एवं च बुद्धितत्त्वनाशादेव विषया-वच्छेदाभावात् पुंसो मोक्षः, भेदाग्रहाच्च 'चेतनोऽहं करोमि' इत्यभिमानः, अत एव—

"प्रकृतेः क्रियमाणानि, गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा, कर्ताहमिति मन्यते॥"

[गीता, अ० श्लो० ] इति स्मर्यत इति।

अत्र नैयायिकादयः—'चेतनोऽहं करोमीति बुद्धेरसति बाधके भ्रमत्वायोगाच्चैतन्यकृत्यादिधर्मवत्त्येव बुद्धिः स्वीकर्तव्या, तथा च आत्मनो नामान्तरमेतत्, अथ 'बुद्धिरचेतना परिणामित्वात् तन्तुवत्' इति चेत्? तर्हि 'बुद्धिर्न कृतिमती तत एव तद्वत्' 'न धर्मा-ऽधर्मादिमती जन्यत्वाद् घटवद्'

---

विषयेण यदा सम्बन्धस्तदानी तद्विषय पुरुषयोरवच्छेद्यावच्छेदकभाव इति कदाचिद् घटज्ञान कदाचित् पटज्ञानमिति व्यासङ्ग उपपद्यत इति भावः। अहङ्कारकल्पनस्यावश्यकत्वं दर्शयति—**स्वप्नावस्थायामिति**। **तद्भिन्नः** मनोभिन्नः, अन्यत् स्पष्टम्। बुद्धितत्त्वाभ्युपगमस्यावश्यकत्वं दर्शयति—**सुषुप्ताविन्द्रियस्येति**। **तस्य** बुद्धिसत्त्वस्य। घटः पट इत्याकारको यो ज्ञानात्मकपरिणामस्तेन सह विषयविषयिभावसबन्धेन सबद्धो घटपटादिलक्षणो विषयः पुरुषस्यान्यासम्पृक्ताखण्डचैतन्य-स्वरूपस्य तिरोधायक आवरको भवति, तथा च स्वविषयकबुद्धिपरिणामज्ञानातात्त्विकसंबन्धात् पुरुषसम्बद्धो घटादिः पुरुषस्वरुपतिरोधायक इत्यर्थः। बुद्धिपरिणामेन ज्ञानेन पुरुषस्य यो घटमहं जानामीत्येवस्वरूपोऽतात्त्विकसम्बन्धः स एवो-पलब्धिरुच्यते, तथा च बुद्धितत्त्वबलादेव परम्परया पुरुषे विषयसम्बन्धलक्षणो विषयावच्छेद इति बुद्धितत्त्वनाशाद् विषयावच्छेदस्याप्यभावान्मोक्षो भवतीत्याह—**एवं चेति**। **भेदाग्रहाच्च** बुद्ध्या सह पुरुषस्य यो भेदस्तदग्रहात् पुनः। उक्तार्थे भगवद्गीतावचनसवादमाह—**अत एवेति**—बुद्ध्या पुरुषस्य भेदाग्रहाच्चेतनोऽहं करोमीत्यभिमानस्य भावादेवेत्यर्थः। **प्रकृतेरिति**—प्रकृतेर्गुणैः—सत्त्व-रज-स्तमोभिः, क्रियमाणानि सर्वशः कर्माणि कार्याणि, किन्तु अहङ्कारविमूढः—बुद्ध्या सह भेदेनागृहीत आत्मा—पुरुषोऽहं कर्तेत्येवं मन्यत इत्यर्थ.। निरुक्तप्रकृत्यादिपञ्चविंशतितत्त्वाभ्युपगमप्रवणसाङ्ख्यमतायुक्तत्वावेदनाय तन्मतखण्डनपटिष्ठयुक्तिकल्पननिष्णातान् नैयायिकादीन् प्रतिमल्लतयोत्थापयति—**अत्रेति**। **नैयायिकादय** इति—अस्य आहुरित्यनेन सम्बन्धः। किमाहुरित्यपेक्षायामाह—**चेतनोऽहं करोमीति बुद्धेरिति**—अस्य **भ्रमत्वायोगादित्यनेन** सम्बन्धः, चेतनोऽहं करोमीति बुद्धिर्यदि चैतन्यांशे भ्रमात्मिका स्यात् तदा कर्तरि महत्तत्त्वे चैतन्यस्यारोपोपपत्तयेऽन्य-श्चेतनः स्वीकरणीयः स्यात्, क्वचित् प्रमितमेवान्यत्रारोप्यते नाप्रमितमिति नियमात्, बाधके सति भ्रमत्वं भवति नान्यथा, न च कर्तरि चैतन्यस्य किञ्चिद् बाधकं समस्तीति य एव कर्ता स एव चेतन इति चैतन्य-कृत्यादिधर्मवत्त्येव बुद्धिः स्वीकरणीया, एवं च परमते य एव चेतनः कर्ता च तस्यैवात्मेति सञ्ज्ञेत्यात्मशब्दसंशब्दिते पुरुषे बुद्धिरिति नामान्तर, न तु तदन्यतत्त्वान्तरं बुद्धिशब्दवाच्यमित्यर्थ। ननु बुद्धौ कर्तृतयाऽभ्युपगताया चैतन्यस्य बाधकमस्त्येवा-नुमानं प्रमाणमित्याशङ्कते—**अथेति**। **तन्तुवदिति**—यथा तन्तुः पटरूपेण परिणमत इति परिणामित्वात् तन्तुरचेतनस्तथा बुद्धिरहङ्काररूपेण परिणमत इति परिणामित्वाद् बुद्धिरचेतनेत्यर्थ.। परिणामित्वादचैतन्यवदकर्तृत्वमपि साधयितुं शक्यते, तत्रापि तन्तुवदिति दृष्टान्तोद्भावनस्य कर्तुं शक्यत्वादिति प्रतिवन्द्या समाधत्ते—**तर्हीति**। **तत एव** परिणामित्वादेव। **तद्वत्** तन्तुवत्। अन्यदप्यनिष्टमेवं साधयतः साङ्ख्यस्य प्रसज्यत इत्याह—**न धर्माऽधर्मादिमतीति**—घटो यथा जन्यत्वान्न धर्माऽधर्मादिमान् तथा बुद्धिरपि जन्यत्वान्न धर्माऽधर्मादिमतीत्यर्थः। सांख्य आह—**न स्यादिति**—जन्यत्व-हेतुना बुद्धौ धर्माधर्माद्यभावसाधनं न भवेदित्यर्थः। तत्र हेतुमाह—**अनुकूलेति**—बुद्धौ जन्यत्वमप्यस्तु धर्माधर्मादिमत्त्व-मप्यस्त्विति व्यभिचारशङ्कानिवर्तकतर्काभावादित्यर्थः। यदि व्यभिचारशङ्कानिवर्तकतर्काभावात् संदिग्धव्यभिचारोऽप्रयोजको वा जन्यत्वहेतुर्न बुद्धौ धर्माधर्मादिमत्त्वाभावसाधनाय प्रगल्भते तर्हि परिणामित्वमपि हेतुरनुकूलतर्काभावात् संदिग्धव्यभि-चारोऽप्रयोजको वा न चैतन्याभावसाधने समर्थ.। तत्रापि परिणामित्वमस्तु चेतनत्वमप्यस्त्वित्येवं व्यभिचारस्य शङ्कितुं शक्य-

इत्यादिकमपि स्यात्, न स्याद् अनुकूलतर्काभावादिति चेत् ? तुल्यमुभयत्र । किञ्च, यदि बुद्धिर्नित्या तदा बुद्धिकृतभोगावच्छेदस्य सर्वदाऽऽत्मनः सत्त्वादनिर्मोक्षापत्तिः, यद्यनित्या तर्हि जन्येतरस्यानित्यत्वायोग्यत्वात् जन्या वाच्या, तथा च तदुत्पत्तेः प्राक् तदाश्रितस्य धर्मादेरप्यभावे बुद्धितत्त्वस्यानुत्पत्तौ नियतशरीरेन्द्रियादेरप्यभावेऽसंसारः स्यादिति न किञ्चिदेतद्' इत्याहुः ॥ १११ ॥

अत्र वेदान्त-साङ्ख्यदर्शनयोः शुद्धा-ऽशुद्धद्रव्यार्थिकप्रकृतिकत्वं यदुक्तं तत्राविशेषदृष्ट्या भेदबीजाभावमाशङ्कते—

**यद्यप्येतन्मतेऽप्यात्मा, निर्लेपो निर्गुणो विभुः ।**
**अध्यासाद् व्यवहारश्च, ब्रह्मवादेऽपि सम्मतः ॥ ११२ ॥**

**नयामृत०**—यद्यपीत्यादि । यद्यपि एतन्मतेऽपि– साङ्ख्यमतेऽपि, आत्मा निर्लेपः– कर्तृत्वादिलेपरहितः, निर्गुणः– गुणस्पर्शशून्यः, विभुः– व्यापकश्चेति शुद्धात्माभ्युपगमेन उभयत्र शुद्धितौल्यम्, न च भोक्तृत्वस्योपचरितस्यात्मन्यभ्युपगमेन साङ्ख्यदर्शने वेदान्तदर्शनापेक्षया अशुद्धत्वम्, यतोऽध्यासाद् व्यवहारो ब्रह्मवादेऽपि सम्मतः– ब्रह्मवादिनोऽपि हि बुद्धिगुणान् ज्ञानादीन् आत्मनि कल्पितानेवाभ्यु-

---

त्वादिति समाधत्ते– **तुल्यमुभयत्रेति** । विकल्पजर्जरिता च साङ्ख्याभिमता बुद्धिरित्याह– **किञ्चेति** । बुद्धेर्नित्यत्वे पुरुषस्यानिर्मोक्षापत्तिमुपदर्श्य तस्या अनित्यत्व दूषयति– **यद्यनित्येति** बुद्धिरित्यनुवर्तते । **जन्या वाच्येति**– बुद्धिर्जन्या भावत्वे सत्यनित्यत्वाद् घटवदित्यनुमानमत्र बोध्यम् । भवतु जन्यत्वं बुद्धे. का नो हानिरित्यत आह– **तथा चेति**– बुद्धेर्जन्यत्वे चेत्यर्थ· । **तदुत्पत्तेः प्राक्** बुद्धयुत्पत्तेः प्राक्काले । **तदाश्रितस्य** बुद्ध्याश्रितस्य । **धर्मादेरभाव** इति– नहि धर्मा धर्मिणमन्तरेणावतिष्ठन्ते इति बुद्धिरूपधर्म्यभावकाले बुद्ध्याश्रितानां धर्माधर्मादिधर्माणामभावो न्यायप्राप्त एवेति । **बुद्धितत्त्वस्यानुत्पत्ताविति**– धर्माधर्मादीनां बुद्ध्युत्पत्तिं प्रति कारणत्वमवश्यमुपेयम्, अन्यथा मुक्तात्मानमधिकृत्यापि बुद्ध्युत्पत्तिः स्यात्, तथा च मुक्तस्यापि पुनः ससारः स्यात्, एव च बुद्ध्युत्पत्तितः प्राक् तत्कारणस्य धर्मादेरभावे बुद्धितत्त्वस्यानुत्पत्तावित्यर्थः । **नियतशरीरेन्द्रियादेरप्यभाव** इति—

" ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥१॥ "[ ]

इति सात्त्विकबुद्धिसम्बन्धादूर्ध्वलोके देवादिशरीराद्युत्पत्ति., राजसबुद्धिसम्बन्धान्मध्यलोके मनुष्यादिशरीराद्युत्पत्तिः, तामसबुद्धिसम्बन्धादधोलोके नारकीयशरीराद्युत्पत्तिरित्येव योनिनियतशरीरेन्द्रियादिकस्यापि बुद्धितत्त्वानुत्पत्तौ बुद्धिरूप· कारणाभावादभाव इत्यर्थः । **असंसारः स्यात्** बुद्धितत्त्वसम्बन्धप्रयुक्तनियतशरीरेन्द्रियादिजन्येष्टानिष्टभोक्तृत्वलक्षणबन्ध एव संसारः, स कारणाभावान्न स्यात् । साङ्ख्यमतखण्डनमुपसंहरति– **इतीति** । **न किञ्चित्** किञ्चित् तत्त्वनिरूपणसमर्थं न । **एतत्** साङ्ख्यमतम् ॥ १११ ॥

द्वादशोत्तरशततमपद्यमवतारयति– **अत्रेति** । **वेदान्तेति**– शुद्धद्रव्यार्थिकसङ्ग्रहनयप्रकृतिकत्वं वेदान्तदर्शनस्य अशुद्धद्रव्यार्थिकव्यवहारनयप्रकृतिकत्वं साङ्ख्यदर्शनस्यास्मिन् ग्रन्थे यत् प्रागुपदर्शितं तत्र वेदान्त साङ्ख्यदर्शनयोरविशेषदृष्ट्या विशेषो नास्तीति बुद्ध्या भेदबीजाभावं वेदान्तदर्शनं शुद्धद्रव्यार्थिकप्रकृतिक साङ्ख्यदर्शममशुद्धद्रव्यार्थिकमित्येव भेदस्य कारणाभावमाशङ्कते इत्यर्थः, विवृणोति– **यद्यपीत्यादीति**– **तथाप्युपनिषद्दृष्टीत्यादिपञ्चदशोत्तरशततमपद्यस्य** तथापीत्यपेक्षो **यद्यपीति** । **एतन्मतेऽपीत्यस्य** विवरण– **साङ्ख्यमतेऽपीति** । **निर्लेप** इत्यस्य– **कर्तृत्वादिलेपरहित** इति विवरणम्, एवमग्रेऽपि । **इति शुद्धात्माभ्युपगमेन** एव प्रकारेण शुद्धात्मन साङ्ख्यमतेऽप्यभ्युपगमेन । **उभयत्र** वेदान्त-साङ्ख्यदर्शनयो. **शुद्धितौल्यं** समानैव शुद्धिः । साङ्ख्यदर्शनेऽशुद्धत्वमाशङ्क्य प्रतिक्षिपति– **न चेति** । निषेधहेतूपदर्शनमुत्तरार्द्धमित्याह– **यत** इति । ब्रह्मवादे वेदान्तदर्शनेऽध्यासाद् व्यवहारमेवोपपादयति– **ब्रह्मवादिनोऽपीति**–

पयन्ति न पारमार्थिकान्, इति नायमपि प्रकार उभयोः शुद्ध्य( द्धि )विशेषाय ॥ ११२ ॥

**प्रत्युतात्मनि कर्तृत्वं, साङ्ख्यानां प्रातिभासिकम् ।**
**वेदान्तिनां च निर्वाच्यं, मतं तद् व्यवहारिकम् ॥ ११३ ॥**

**नयामृत०—**प्रत्युत इति । प्रत्युतेति वैपरीत्ये, साङ्ख्यानां मते कर्तृत्वम्, उपलक्षणाद् भोक्तृत्वादि च, प्रातिभासिकं- अन्यस्थमेवान्यत्रारोपितम्, वेदान्तिनां तु मते नान्तःकरणधर्माणां कर्तृत्वादीनां कर्तव्यम्, तच्च परमार्थतोऽसदपि व्यवहारतः सदिति स्थूलव्यवहारानुरोधाद् वेदान्तदर्शन एवाशुद्धत्वं स्यात्, अविद्ययाऽपि अन्यधर्ममात्मन्यस्पर्श[ यदु ]पचारेण च व्यवहारबलं कुण्ठमतिनिश्चलबलं चोत्तेजयतीति साङ्ख्यदर्शने एव शुद्धत्वं स्यादिति भावः ॥ ११३ ॥

किञ्च, सत्कार्यवादित्वादपि साङ्ख्यस्य न व्यवहारानुरोधित्वम्, व्यवहारनयो हि कारणव्यापारानन्तरमेव कार्योत्पत्तिं पश्यन्नसत्कार्यपक्षमेवाश्रयते, न च क्षणिकासत्कार्यानभ्युपगममात्रेणास्य

---

अस्य 'अभ्युपयन्ति' इत्यनेनान्वयः । **अयम्** अभोक्तृत्वस्येत्याशङ्काग्रन्थोपदर्शितोऽपि । **उभयोः** वेदान्त-साङ्ख्यदर्शनयोः । "**शुद्ध्या(द्धि)विशेषाय**" इत्यस्य स्थाने "शुद्ध्यशुद्धिविशेषाय" इति पाठो भवितुमर्हति ॥ ११२ ॥

शुद्धद्रव्यार्थिकप्रकृतिकत्वाच्छुद्धत्वं वेदान्तदर्शने, अशुद्धद्रव्यार्थिकप्रकृतिकत्वादशुद्धत्व साङ्ख्यदर्शने इति यद् भवतोऽनुमतं तन्न समीचीनं यत आत्मनि प्रातिभासिकं कर्तृत्वं न तु व्यावहारिकमित्यभ्युपगन्तृसाङ्ख्यदर्शनस्यैव शुद्धत्वम्, व्यावहारिकं कर्तृत्वमात्मन इत्यभ्युपगन्तृवेदान्तदर्शनस्यैवाशुद्धत्वमित्यावेदक त्रयोदशोत्तरशततमपद्यं विवृणोति- **प्रत्युतेती**ति । प्रत्युतशब्दोऽत्र वैपरीत्ये वर्तत इत्याह- **प्रत्युतेति** । वैपरीत्योपदर्शकमात्मनीत्यादिकं विवृणोति- **साङ्ख्यानामिति** । **मते** इति पूरणम् । मूलस्थ कर्तृत्वं भोक्तृत्वादिकमुपलक्षयतीत्याह- **उपलक्षणाद् भोक्तृत्वादि चेति** । **प्रातिभासिक**मित्यस्य विवरणम्- **अन्यस्थमेवान्यत्रारोपितमिति**- प्रकृते अन्यत्र बुद्धौ स्थितं कर्तृत्वभोक्तृत्वादिकमन्यत्रात्मन्यारोपितमिति प्रातिभासिकं तदित्यर्थः । मूले "**वेदान्तिनां च निर्वाच्यं मतं तद् व्यवहारिकम्**" इत्यस्य स्थाने "वेदान्तिना त्वनिर्वाच्यं मतं तद् व्यावहारिकम्" इति पाठः सम्यग् । तद्विवरणं- **वेदान्तिनां त्विति** । **मते** इति पूरितम् । "**कर्तव्यम्, तच्च**" इत्यस्य स्थाने "आत्मन्यारोपः, किन्त्वनिर्वाच्यमात्मनि कर्तृत्वादिकम्, तच्च" इति पाठः सम्यक्, तच्च अनिर्वाच्यं कर्तृत्वादिकं च । "**अविद्ययाऽपि**" इत्यस्य स्थाने "अविद्यापि" इति पाठः सम्यग्, अस्य **अस्पर्शयन्ती**त्यनेन **कुण्ठयती**त्यनेन **उत्तेजयती**त्यनेन चान्वयः, "**अन्यधर्ममात्मन्यस्पर्श(यदु)पचारेण**" इति स्थाने "अन्यधर्ममात्मन्यस्पर्शयन्ती, उपचारेण" इति पाठः सम्यक्, **अन्यधर्मं** बुद्धिधर्मं कर्तृत्वादिकम्, **आत्मन्यस्पर्शयन्ती** आत्मनि सम्बद्धमकुर्वती सती, "**कुण्ठमतिनिश्चय**" इत्यस्य स्थाने "कुण्ठयति निश्चय" इति पाठः सम्यक्, आत्मनि कर्तृत्वादिकमौपचारिकमेवेति कृत्वोपचारत एवात्मनि कर्तृत्वादिव्यवहार इति व्यवहारबलं कुण्ठयति- वस्तुसाधनासमर्थं करोति, यो यत्र कर्मण्यसमर्थः स तत्र कुण्ठ इत्युच्यते, निश्चयतश्च नात्मनि कर्तृत्वादिकमिति निश्चयबलमुत्तेजयति- पुष्णाति । **इति** एतस्मात् कारणाद् व्यवहारानुरोधिवेदान्तदर्शनतो निश्चयानुरोधिनि साङ्ख्यदर्शन एवोपचारानाश्रयणाच्छुद्धत्व स्यादित्युक्तपद्यभावार्थ इत्यर्थः ॥ ११३ ॥

चतुर्दशोत्तरशततमपद्यमवतारयति- **किञ्चेति**- साङ्ख्यस्य सत्कार्यवादित्वं च- "असदकरणादुपादानग्रहणात् सर्वसम्भवात् । शक्तस्य शक्यकरणात् कारणाभावाच्च सत् कार्यम् ॥" [ साङ्ख्यकारिका ] इतीश्वरकृष्णकारिकया व्यवस्थापितम् । साङ्ख्यस्य सत्कार्यवादित्वेऽपि कथ न व्यवहानुरोधित्वमित्यपेक्षायामाह- **व्यवहारनय** इति- अस्य **पश्यन्नि**त्यनेन **आश्रयते** इत्यनेन चान्वयः । ननु व्यवहारोऽपि क्षणिकासत्कार्यवादमृजुसूत्रनयाभिप्रेत नाभ्युपगच्छति साङ्ख्योऽपि च तं नाभ्युपैतीत्येतावता साङ्ख्यस्य व्यवहारानुरोधित्वमित्याशङ्क्य प्रतिक्षिपति- **न चेति** । **अस्य** साङ्ख्यस्य । निषेधहेतुमुपदर्शयति- **तदनभ्युपगमेति**- साङ्ख्यस्य क्षणिकासत्कार्यानभ्युपगमेऽपीत्यर्थः । **उत्पत्त्यनभ्युपगमेन** स्वाधिकरण

व्यवहारपक्षपाति( त्वम् ), तदनभ्युपगमेऽप्युत्पत्त्यनभ्युपगमेन व्यवहारबहिर्भावादित्यभिप्रायं स्पष्टीकरणपूर्वकं निगमयन्नाह—

**अनुत्पन्नत्वपक्षश्च, निर्युक्तौ नैगमे श्रुतः ।**
**नेति वेदान्ति-साङ्ख्योक्त्योः, सङ्ग्रह-व्यवहारता ॥ ११४ ॥**

**नयामृत०—**अनुत्पन्नेत्यादि । अनुत्पन्नत्वपक्षश्च निर्युक्तौ–नमस्कारनिर्युक्तौ, नैगमे– नैगमनये श्रुतः, " उप्पन्नाणुपन्नो इत्थ णयाऽऽइनिगमस्साणुप्पन्नो । सेसाणं उप्पन्नो " [ ] इति वचनात् । तथा चानुत्पत्तिवादी साङ्ख्यो नैगमनयमेवोपजीवेत्, व्यवहारिकोत्पत्तिवादी वेदान्ती च व्यवहारनयमिति भावः, इति– हेतोर्वेदान्तिसाङ्ख्योक्त्योः– तद्दर्शनयोः, सङ्ग्रह-व्यवहारता– सङ्ग्रह-व्यवहाराख्यशुद्धा-ऽशुद्धद्रव्यार्थिकप्रकृतिकता न भवति, तथा च सम्माते तथोक्तेः का गतिरिति भावः ॥ ११४ ॥

समाधत्ते तथापीति द्वयेन—

**तथाप्युपनिषद् दृष्टिसृष्टिवादात्मिका परा ।**
**तस्यां स्वप्नोपमे विश्वे, व्यवहारलवोऽपि न ॥ ११५ ॥**
**साङ्ख्यशास्त्रे च नानात्मव्यवस्था व्यवहारकृत् ।**
**इत्येतावत् पुरस्कृत्य विवेकः सम्मतावयम् ॥ ११६ ॥**

**नयामृत०—**तथापीति । तथापि उपनिषद्– वेदान्तदर्शनप्रवृत्तिः, दृष्टिसृष्टिवादात्मिका परा– उत्कृष्टा, मूलाभियुक्ताभ्युपगतत्वात्, तस्यां चाज्ञातसत्त्वाभावेन स्वप्नोपमे विश्वे– जगति सति व्यवहार-

क्षणध्वंसानधिकरणलक्षणसम्बन्धात्मकप्रथमक्षणसम्बन्धरूपाया उत्पत्तेरनभ्युपगमेन । **व्यवहारबहिर्भावात्** प्रथमक्षणसम्बन्धरूपोत्पत्त्यभ्युपगन्तृव्यवहारनयाद् बहिर्भूतत्वात् । **इत्यभिप्रायम्** इत्याकारकाशयम् । **स्पष्टीकरणपूर्वकं** स्पष्टावेदनपुरस्सरम् । विवृणोति– **अनुत्पन्नेत्यादीति** । **निर्युक्तावित्यस्य** स्पष्टीकरण– **नमस्कारनिर्युक्ताविति**– वेन निर्युक्तिग्रन्थबहुप्रकरणकत्वेन तत्र कुत्रोक्तमिति जिज्ञासाया नोन्मेषः । ' नैगमेऽनुत्पन्नत्वपक्ष ' इत्यस्य प्रतिपादकं नमस्कारनिर्युक्तिवचनमुट्टङ्कयति– **उत्पन्न०** इति–" उत्पन्नानुत्पन्नोऽत्र नय आदिनिगमस्यानुत्पन्नः । शेषाणामुत्पन्नः " इति संस्कृतम् । **तथा च** नैगमनयस्यानुत्पन्नत्वपक्ष इति व्यवस्थितौ च । **व्यवहारनयमित्यनन्तरमुपजीवेदित्यस्यानुवृत्तिः** । मूले इतिशब्दो हेतुपर इत्याशयेनाह– **इति हेतोरिति**– एतस्मात् कारणादित्यर्थः । **वेदान्ति-साङ्ख्ययोरित्यस्य** विवरणम्– **तद्दर्शनयोरिति**– वेदान्त साङ्ख्यदर्शनयोरित्यर्थः । **सङ्ग्रह-व्यहारतेत्यस्य** विवरणम्– **सङ्ग्रह-व्यवहाराख्यशुद्धाशुद्धद्रव्यार्थिकप्रकृतिकतेति** । नेति मूलं **भवतीति** क्रिया ' यत्रान्यत् क्रियावाचि पदं न श्रूयते० ' इत्यादिवचनप्रामाण्यादुपात्ता । **तथा च** वेदान्त-साङ्ख्यदर्शनयोः शुद्धाशुद्धद्रव्यार्थिकप्रकृतिकत्वाभावव्यवस्थितौ च । " **सम्माते** " इति मुद्रणदोषात्, अत्र " सम्मतौ " इति पाठः समुचितः, तस्य सम्मतिग्रन्थे इत्यर्थः । **तथोक्तेः** वेदान्ति-साङ्ख्यदर्शनयोः शुद्धाशुद्धद्रव्यार्थिकप्रकृतिकत्वकथनस्य, तथा च सम्मतिग्रन्थस्य तत्प्रतिपादकवचनमसङ्गतमिति । **इति भावः** प्रश्नयितुरेवमाशयः ॥११४॥

पद्यद्वयं युगपदेवावतारयति– **समाधत्ते तथापीति द्वयेनेति**– **तथापीत्यादि**पद्यद्वयेनोक्तां शङ्कां समाधत्ते– निराकरोतीत्यर्थः । विवृणोति– **तथापीतीति**– एवं सत्यपीत्यर्थः । उपनिषदित्यस्य विवरणं– **वेदान्तदर्शनप्रवृत्तिरिति** । **परेत्यस्य** विवरणम्– **उत्कृष्टेति** । दृष्टसृष्टिवादात्मिकैव वेदान्तदर्शनप्रवृत्तिरुत्कृष्टेत्यत्र हेतुमाह– **मूलाभियुक्तेति**– वेदान्त-

लवोऽपि- लेशोऽपि नास्ति, तन्मते जाग्रद्व्यवहारस्य स्वप्नव्यवहारतुल्यत्वात्, तथा च मौलस्य वेदान्तदर्शनस्य व्यवहारापेतत्वेन व्यवहारप्रकृतिता, किन्त्वेकात्मसङ्ग्रहप्रवणतया सङ्ग्रहप्रकृतितैव, आकाशोदकपातकल्पमूलदर्शनप्रवृत्तावेव चेयं नयप्रकृतिचिन्ता, इति नार्वाचीनवेदान्तिनां मिथोविरुद्धकल्पनाकोटिक्लेशपराहतानां व्यवहाराभाससमर्थनेनापि प्रतिश्रुतव्याहतिरिति हृदयम् ॥

साङ्ख्येति । साङ्ख्यशास्त्रे च नानात्मनां व्यवस्था प्रतिनियतजन्ममरणादिव्यवहारकृद् भवति, इत्येतावत् पुरस्कृत्य- तात्पर्यविषयीकृत्यायं विवेकः सम्मतौ, यदुत- व्यवहारप्रकृतिकं साङ्ख्यदर्शनं सङ्ग्रहप्रकृतिकं च वेदान्तदर्शनमिति, वेदान्तप्रकृतिभूतसङ्ग्रहनयेनैकतया विषयीकृतस्यात्मनः भेदकरणेन सङ्ग्रहविषयभेदकत्वलक्षणसमन्वयाद् व्यवहारप्रकृतिकत्वं साङ्ख्यदर्शनस्य विवक्षितमिति तात्पर्यम्, तेन सत्का-

---

दर्शनप्रवर्तकैरपीदंदृष्टिसृष्टिवादस्यैवाभ्युपगतत्वादित्यर्थः । तस्यां च दृष्टिसृष्टिवादात्मकवेदान्तदर्शनप्रवृत्तौ तु, प्रपञ्चमात्रस्य ज्ञातसत्त्वमुपेयत इत्येतस्मात् कारणाद् अज्ञातसत्त्वाभावेन स्वप्नोपमे स्वप्नसदृशे, स्वप्ने दृश्यमानं वस्तु तत्कालीनमेवेति ज्ञातसद् यथा तथा जगदपि यदैव ज्ञायते तदैव सत् नान्यदेति, विश्वे इत्यस्य विवरणं- जगतीति, सतिसप्तमीयमित्यावेदनाय सतीति । "लेशोऽपि" इत्यस्य स्थाने "व्यवहारलेशोऽपि" इति पाठः सम्यग्, व्यवहारलवोऽपीत्यस्य विवरणं- व्यवहारलेशोऽपीति । अत्र हेतुमाह- तन्मत इति- दृष्टिसृष्टिवादिमत इत्यर्थः, जाग्रद्व्यवहारस्य स्वप्नव्यवहारतुल्यत्वेन स्वप्नव्यवहारो यथा मिथ्या तथा जाग्रद्व्यवहारोऽपि मिथ्यैवेति भावः । तथा च वेदान्तदर्शनप्रवृत्तेर्दृष्टिसृष्टिवादात्मकत्वव्यवस्थितौ च । मौलस्य मूलाभियुक्ताभ्युपगतस्य । वेदान्तदर्शनस्य दृष्टिसृष्टिवादात्मकवेदान्तदर्शनस्य । व्यवहारापेतत्वेन व्यवहाररहितत्वेन, "व्यवहारप्रकृतिता" इत्यस्य स्थाने "न व्यवहारप्रकृतिता" इति पाठः समुचितः । यदि वेदान्तदर्शनस्य न व्यवहारप्रकृतिकत्वं तर्हि किंप्रकृतिकत्वमिति पृच्छति- किन्त्विति । उत्तरयति- एकात्मेति- एकस्मिन्नात्मनि तत्स्वरूपतो जगत एव सङ्ग्रहस्य प्रवणतया वेदान्तदर्शनस्य सङ्ग्रहप्रकृतितैवेत्यर्थः । उक्तपद्याभिप्रायमुपदर्शयति- आकाशोदकपातेति- आकाशादुदकस्य यत् पतनं तद् यदैव दृश्यते तदैव समस्ति तद्वद् जगदपि यदैव दृश्यते तदैवास्तीत्येवमभ्युपगमप्रवणं मूलदर्शनं दृष्टिसृष्टिवादात्मकवेदान्तदर्शनमाकाशोदकपातकल्पमूलदर्शनं तस्य प्रवृत्तावेव, एवकारेण दृष्टिसृष्टिवादभिन्नवेदान्तदर्शनप्रवृत्तिव्यवच्छेदः । इयं नयप्रकृतिचिन्ता वेदान्तदर्शनं शुद्धद्रव्यार्थिकनयप्रकृतिकं साङ्ख्यदर्शनमशुद्धद्रव्यार्थिकनयप्रकृतिकमित्येवं नयविचारणा । इति एतस्मात् कारणात्, नञः प्रतिश्रुतव्याहतिरित्यनेनान्वयः । अर्वाचीनवेदान्तिनां नवीनवेदान्तिनाम्, एषामेव विशेषणं- मिथोविरुद्धकल्पनाकोटिक्लेशपराहतानामिति- एको वेदान्ती यथा कल्पयति, अन्यो वेदान्ती तत्कल्पनाविरुद्धामेव कल्पनां पूत्करोतीत्येवं मिथोविरुद्धकल्पनाना या कोटि:- कोटिपदमत्रापरिमितसङ्ख्यापरं, तथा चापरिमितसङ्ख्यकमिथोविरुद्धकल्पनात्मकक्लेशपराहतानामित्यर्थः, उक्तविशेषणशालिना नव्यवेदान्तिनां यद् व्यवहाराभासस्य समर्थनं तेनापि, प्रतिश्रुतस्य- प्रतिज्ञातस्य वेदान्तदर्शने शुद्धद्रव्यार्थिकनयप्रकृतिकत्वस्य, व्याहति – भङ्गो नेत्येतादृशं हृदयं- रहस्यमित्यर्थः ॥ ११५ ॥

षोडशोत्तरशततमपद्यं विवृणोति- साङ्ख्येतीति । व्यवहारकृदित्यस्य विवरणं- प्रतिनियतजन्ममरणादिव्यवहारकृद् भवतीति- नानात्मना स्वीकारादेव केषाञ्चिन्नरके जन्म, केषाञ्चिद् देवगतौ जन्म, केषाञ्चित् तिर्यग्गतौ जन्म, एकस्य यदा जन्म तदाऽपरस्य कस्यचिन्मरणम्, एकोऽमुकशास्त्रज्ञाताऽपरस्तदन्यशास्त्रप्रवीणोऽन्यः सर्वशास्त्रनिपुणः कश्चित् किञ्चिज्ज्ञः, कश्चिद् बद्धः कश्चिन्मुक्त इत्येवं प्रतिनियतजन्ममरणादिव्यवहारो भवतीति नानात्मव्यवस्था व्यवहारकृदित्यर्थः । इत्येतावत् एतावन्मात्रम् । पुरस्कृत्येत्यस्य विवरणं तात्पर्यविषयीकृत्येति । अयं विवेकः सम्मतावित्यस्य फलितार्थमाह- यदुतेति । निरुक्तपद्यभावार्थमावेदयति- वेदान्तेति- वेदान्तदर्शनस्य प्रकृतिभूतो यः शुद्धद्रव्यार्थिकः सङ्ग्रहनयस्तेनैकतया विषयीकृतस्यात्मनो यद् भेदकरणम्- एको बद्धोऽपरो मुक्त इत्येवं विभजनं नानात्माभ्युपगमनमिति यावत्, तेन सङ्ग्रहविषयभेदकत्वं यद् व्यवहारनयस्य लक्षणं तस्य समन्वयात्- साङ्ख्यदर्शने घटनात्, साङ्ख्यदर्शनस्य व्यवहारनयप्रकृतिकत्वं सम्मतिकर्त्रा विवक्षितमिति तात्पर्यम्- अभिप्राय इत्यर्थः । तेन उक्तदिशा साङ्ख्यदर्शने व्यवहार-

यद्यंशे व्यवहारप्रकृतित्वाभावेऽपि न क्षतिः, आत्मन एव सकलशास्त्रप्रयोजनभागित्वेन मुख्यत्वान्मुख्योद्देशेनैव च नयानां प्रकृतिविकृतिचिन्ताया युक्तत्वादिति भावः ॥ ११५-११६ ॥

यद्येवं सङ्ग्रह-व्यवहारौ वेदान्त-साङ्ख्यदर्शनप्रवर्तकौ, नैगमनयस्तर्हि कस्य दर्शनस्य प्रवर्तक इति जिज्ञासायामाह—

**हेतुर्मतस्य कस्यापि शुद्धाशुद्धो न नैगमः ।**
**अन्तर्भावो यतस्तस्य सङ्ग्रह-व्यवहारयोः ॥ ११७ ॥**

**नयामृत०**—हेतुरिति। सामान्य-विशेषाद्युभयग्राहित्वेन शुद्धाशुद्धो नैगमनयः कस्यापि मतस्य-दर्शनस्य, न हेतुः- न प्रकृतिः, यतः सामान्यग्रहाय प्रवृत्तस्य सङ्ग्रह एव, विशेषग्रहाय च प्रवृत्तस्य व्यवहार एवान्तर्भाव इति तदुभयभिन्नं स्वात्मानमेवालभमानस्य न भिन्नदर्शनप्रकृतिकत्वमभिधातुं युज्यत इति ॥ ११७ ॥

कुतस्तर्हि वैशेषिकदर्शनमुत्पन्नं कथं वा तन्न सम्यगित्याकाङ्क्षायामाह—

**द्वाभ्यां नयाभ्यामुन्नीतमपि शास्त्रं कणाशिना ।**
**अन्योऽन्यनिरपेक्षत्वान्मिथ्यात्वं स्वमताग्रहात् ॥ ११८ ॥**

**नयामृत०**—द्वाभ्यामिति। द्वाभ्यां- सामान्य-विशेषग्राहिभ्यां सङ्ग्रह-व्यवहाराभ्यां नयाभ्याम्, उन्नीतं- पृथग् व्यवस्थापितमपि, कणाशिना- कणादमुनिना, शास्त्रम्, अन्योऽन्यनिरपेक्षत्वात्- परस्पर-द्वयावलम्बनमेव शास्त्रस्य सम्यक्त्वप्रयोजकम्, किन्तु यथास्थाने तद्विनियोगः, स च स्वप्रयुक्तभङ्ग-विविक्तद्रव्य-पर्यायोभयावगाहित्वात्, स्वमताग्रहात्- स्वकल्पनाभिनिवेशात्, मिथ्यात्वम्, नहि नय-

---

नयप्रकृतिकत्वस्याभ्युपगमेन, अस्य न क्षतिरित्यनेनान्वयः, कथमेवमपि न क्षतिरित्यपेक्षायामाह- आत्मन एवेति अस्य मुख्यत्वादित्यनेनान्वयः, अन्यत् स्पष्टम् ॥ ११६ ॥

सप्तदशोत्तरशततमपद्यमवतारयति- यद्येवमिति। विवृणोति- हेतुरितीति। "सामान्य-विशेषाद्युभयग्राहित्वेन" इत्यस्य स्थाने "सामान्यविशेषोभयग्राहित्वेन" इति पाठः सम्यग्, नैगमो यदि सामान्यमेव गृह्णीयाद् विशेषमेव वा गृह्णीयात् तर्हि शुद्धः स्यात् न चैवम्, किन्तु सामान्यमपि गृह्णाति विशेषमपि गृह्णातीत्येव सामान्यविशेषोभयग्राहित्वेनेत्यर्थः। मतस्येत्यस्य विवरणं दर्शनस्येति। न हेतुरित्यस्य विवरणं-न प्रकृतिरिति। अत्रोत्तरार्द्धोक्त हेतुं विवृणोति- यत इति- एतदनन्तरं तस्येति दृश्यम्, तस्य- नैगमस्य। कथमेकस्य तस्य सङ्ग्रहेऽन्तर्भावो व्यवहारे चाऽन्तर्भाव इत्यपेक्षायामाह- सामान्यग्रहायेति। एवं च सङ्ग्रह-व्यवहारभिन्नो नैगमनयो नास्ति कस्य भिन्नदर्शनहेतुत्वमित्याह- तदुभयभिन्नमिति-सङ्ग्रह-व्यवहारान्यतरभिन्नमित्यर्थः, तेनोभयभेदस्य केवलान्वयित्वेऽपि न क्षति.। स्वात्मानमेव नैगमनयस्वरूपमेव। अलभमानस्य अप्राप्नुवतो नैगमनयस्य। "भिन्नदर्शनप्रकृतिकत्व" इत्यस्य स्थाने "भिन्नदर्शनप्रकृतित्व" इति पाठो युक्तः, भिन्नदर्शनकारणत्वं वक्तु न घटत इत्यर्थः ॥ ११७ ॥

अष्टादशोत्तरशततमपद्यमवतारयति- कुत इति- कस्मान्नयादित्यर्थः, अस्य 'उत्पन्नम्' इत्यनेनान्वय.। कथं वा कस्मात् कारणाद् वा। तन्न सम्यग् वैशेषिकदर्शनं न समीचीनम्। विवृणोति- द्वाभ्यामिति। द्वाभ्यामित्यस्य विवरण- सामान्य-विशेषग्राहिभ्यां सङ्ग्रह-व्यवहाराभ्यामिति। उन्नीतमित्यस्य विवरण-पृथग् व्यवस्थापितमिति। कणाशिनेत्यस्य विवरण- कणादमुनिनेति। कथ कणादमुनिप्रणीत वैशेषिकदर्शनाख्यं शास्त्र मिथ्यात्व मित्यपेक्षायां हेतूपदर्शकमुत्तरार्द्धं विवृणोति- अन्योऽन्यनिरपेक्षत्वादिति। अन्योऽन्यनिरपेक्षत्वं सामान्य-विशेषात्मकार्थयोरेव न तु तत्प्रतिपादकशास्त्रस्येत्यतस्तद्विवरणं- परस्परविविक्तद्रव्य-पर्यायोभयावगाहित्वादिति- शास्त्रजन्य-

द्वयेतरयावद्भङ्गानां स्याद्वादलाञ्छितानां परस्परसाकाङ्क्षाणां तात्पर्यविषयतया सम्पद्यते, एकतरस्याप्य-तात्पर्ये सिद्धान्तविराधनाया अपरिहारात्, तदाह—

" जे वयणिज्जविअप्पा संजुज्जन्तेसु होन्ति एएसु ।
सा ससमयपन्नवणा सिद्धन्तविराहणा अण्णा ( तित्थयरासायणा अण्णा ) ॥ "

[ सम्मतिप्र० का० गा० ५३ ]

तदिह सामान्य-विशेषयोगः कुतस्तरामन्येषां भङ्गानामिति स्फुटमेव मिथ्यात्वम्, अतिरिक्त-सामान्यविशेषापेक्षां विना महासामान्य-ऽन्त्यविशेषयोरिव वस्तुमात्रस्य स्वत एव सामान्य-विशेषा-त्मकत्वमित्यर्थस्यैव यथावन्नयद्वयविनियोगरूपत्वात्, अन्यथाऽनवस्थानात्, तदिदमुक्तम्—

---

ज्ञानस्य निरुक्तोभयावगाहित्वात् तज्जनकशास्त्रस्यापि निरुक्तोभयावगाहित्वमिति बोध्यम् । **स्वमताग्रहादि**त्यस्य विवरणं-**स्वकल्पनाभिनिवेशादि**ति- कर्तुः स्वकल्पनाऽभिनिवेशः शास्त्रेऽपि तदवबोधके बोध्यः । **मिथ्यात्वं** प्रकृते मिथ्यैव मिथ्यात्वम् । ननु नयद्वयालम्बित्वाज्जैनशास्त्रं यथा सम्यक्त्वमश्वति, तथा वैशेषिकशास्त्रेऽपि नयद्वयावलम्बित्वमस्तीति कथं न तस्य सम्यक्त्वमित्यत आह- **नही**ति- अस्य **सम्यक्त्वप्रयोजक**मित्यत्रान्वयः । यदि नयद्वयालम्बनं न शास्त्रस्य सम्यक्त्वप्रयोजकं तर्हि वाच्यं तत्प्रयोजकमिति पृच्छति- **किन्त्वि**ति । उत्तरयति- **यथास्थान** इति । **तद्विनियोगः** नयद्वयविनियोगः । **स च** नयद्वयविनियोगश्च, अस्य '**सम्पद्यते**' इत्यनेनान्वयः । **स्वप्रयुक्ते**ति- भङ्गद्वयं चेतर-यावद्भङ्गाश्च भङ्गद्वयेतरयावद्भङ्गाः, स्वप्रयुक्ताश्च ते नयद्वयेतरयावद्भङ्गाश्च स्वप्रयुक्तभङ्गद्वयेतरयावद्भङ्गास्तेषां स्वप्रयुक्तभङ्गद्वयेतर-यावद्भङ्गानाम्, भङ्गद्वयस्य- स्यादस्त्येवेति स्यान्नास्त्येवेति भङ्गद्वयस्य सङ्ग्रहव्यवहारनयद्वयप्रयुक्तत्वे क्रमिकतदुभय-युगपत्तदु-भयादिसयोजनोपजातस्वरूपाणां तृतीय-चतुर्थ-पञ्चम षष्ठ-सप्तमभङ्गानामपि नयद्वयप्रयुक्तत्वमित्यावेदनायाद्य-द्वितीयभङ्गयोर्भङ्गद्वय-शब्देनाभिधानम् । कथम्भूतानां तेषामित्याकाङ्क्षायां तद्विशेषणमाह- **स्याद्वादलाञ्छितामिति, परस्परसाकाङ्क्षा-णामि**ति च । कथं सर्वेषामेव भङ्गानामुक्तविशेषणविशिष्टानां तात्पर्यविषयत्वे सत्येव सम्यक्त्वं सम्भवति नान्यथेत्यत आह- **एकतरस्यापी**ति सप्तानां निरुक्तभङ्गाना मध्यादेकस्यापि भङ्गस्येत्यर्थः। **अतात्पर्ये** तात्पर्याविषयत्वे । **सिद्धान्त-विराधनायाः** स्याद्वादराद्धान्तावहेलनाया. । **अपरिहारात्** परिहर्तुमशक्यत्वात् । उक्तार्थे सम्मतिग्रन्थस्य गाथासंवाद-माह-**तदाहे**ति। **जे०** इति- " ये वचनीयविकल्पाः संयुक्तयोर्भवन्त्यनयोः। सा स्वसमयप्रज्ञापना सिद्धान्तविराधना अन्या ॥ " इति संस्कृतम्। **तत्** तस्मात् । **इह** स्वतन्त्रसामान्य-विशेषोभयप्ररूपके वैशेषिकदर्शने । **सामान्ये**ति- सामान्ययोगः प्रथमभङ्गे विशेषयोगो द्वितीयभङ्गे इत्येव भङ्गद्वये सामान्य विशेषयोगसम्भवेऽपि तृतीयादिभङ्गानां सामान्य-विशेषयोः परस्पर-सापेक्षयो. सम्मेलनत एव सम्भवित्वेन परस्परनिरपेक्षसामान्य-विशेषयोगः कथमपि न सम्भवतीति वैशेषिकशास्त्रं स्पष्टमेव मिथ्यात्वम्. **कुतस्तरा**मित्यनेन परस्परनिरपेक्षसामान्य-विशेषयोः स्वरूपत एवाभावात् प्रथमद्वितीयभङ्गयोरपि तादृश-सामान्यविशेषयोगो न सम्भवतीत्यावेदितम् । यथा महासामान्येऽतिरिक्तसामान्यं नास्ति, अन्त्यविशेषेऽतिरिक्तविशेषो नास्ति, अथापि महासामान्यस्य स्वत एव सामान्यरूपत्वम्, अन्त्यविशेषस्य च स्वत एव विशेषरूपत्वम्, तथैव वस्तुमात्रस्यैवाति-रिक्तसामान्य-विशेषापेक्षामन्तरेणैव स्वत एवानुवृत्तिरूपत्वात् सामान्यात्मकत्व स्वत एव व्यावृत्तिरूपत्वाद् विशेषरूपमित्येवं वस्तुमात्रस्य स्वत एव सामान्य-विशेषात्मकत्वमित्येव यथावन्नयद्वयविनियोगः, स च स्याद्वाद एवेति स्याद्वादस्यैव सम्यक्त्वं न तु वैशेषिकशास्त्रस्य तद् यथोक्तनयद्वयविनियोगाभावान्मिथ्यात्वमेवेत्याशयेनाह- **अतिरिक्ते**ति । **अन्यथा** वस्तुमात्रस्य स्वतः सामान्य-विशेषानात्मकत्वस्याङ्गीकारे। **अनवस्थानादि**ति- घट-पटादौ घटोऽयं घटोऽयमित्यनुगतप्रतीत्यनुरोधेन घटत्व-सामान्यस्य पटोऽय पटोऽयमित्यनुगतप्रतीत्यनुरोधेन पटत्वसामान्यस्य, एव मठत्वादिसामान्यस्य च यथाऽतिरिक्तस्याङ्गीकारः, एवमयं घटोऽस्माद् घटाद् भिन्नः, अयं पट एतस्मात् पटाद् भिन्न इत्यादिव्यावृत्तिप्रत्ययानुरोधेनातिरिक्तस्य विशेषस्याङ्गीकारः,

स्वतोऽनुवृत्ति-व्यतिवृत्तिभाजो, भावा न भावान्तरनेयरूपाः ।
परात्मतत्त्वादतथात्मतत्त्वात्, द्वयं वदन्तोऽकुशलाः स्खलन्ति ॥"

[ अन्ययोगव्यवच्छेदद्वात्रिंशिका श्लो० ]

एतेन नैयायिकदर्शनमपि व्याख्यातम्, पदार्थप्रमाणादिभेदं विना प्रायस्तस्य वैशेषिकदर्शनसमानविषयत्वादिति दिक् ॥ ११८ ॥

ननु सङ्ग्रह-व्यवहारयोरेव विषयविवेकेन नैगमस्यान्तर्भावे तस्य पार्थक्ये किं बीजम् ? अदर्शनेऽपि किञ्चित् कल्पयाम इति चेत् ? तर्हि दृष्टं स्वतन्त्रद्रव्य-पर्यायोभयविषयत्वमेव तथास्तु, तथा च तत एव कणादमतोत्पत्तिर्युक्तेति परीक्षापूर्वमाह—

**स्वतन्त्रव्यक्ति-सामान्यग्रहायेष्टे तु नैगमे ।**
**औलूक्यसमयोत्पत्तिं ब्रूमहे तत एव हि ॥ ११९ ॥**

**नयामृत०—स्वतन्त्रेति**— स्पष्टार्थः । अत्र चार्थे प्रदर्शितन्यायेन द्रव्य-पर्यायरूपमुभयमपि परस्परविविक्तमेकत्र विद्यत इत्यभिप्रायः, "नैगमोऽशुद्धद्रव्यास्तिकप्रकृतिः" इति सम्मतिवृत्तिस्वरसोऽपीति ध्येयम् ॥ ११९ ॥

---

तथा घटत्वं सामान्यं पटत्वं सामान्यं मठत्वं सामान्यमित्येवं सामान्येष्वप्यनुगतप्रत्ययानुरोधेन सामान्यत्वसामान्यस्यातिरिक्तस्याभ्युपगमः स्यात्, एवं तत्रापीत्यनवस्थानं स्यात्, विशेषेऽपि चाय विशेष एतस्माद् विशेषाद् भिन्न इति व्यावृत्तिप्रत्ययानुरोधेन विशेषेऽप्यतिरिक्तविशेषस्तत्राप्यतिरिक्तविशेष इत्यनवस्थानं प्रसज्येतेत्यतो वस्तुन एव स्वतः सामान्यविशेषात्मकत्वमभ्युपेयमित्यर्थः, उक्तार्थे श्रीहेमचन्द्रसूरिवरवचनसंवादमाह— **तदिदमुक्तमिति** । **स्वत इति**— स्वत एवानुवृत्ति व्यावृत्तिभाजः, अनुगतप्रतीतिव्यावृत्तिप्रत्यययोर्विषयत्वाज्जनकत्वाच्च सामान्यविशेषात्मका घट-पटादयो भावा भावान्तरेण— आश्रयव्यतिरिक्तेन सामान्येन विशेषेण च नेयरूपाः— ज्ञाप्यरूपा अनुगत-व्यावृत्तिप्रतीतिविषया न, एवं च परात्मतत्त्वाद्— वस्त्वात्मकाश्रयव्यतिरिक्तसामान्य-विशेषात्मकतत्त्वात्, कथम्भूतात् ? अतथात्मतत्त्वात्— तथाऽऽत्मतत्त्व न भवतीत्यतथात्मतत्त्वं तस्मात्, वस्तुव्यतिरिक्तसामान्य-विशेषतत्त्वं न भवत्येवेत्यतः शशशृङ्गकल्पात्, द्वयम्— अनुवृत्तिव्यावृत्तिबुद्धिद्वयम्, वदन्तः— कथयन्तो वैशेषिकाः, अकुशला— तत्त्वनिरूपणासमर्थाः स्खलन्ति— वादरणभूमौ पराजयलक्षणां स्खलनां प्राप्नुवन्तीत्यर्थः, **एतेन** वैशेषिकदर्शनखण्डनेन, अस्य **व्याख्यातमि**त्यनेनान्वयः । **व्याख्यातं** खण्डिततया व्याख्यानं खण्डितं भवतीति । एकमतखण्डने तदन्यमतस्य खण्डनं कथमित्यत आह— **पदार्थप्रमाणादिभेदं विनेति**— पदार्थप्रमाणादिसङ्ख्याभेदं विनेत्यर्थः । वैशेषिकमते द्रव्यादयः सप्त पदार्थाः, प्रत्यक्षानुमाने द्वे एव प्रमाणे, नैयायिकदर्शने प्रमाण-प्रमेयादयः, पदार्थाः षोडश, प्रमाणानि प्रत्यक्षा-ऽनुमानोपमान शब्दाख्यानि चत्वारीत्येवं पदार्थप्रमाणसङ्ख्याभेदः । न्यायभेदे समवायस्य प्रत्यक्षं भवति, वैशेषिकमते यावत्सम्बन्धिप्रत्यक्षे सत्येव सम्बन्धप्रत्यक्षमिति नियमात् सम्बन्धिना परमाण्वादीना प्रत्यक्षाभावात् समवायो न प्रत्यक्ष इत्यपि विशेषोऽस्तीत्यत उक्तम्— **प्राय इति** । **तस्य** नैयायिकदर्शनस्य ॥ ११८ ॥

एकोनविंशत्युत्तरशततमपद्यमवतारयति— **नन्वित्यादिना**, **विषयविवेकेन** सामान्यविषयकत्वात् सामान्यविषयकनैगमस्य सङ्ग्रहेऽन्तर्भावः, विशेषविषयकत्वाद् विशेषविषयकनैगमस्य व्यवहारेऽन्तर्भाव इत्येवं विषयविवेकेन । **तस्य** नैगमस्य । **पार्थक्ये** सङ्ग्रह-व्यवहाराभ्या भिन्नत्वे, अन्ये देवसूरिप्रभृतयः सङ्ग्रह व्यवहाराभ्या नैगमस्य पार्थक्यमामनन्तीत्यत्र किं बीजमित्यर्थः । शङ्कते— **अदर्शनेऽपीति**— नैगमपार्थक्यबीजस्यादर्शनेऽपि, किञ्चिन्नैगमपार्थक्यबीजं कल्पयाम इत्यर्थः । समाधत्ते— **तर्हीति**— अदृष्टस्य कस्यचिन्नैगमपार्थक्यबीजस्य कल्पनापेक्षया लाघवान्नैगमे दृष्टमेव सामान्यविशेषोभयविषयकत्व

**ऋजुसूत्रादितः सौत्रान्तिकवैभाषिकौ क्रमात्।**
**अभूवन् सौगता योगाचारमाध्यमिकाविति ॥ १२० ॥**

**नयामृत०—ऋजुसूत्रादित** इति। ऋजुसूत्रादितः– ऋजुसूत्र-शब्द-समभिरूढैवम्भूतेभ्यः, क्रमात् सौत्रान्तिको वैभाषिको योगाचारो माध्यमिकश्चेति चत्वारः, सौगता अभूवन्– उदपद्यन्त, एतेषां स्वरूपमेतेन काव्येन ज्ञेयम्—

"अर्थो ज्ञानसमन्वितो मतिमता वैभाषिकेणेष्यते, प्रत्यक्षो नहि बाह्यवस्तुविसरः सौत्रान्तिकैराश्रितः।
योगाचारमतानुगैरभिमता साकारबुद्धिः परा, मन्यन्ते बत मध्यमाः कृतधियः स्वच्छां परां संविदम्" ॥१॥
[ ] इति,

एतद्विशेषावगमपुष्पमदार्थिना तु मत्कृतलताद्वयं परिशीलनीयम्। अत्र वैभाषिकस्य शब्दनय-

---

**तथाऽस्तु** पार्थक्यबीजमस्त्वित्यर्थः। **तथा च** उक्तदिशा सङ्ग्रह-व्यवहाराभ्यां नैगमस्य पार्थक्ये च। **तत एव** नैगमादेव। **स्वतन्त्रेतीति**– स्पष्टार्थत्वादिदं पद्य न व्याख्यायत इत्याह– **स्पष्टार्थ** इति। **अत्र चार्थे** एतत्पद्यप्रसिद्धार्थे। **प्रदर्शित-न्यायेन** अनन्तरोपदर्शितयुक्त्या। **एकत्र** एकस्मिन् धर्मिणि। उक्तार्थे सम्मतिवृत्तिस्वारस्यं दर्शयति– **नैगम** इति ॥ ११९ ॥

ऋजुसूत्रादिपर्यायार्थिकनयचतुष्टयतो बौद्ध चतुष्टयस्य सौत्रान्तिक-वैभाषिक-योगाचार-माध्यमिकाभिधस्य दर्शनानि जातानीत्यावेदकं विंशत्युत्तरशततमपद्यं विवृणोति– **ऋजुसूत्रादित इतीति**। **ऋजुसूत्रादित** इत्यस्य विवरणम्– **ऋजुसूत्रशब्दसमभिरूढैवम्भूतेभ्य** इति। **क्रमादिति**- ऋजुसूत्रात् सौत्रान्तिकः, शब्दाद् वैभाषिकः, समभिरूढाद् योगाचारः, एवम्भूतान्माध्यमिक इत्येवं चत्वारः **सौगताः**– बौद्धाः, **अभूवन्** उदपद्यन्तेत्यर्थः। सौत्रान्तिकादिपदं सौत्रान्तिक-दर्शनादिपरम्। सक्षेपतश्चतुर्णां बौद्धानां स्वरूपमावेदयितुमाह– **एतेषामिति**– अनन्तरमुपदिष्टानां सौत्रान्तिकादीनां चतुर्णां बौद्धानामित्यर्थः। **एतेन** अनन्तरमेव वक्ष्यमाणेन। **ज्ञानसमन्वितोऽर्थः** यदेव ज्ञानं तदेव तद्विषयोऽर्थः। ज्ञान-विषययोः समकालमेवोत्पत्तिरिति **मतिमता** सूक्ष्मबुद्धिशालिना, **वैभाषिकेण** वैभाषिकसञ्ज्ञकेन बौद्धविशेषेण, **इष्यते** स्वीक्रियते, **सौत्रान्तिकैः**, सौत्रान्तिकाख्यैर्बौद्धविशेषैः, **बाह्यवस्तुविसरः** बाह्यवस्तुविषयकः, **प्रत्यक्षः** प्रत्यक्षात्मक-बोधः, **नह्याश्रितो** नैव स्वीकृतः, वैभाषिकमते समानकालीनसामग्रीतो बाह्यवस्तु-तज्ज्ञानयोरुत्पत्तिरिति तयोर्विषय-विषयिभावसम्बन्ध इष्यते, तेन निराकारमेव ज्ञान तद्विषयकत्वात् तत्सिद्धिनिबन्धनम्, सौत्रान्तिकमते प्रथमक्षणे प्रत्यक्षकुर्वद्रूपात्मकं क्षणिक स्वलक्षणाभिधेय बाह्यवस्तु ततो द्वितीयक्षणे तन्नाशस्तदाकारज्ञानोत्पत्तिश्चेति तदाकारमेव ज्ञानं न तु तद्विषयकं तयोर्भिन्नकालत्वात्, किन्तु तदाकारं ज्ञान तदन्तरेण न सम्भवतीति तदाकारज्ञानात् तस्य सिद्धिरित्ये-वमनयोर्विशेषः, **योगाचारमतानुगैः** योगाचारमतानुसरणशीलैः, **परा** उत्कृष्टा बाह्यवस्त्वभावेन बाह्यवस्तुजन्यत्वाभावात्, साकारबुद्धिराश्रिता स्वीकृता, पूर्वपूर्वविज्ञानक्षणेनोत्तरोत्तर तत्तदाकार विज्ञानं जायते, तस्य तत्तदाकारत्वं च वासनाविशेष-बलादेव न बाह्यवस्तुबलादिति न तत्तदाकारबलाद् बाह्यवस्तुसिद्धिरुपेयत इति बाह्यवस्त्वभ्युपगन्तृत्व-तदनभ्युपगन्तृत्वाभ्यां साकारविज्ञानाभ्युपगन्त्रोरपि सौत्रान्तिक-योगाचारयोर्विशेषः। **मध्यमाः** माध्यमिकबौद्धविशेषमतानुयायिनः, **कृतधियो** निर्मलबुद्धिमन्तस्स्वच्छामाकारविषयविषयिभावरहितामत एव परामुत्कृष्टां, **संविदं** बुद्धिं, **मन्यन्ते** स्वीकुर्वन्तीत्यर्थः। विस्तर-भयादत्र सौत्रान्तिकादीनामृजुसूत्रादिप्रकृतिकत्वपल्लवनं न क्रियते, किन्तु मत्कृतलताद्वये विस्तरेण तदुपपादनं समस्ति तदव-लोकनीयं तद्विशेषाभिज्ञानार्थिनेति ग्रन्थकृदुपदिशति– **एतद्विशेषेति**– एतस्य-अनन्तरमुपदर्शितस्य बौद्धमतचतुष्टये ऋजुसूत्रादि-पर्यायार्थिकनयचतुष्टयप्रकृतिकत्वस्य यो विशेषोऽवान्तरवैलक्षण्यं तदवगमात्मकं यत् पुष्पमदं– मधु तदर्थिना– तदभिलाषुकेन, **मत्कृतलताद्वयं** श्रीयशोविजयोपाध्यायनिर्मितलतानामकग्रन्थद्वयम्, **परिशीलनीयं** सर्वतोऽभ्यसनीयमित्यर्थः। ऋजुसूत्र-नयाभ्युपगतक्षणिकात्मकपर्यायाभ्युपगन्तृत्वात् सौत्रान्तिकानामृजुसूत्रपक्षपातित्वस्य स्पष्टं प्रतीयमानत्वेऽपि वैभाषिकादीनां

पक्षपातित्वं नित्या-ऽनित्यशब्दवाच्यपुद्गलाभ्युपगमात्, ज्ञाना-ऽर्थलक्षणयौगपद्यरूपव्यञ्जनपर्यायप्रधानत्वा-च्चावगन्तव्यम्, यौगाचार-माध्यमिकयोश्च शुद्धशुद्धतरत्वेन समभिरूढैवम्भूतपक्षवर्तित्वमिति ॥ १२० ॥

**नयसंयोगजः शब्दा-ऽलङ्कारादेश्च विस्तरः ।**
**कियान् वाच्यो वचस्तुल्यसङ्ख्या ह्यभिहिता नयाः ॥ १२१ ॥**

**नयामृत०—नयेति ।** शब्दा-ऽलङ्कारादेः– व्याकरण-साहित्यादिशास्त्रस्य च विस्तरः, नय-संयोगजः– नानानयमयः, आदित एव तत्प्रवृत्तौ नानानयविवक्षायां उपजीवनात्, अन्यथा सार्वपार्षद-त्वानुपपत्तेः, अत एव मीमांसका अपि द्रव्य-पर्याययोः सार्वजनीनभेदा-ऽभेदाद्युपपत्तये व्यवहारनय-मानन्त्य-व्यभिचाराभ्यां बिभ्यन्तौ व्यक्तिशक्तिमपहाय जातौ शक्तिव्युत्पत्तये सङ्ग्रहनयं चाद्रियमाणाः स्वमतप्रवृत्तौ नयसंयोगमेवादावपेक्षन्ते, यत् तु मीमांसकमतस्याशुद्धद्रव्यार्थिकव्यवहारनयप्रकृतिकत्वं

---

शब्दनयादिपक्षपातित्वं कुतोऽवगम्यत इत्यपेक्षायामाह– अत्रेति– चतुर्णां बौद्धाना मत इत्यर्थः । यद्यपि बाह्यपदार्थाभ्युप-गन्तृत्वादर्थनयपक्षपातित्वमेव युक्तं तथापि पुद्गलात्मकस्य नित्यानित्यशब्दवाच्यतयाऽभ्युपगमाच्छब्दनयपक्षपातित्वम्, वैभाषिकोऽपि क्षणिकमेव वस्तु स्वीकरोति न नित्यमिति शब्दोऽपि न नित्यः, किन्तु नित्यमित्येवंस्वरूपोऽनित्यमित्येवंस्वरूपो यः शब्दस्तद्वाच्यस्य पुद्गलस्याभ्युपगमात्, न तु शब्दावाच्य पुद्गलमभ्युपगच्छतीत्यर्थादवगम्यते, शब्दनयो हि व्यञ्जनपर्यायं प्राधान्येनाभ्युपगच्छति, वैभाषिकोऽपि तथेत्यतोऽपि शब्दनयपक्षपातित्वमस्येत्याह– ज्ञानेति– ज्ञानार्थयोर्लक्षणसाधारणं यद् यौगपद्यं तद्रूपो यो व्यञ्जनपर्यायस्तत्प्रधानत्वाच्च प्राधान्येन तदभ्युपगन्तृत्वाच्च वैभाषिकस्य शब्दनयपक्षपातित्वमवगन्तव्यं ज्ञातव्यमित्यर्थः । समभिरूढनयः शुद्धः, योगाचारमतमपि बाह्यार्थावगाहित्वलक्षणाशुद्धिविगमाच्छुद्धमिति शुद्धत्वेन योगा-चारस्य समभिरूढनयपक्षपातित्वम्, एवम्भूतनयः शुद्धतरः, ज्ञानस्य साकारताऽप्यशुद्धिस्तदाभावादतिशुद्ध निराकारं निर्विषयक च ज्ञानं तदभ्युपगमगन्तृत्वान्माध्यमिकमतमपि शुद्धतरमतः शुद्धतरत्वेन माध्यमिकस्यैवम्भूतनयपक्षपातित्वमित्याह– **योगा-चारेति** ॥ १२० ॥

शब्दा-ऽलङ्कारादीना नयसंयोगजन्यत्वमित्यस्य यावन्तो वचनप्रकारास्तावन्तो नया इत्यस्य चोपदर्शकमेकविंशत्युत्तर-शततमपद्यं विवृणोति– **नयेतीति** । "**नानानयविवक्षायां**" इत्यस्य स्थाने "नानानयविवक्षाया" इति पाठो युक्तः । **अन्यथा** शब्दा-ऽलङ्कारादेः प्रथमतः प्रवृत्तौ नानानयविवक्षाया उपजीवनाभावे, नानानयविवक्षामनुपजीव्यापि प्रथमतः शब्दा-ऽलङ्कारादिप्रवृत्त्यभ्युपगमे इति यावत् । **सार्वपार्षदत्वानुपपत्तेः** सर्वपरिषद्व्यवस्थितजनसम्बन्धित्वानुपपत्तेः, यद्येक-नयजत्वमेव शब्दाऽलङ्कारादीनां स्यात् तदनुसरणकारिणामानन्दकारित्वं शब्दालङ्कारादीनां न भवेदतस्तेषा नयसयोजत्व-मेवेत्याशयः । **अत एव** शब्दाऽलङ्कारादीना नयसयोगजत्वादेव । **मीमांसका अपी**त्यस्य '**आद्रियमाणाः**' इत्यनेन 'अपेक्षन्ते' इत्यनेन चान्वयः, द्रव्यपर्याययोः, **सार्वेति**– सार्वजनीनः– सर्वजनप्रसिद्धो यो भेदाभेदादिस्तदुपपत्तये– तत्सिद्धयर्थम्, **व्यवहारनय**मित्यस्य '**आद्रियमाणाः**' इत्यनेनान्वयः । "**विभ्यन्तौ**" इत्यस्य स्थाने "विभ्यतौ" इति पाठो युक्तः, शब्दस्य व्यक्तौ शक्तेरुपगमे व्यक्तीनामानन्त्याच्छक्तेरप्यानन्त्यं प्रसज्यते, यत्किञ्चिद्व्यक्तौ शब्दस्य शक्त्यभ्युपगमे तु यत्रैव व्यक्तौ पदस्य शक्तिस्तस्या एव व्यक्तेः पदादुपस्थितिर्न त्वन्यासां व्यक्तीनाम्, शाब्दबोधश्च व्यक्त्यन्तराणामपीत्युपस्थिति-शाब्दबुद्ध्योः समानविषयत्वप्रत्यासत्त्या कार्यकारणभावो न स्यादनुपस्थितव्यक्तौ शाब्दबोधस्य भावेन व्यतिरेकव्यभिचारादित्येव-मानन्त्य-व्यभिचाराभ्या विभ्यतौ व्यक्तिशक्तिं परित्यज्येत्यर्थः । **जातौ** घटत्व-पटत्वादिसामान्ये । **शक्तिव्युत्पत्तये** घट-पटादिशब्दशक्तिग्रहलक्षणशक्तिव्युत्पत्त्यर्थम् । **सङ्ग्रहनयं** सामान्यरूपेण व्यक्तीना सङ्ग्रहणादनुगमनात् सामान्यग्राहिसङ्ग्रहम् । **चः** समुच्चये । **आद्रियमाणा** अपेक्षमाणाः । **स्वमतप्रवृत्तौ** भेदाभेदसामान्याभ्युपगमप्रवणमीमांसाराद्धान्तप्रवृत्त्यर्थम् । **नयसंयोगमेव** व्यवहार-सङ्ग्रहद्वयसंयोजनमेव । **आदौ** प्रथमम् । नन्वेवं मीमांसामतस्य व्यवहार-सङ्ग्रहनयद्वयप्रकृति-कत्वे सम्मतिग्रन्थविरोधः, तत्र तस्याशुद्धद्रव्यार्थिकनयप्रकृतिकत्वस्यैवाभिधानादित्यत आह– **यत् त्विति** । **नामनिक्षेपा-**

सम्मतिवृत्तौ नामनिक्षेपावसरे भाषितं तत् शब्दा-ऽर्थयोर्नित्यसम्बन्धमात्रवादापेक्षया, "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" [ जैमिनिसूत्र- ] इति तत्सूत्रे औत्पत्तिक इत्यस्य विपरीतलक्षणया नित्य इति व्याख्यानात्, पूर्वपूर्वसङ्केतापेक्षायामनवस्थानान्नित्यपदसम्बन्धाभ्युपगम एव, प्रवृत्तिमूलव्यहारा-द्यन्तशुद्धशास्त्रैदम्पर्यपर्यालोचनायां तु तस्य नयसंयोगजत्वमेव युक्तम्, अन्यथा शब्दानुशासनेऽपि स्फोट-विचारे शब्दतन्मात्रसङ्ग्रहप्राधान्येन नयसंयोगजत्वं न स्यात्, नयसंयोगजत्वे शब्दादीनां कथं न स्व-समयतुल्यत्वमिति चेत्? मूढनयानां तेषां यथावद्विभागाकरणात्, अत एव यथावन्नयविभागचिकीर्षया "सिद्धिः स्याद्वादात्" [सिद्धहेम० १. १. २.] इति सूत्रमुपन्यस्य श्रीहेमसूरयः स्वोपज्ञशब्दानु-

---

**वसरे** नाम-स्थापना-द्रव्य-भावनिक्षेपभेदेन निक्षेपाश्चत्वारस्तत्र नामनिक्षेपनिरूपणावसरे । **भाषितम्** उक्तम् । **तत्** मीमांसकमतस्याशुद्धद्रव्यार्थिकव्यवहारनयप्रकृतिकत्वकथनम् । शब्दा-ऽर्थयोर्नित्यसम्बन्धो मीमांसकसम्मत इत्यत्र जैमिनिसूत्र-व्याख्यानं प्रमाणयति- **औत्पत्तिकस्त्विति**-इतिशब्दः स्वरूपपरः । **तत्सूत्रे** मीमांसादर्शनप्रवर्तकजैमिनिमुनिप्रणीतसूत्रे । उत्पत्तिकृत औत्पत्तिक इति व्युत्पत्त्यौत्पत्तिकशब्दार्थ उत्पत्तिमान् अनित्य इति यावत्, तथा च शब्दस्यार्थेनानित्यः सम्बन्ध इति स्यादत आह- **औत्पत्तिक इत्यस्येति**-औत्पत्तिक इत्येवंस्वरूपशब्दस्येत्यर्थः। **विपरीतलक्षणया** औत्पत्तिक-विपरीते अनौत्पत्तिके लक्षणया । नन्वीश्वरानङ्गीकर्तृमीमांसकमते नित्यसङ्केतस्याभावेऽप्यनित्याधुनिकपुरुषसङ्केत एव शब्दा-ऽर्थयोः सम्बन्धोऽस्तु, तथा च न शब्दस्यार्थेन सह नित्यसम्बन्धसिद्धिरित्यत आह- **पूर्वपूर्वेति**- आधुनिकसंकेतस्य शब्दार्थसम्बन्धत्वे कस्यचित् पुंसो घटपदात् पटो बोद्धव्य इति सङ्केतस्यापि सम्भवेन घटपदस्य पटोऽपि शक्यार्थः स्यात्, तत्परिहाराय पूर्वपूर्वपुरुषसङ्केतापेक्ष एव सङ्केतः शब्दा-ऽर्थयोः सम्बन्ध इति वाच्यम्, तथा च पटे घटपदस्य सङ्केतो न पूर्वपूर्वसङ्केतापेक्ष इति न स सम्बन्धः, किन्तु घटे घटपदसङ्केतः पूर्वपूर्वपुरुषैरपि कृतस्तदपेक्षो घटपदस्य घटे सङ्केतो घटपद-घटरूपार्थयोः सम्बन्ध इत्यनवस्था प्रसज्यत इति नित्यशक्तिलक्षणसम्बन्ध एव शब्दा-ऽर्थयोरुपेय इत्यर्थः । **प्रवृत्तीति**- लोके स्वर्गाद्यर्थं यागादौ या प्रवृत्तिस्तन्मूलव्यवहारादिपर्यन्तस्य शुद्धस्य जैमिनिशास्त्रैदम्पर्यस्य पर्यालोचनायां-विचारणाया पुनर्मीमांसकमतस्य नयसंयोगजत्वमेव युक्तमित्यर्थः । **अन्यथा** उक्तपर्यालोचनायामपि मीमांसकमतस्य नय-संयोगजत्वानङ्गीकारे । **शब्दानुशासनेऽपि** अनुशिष्यन्ते प्रकृति-प्रत्ययादिविभागेन प्रतिपाद्यन्ते साधुशब्दा अनेनेति अनुशासनम्, शब्दानामनुशासनं शब्दानुशासनमिति व्युत्पत्त्या व्याकरणशास्त्रेऽपि, अस्य **नयसंयोगजत्वमित्यनेनान्वयः**। **स्फोटविचार** इति- स्फुटीभवत्यर्थोऽनेनेति स्फोटः, स च वर्णस्फोटः पदस्फोटो वाक्यस्फोट इति त्रिधेति वचनात् त्रिविधो नित्यः शब्दस्वरूपस्तस्य विचारे । कथं शब्दानुशासने नयसंयोगजत्वानुपपत्तिरित्याकाङ्क्षानिवृत्त्यर्थमेव **स्फोट-विचारे शब्दतन्मात्रसङ्ग्रहप्राधान्येनेत्युक्तम्**, अस्ति च तत्र शब्दतन्मात्रसङ्ग्रहस्यैव प्राधान्यं स्फोटात्मकशब्द-स्वरूपस्य परब्रह्मण उपगमाच्छब्दब्रह्मण एवार्थरूपेण विवर्तनादर्थमात्रस्य शब्दात्मकब्रह्मस्वरूपत्वमित्येवं शब्दतन्मात्रसङ्ग्रह-प्राधान्यम् । अत्र शङ्कते- **नयसंयोगत्वे** इति । **शब्दादीनामित्यत्र** शब्दपदं शब्दानुशासनपरम्, आदिपदादलङ्कारादि-शास्त्राणामुपग्रहः । **स्वसमयेति**- जैनाभिमतस्याद्वादराद्धान्तेत्यर्थः, यथा स्याद्वादराद्धान्ते नयसंयोगजत्व तथा शब्दानु-शासनालङ्कारादिशास्त्राणामपीति स्याद्वादराद्धान्तस्य जैनसमयत्ववच्छब्दानुशासनादिशास्त्राणामपि जैनसमयत्वमापद्येतेत्यर्थः । समाधत्ते- **मूढनयानामिति**- अन्योऽन्यनिरपेक्षसामान्य-विशेषाद्यर्थग्राहकत्वान्मिथ्यानयानामित्यर्थः । **तेषां** शब्दा-ऽलङ्कारादि-शास्त्रणाम् । **यथावद् विभागाकरणादिति**- एतदपेक्षयेदमभिहितमेतदपेक्षया त्विदमुक्तमित्येवमपेक्षाभेदेन यन्नयविषय-विभजन तस्याकरणान्न शब्दा-ऽलङ्कारादीना नयसंयोगजत्वेऽपि स्वसमयतुल्यत्वमित्यर्थः । **अत एव** इत्यस्य 'आविश्चक्रुः' इत्यनेनान्वयः, **श्रीहेमसूरय** इत्यस्याप्याविश्चक्रुरित्यनेनान्वयः । **स्वोपज्ञेति**- स्वनिर्मितेत्यर्थः, स्वपदेनात्र श्रीहेमसूरीणां ग्रहणम्, **स्वोपज्ञशब्दानुशासनस्येत्यस्य दृढप्रामाण्यमित्यनेन** सम्बन्धः । **स्वसमयान्तर्भावेन** जैनराद्धान्तान्त-र्भावेन, जैनराद्धान्तस्य निश्चितप्रामाण्यकत्वेन तदन्तर्भूतस्य श्रीहेमचन्द्रसूरिनिर्मितशब्दानुशासनस्यापि सुदृढं प्रामाण्यमिति ।

शासनस्य स्वसमयान्तर्भावेन दृढप्रामाण्यमाविश्चक्रुः, सङ्क्षेपमभिप्रेत्याह—उक्तो विस्तरः कियान् वाच्यः, यतो वाचस्तुल्यसङ्ख्या नया अभिहिताः॥ १२१॥

**स्याद्वादनिरपेक्षैश्च, तैस्तावन्तः परागमाः।**
**ज्ञेयोपयुज्य तदियं, दर्शने नययोजना॥ १२२॥**

**नयामृत०**—स्याद्वादेति। तैः—नयैः, स्याद्वादनिरपेक्षैः— स्याद्वादैकवाक्यतारहितैः, तावन्तः— वचस्तुल्यसङ्ख्या एव, परागमाः— परसिद्धान्ता भवन्ति, अभिनिवेशान्वितनयत्वस्यैव परसमयलक्षणत्वात्, तदिदमुक्तं सम्मतौ—

" जावइया वयणपहा, तावइया चेव हुन्ति नयवाया।
जावइया नयवाया, तावइया चेव परसमया॥" [ तृ० कां० गा० ४ ]

एतावत्सु नयेष्विच्छाकल्पितसंयोगजभेदोऽपि समवायान्तरापेक्षकः सुलभ एव, इयं दर्शने नययोजनोपयुज्य ज्ञेया, न त्वापपात एव, आपातज्ञानस्य स्वसमय-परसमयविपर्यासफलत्वात्, अत एव वस्तुस्थितिविचारे—

" जे पज्जवेसु णिदिट्ठा, जीवा परसमयगतिविणिद्दिट्ठा।
आयसहावंमि ठिया, ते सगसमया मुणेयव्वा॥" [ ] इति

दैगम्बरं वचनं [ चक्रुः ] सम्यक् स्वसमयानिष्णाततामभिव्यञ्जयति, द्रव्यास्तिकाभिप्रायः स्वसमयः

---

**आविश्चक्रुः** प्रकटीचक्रुः। उत्तरार्द्धमवतार्य विवृणोति- **संक्षेपमभिप्रेत्याहेति**। **कियान् वाच्य** इत्यनेन विशेषतो नयविस्तरो वक्तुमशक्य इति सूचितम्। कथं विशेषतो नयविस्तरो वक्तुमशक्य इत्यपेक्षायामाह- **यत** इति॥ १२१॥

दर्शनगतनययोजनोपसंहारपर द्वाविंशत्युत्तरशततमपद्य विवृणोति- **स्याद्वादेतीति**। **तैरित्यस्य** विवरण- **नयैरिति**। **स्याद्वादनिरपेक्षैरित्यस्य** विवरण- **स्याद्वादैकवाक्यतारहितैरिति**। **तावन्तः** इत्यस्य विवरण- **वचस्तुल्यसङ्ख्या एवेति**। **परागमा** इत्यस्य विवरणं- **परसिद्धान्ता** इति। **भवन्तीति** क्रियापदमध्याहृतम्। वचस्तुल्यसङ्ख्याकानां नयाना परसमयत्वे हेतुमाह- **अभिनिवेशेति**- स्वमतकदाग्रहेत्यर्थः। यावन्तो वचनमार्गास्तावन्तो नयाः परसमया इत्यत्र सम्मतिवचनसंवादमाह- **तदिदमुक्तं सम्मताविति**। **जावइया०** इति- " यावन्तो वचनमार्गास्तावन्तश्चैव भवन्ति नयवादाः। यावन्तो नयवादास्तावन्तश्चैव परसमयाः॥" इति संस्कृतम्, **एतावत्सु** वचस्तुल्यसंख्येषु। **इच्छाकल्पितेति**- एतन्नयस्यानेन नयेन संयोगो भवत्वित्यादीच्छाकल्पितेत्यर्थः। **इच्छाकल्पितसंयोगजभेदोऽपीत्यस्य सुलभ एवेत्यनेनान्वयः**। "**समवायान्तरापेक्षकः**" इत्यस्य स्थाने " समयान्तराक्षेपकः" इति पाठो युक्तः। निगमनार्थकं **तदिति** मूल तस्मादित्यर्थक स्पष्टत्वान्न व्याख्यानाय परिगृहीतमिति बोध्यम्। उत्तरार्द्धे पदानामन्वयत एवार्थः स्फुटमाभातीत्यन्वयमात्रमावेदयति- **इयमिति**। **उपयुज्य** अपेक्षाभेदं सन्निवेश्य। उपयुज्येत्यस्य व्यवच्छेद्यमाह- **न त्वापातत एवेति**। कथं नापाततो ज्ञेयेत्यपेक्षायामाह- **आपातज्ञानस्येति**- आपातज्ञानतः स्वसमये परसमयत्वबुद्धिः परसमयेऽपि स्वसमयत्वबुद्धिः स्यादित्येवमापातज्ञानस्य स्वसमय-परसमयविपर्यासफलत्वादित्यर्थः। **अत एवेत्यस्य** 'अभिव्यञ्जयति' इत्यनेनान्वयः। **वस्तुस्थितिविचारे** वस्तुस्थितिविचाराख्ये ग्रन्थे। **जे पज्जवेसु०** इति- " ये पर्यवेषु निर्दिष्टा जीवा परसमयगतिविनिर्दिष्टाः। आत्मस्वभावे स्थिताः ते स्वसमया ज्ञातव्या॥" इति संस्कृतम्। **दैगम्बरं** दिगम्बरस्येद दैगम्बरमिति दिगम्बरोक्तत्वाद् दिगम्बरसम्बन्धि। **वचनमित्यस्य** 'अभिव्यञ्जयति' इत्यनेनान्वयः। "**[ चक्रुः ] सम्यक्**" इत्यस्य " वक्तुः सम्यक्" इति पाठः समीचीनः। **वक्तुः** स्ववक्तुर्दिगम्बरस्य।

पर्यायास्तिकाभिप्रायः परसमय इत्यस्य स्याद्वादनिरपेक्षत्वात्, नयवाक्यमेवैतदिति चेत्? तर्हि प्रवचन-क्रियाव्युत्पादनै(ने) क इवास्योपयोगः स्थूल-सूक्ष्मनयार्थानां क्रमव्युत्पादनस्यैव शास्त्रार्थत्वादिति मुग्धबन्धन-मात्रमेतत्। यदपि प्रावचनिकानां जिनभद्र सिद्धसेनप्रभृतीनां स्वस्वतात्पर्यविरुद्धविषये सूत्रे परतीर्थिक-वस्तुवक्तव्यताप्रतिबन्धप्रतिपादनम्, तदप्यभिनिवेशनं चेत्? तदा प्रावचनिकत्वक्षतिरिति, तत्र पर-तीर्थिकपदं भिन्नपरम्परायाततात्पर्यानुसारिपदम्, अत एव नयाभिप्रायेण प्रवृत्तत्वादिति हेत्वभिधानो-पपत्तिः, अत एव च नयाभिप्रायेणोभयसमाधानमस्माभिर्ज्ञानबिन्दौ विहितम्, इत्येवमन्यत्रापि दर्शन-प्रयोजनायामुपयोगो विधेयः समयनिष्णातैः ॥ १२२ ॥

सम्यक् समीचीनतया। स्वसमयानिष्णाततां जैनराद्धान्तानिपुणताम्। अभिव्यञ्जयति प्रकटयति। अत्र हेतुमाह— द्रव्यास्तिकाभिप्राय इति— उक्तवचनेनेदमेव ज्ञायते, यदुत— द्रव्यास्तिकाभिप्रायः स्वसमयः पर्यायास्तिकाभिप्रायः पर-समय इति, परमस्य स्याद्वादनिरपेक्षत्वादित्यर्थः। शङ्कते— नयवाक्यमिति। एतत् जे पज्जवेस्वित्यादि दिगम्बरवचनम्, तथा च तत्प्रतिपाद्ये स्याद्वादनिरपेक्षत्वं न वक्तृगतस्वसमयाज्ञानविजृम्भितमिति भावः। समाधत्ते तर्हीति— यदि नयवाक्यमेवैतत् तदा स्थूल-सूक्ष्मनयार्थक्रमव्युत्पादनमेवात्रोचितं न तु प्रवचने प्रक्रियाव्युत्पादनमतो मुग्धानां— मूढानामेतद् वचनं बन्धनमात्रमिति मुकुलितोऽर्थः। यदपीति प्रतिपादनमित्यनेनान्वयि। प्रावचनिकानां सैद्धान्तिकानाम्। स्वस्वेति— यत्र सूत्रे स्वस्वाभिप्रायविषयभिन्नविषयकत्वमामुखेऽवभासते तत्र सूत्रे परतीर्थिकानामभिमतं यद् वस्तु तस्य या वक्तव्यता तस्याः प्रतिबन्धस्य— सम्बन्धस्य, प्रतिपादनम्— इदं सूत्रं परतीर्थिकवस्तुवक्तव्यतामाश्रित्य प्रवृत्तमित्येवं जिनभद्र-सिद्धसेनप्रभृतीनां प्रावचनिकाना यदपि प्रतिपादनं तत् प्रतिपादनमपि चेद् यदि अभिनिवेशनं— स्वस्वमताग्रह-विजृम्भितं तदा जिनभद्र-सिद्धसेनप्रभृतीना प्रावचनिकत्वस्य क्षतिः— हानिः स्यादिति हेतोः, तत्र परतीर्थिकवस्तुवक्तव्यतेत्यादि-वाक्ये, घटकत्व सप्तम्यर्थ इति तादृशवाक्यघटक परतीर्थिकपदं भिन्नपरम्परा— जिनभद्र-सिद्धसेनप्रभृतीनां यः स्वस्व-गुरुस्तद्गुरुपरम्परा तद्भिन्नजैनपरम्परा, तत आयातस्य— सूत्रतात्पर्यस्य, अनुसारी— अनुसरणशीलो यः पुरुषस्तत्परं तत्तात्प-र्यकम्, परतीर्थिकपदेन जैनेतरस्य न ग्रहण किन्तूक्तदिशा स्वपरम्पराभिन्नपरम्पराऽऽयाततात्पर्यानुसारिणां जैनानामेव ग्रहण-मित्यर्थः। "सारिपदं" इत्यस्य स्थाने "सारिपरं" इति पाठो युक्तः। इत्थं तदुक्तिव्याख्याने तेषां न प्रावच-निकत्वक्षतिरिति बोध्यम्। अत एव यत एव तत्र परतीर्थिकपद भिन्नपरम्पराऽऽयाततात्पर्यानुसारिपरं तत एवेत्यर्थः। कथमस्मिन् सूत्रे परतीर्थिकवस्तुवक्तव्यताप्रतिबन्ध इत्याकाङ्क्षानिवृत्तये तेषामेव 'नयाभिप्रायेण प्रवृत्तत्वाद्' इत्येवं यदभिधान तस्योपपत्तिरित्यर्थः। अत एव स्वस्वतात्पर्यविरुद्धविषयसूत्रस्य नयाभिप्रायेण प्रवृत्तत्वादेव, अस्य विहितमि-त्यनेनान्वयः। उभयसमाधानं परस्परविरुद्धजिनभद्र-सिद्धसेनप्रभृतिमतद्वयस्य समाधान— सिद्धान्ताविरुद्धतयाऽनुगमनम्। अस्माभिः यशोविजयोपाध्यायैः। ज्ञानबिन्दौ ज्ञानबिन्दुसंज्ञके ग्रन्थे। विहितं कृतम्। ज्ञानबिन्दावन्ते ग्रन्थकृत्प्रश-स्तावेतानि पद्यानि केवलज्ञान केवलदर्शनयौगपद्यायौगपद्यैक्यमननपरायणानां मल्लवादि-क्षमाश्रमणजिनभद्रगणि-सिद्धसेनदिवा-कराणा त्रयाणा परस्परमतविरोधभञ्जकनयभेदसमाश्रयणप्रतिपादकानि पद्यान्यत्रानुसन्धेयानि—

"प्राचां वाचा विमुखविषयोन्मेषसूक्ष्मेक्षिकायां, येऽरण्यानीभयमधिगता नव्यमार्गानभिज्ञाः।
तेषामेषा समयवणिजा सम्मतिग्रन्थगाथा, विश्वासाय स्वनयविपणिप्राज्यवाणिज्यवीथी ॥ १ ॥
भेदग्राहिव्यवहृतिनय संश्रितो मल्लवादी, पूज्याः प्रायः करण-फलयोः सीम्नि शुद्धर्जुसूत्रम्।
भेदोच्छेदोन्मुखमधिगतः सङ्ग्रहं सिद्धसेनस्तस्मादेते न खलु विषमाः सूरिपक्षास्त्रयोऽपि ॥ २ ॥
चित्सामान्य पुरुषपदभाक् केवलाख्ये विशेषे, तद्रूपेण स्फुटमभिहितं सादनन्तं यदेव।
सूक्ष्मैरंशैः क्रमवदिदमप्युच्यमानं न दुष्टं, तत्सूरीणामियमभिमता मुख्य-गौणव्यवस्था ॥ ३ ॥

अथ नयोत्पादितेष्वपरिमितेषु दर्शनेषु कस्मिन् मिथ्यात्वं कस्मिंश्च सम्यक्त्वमिति जिज्ञासायामाह–

**नास्ति नित्यो न नो कर्ता, न भोक्ताऽऽत्मा न निर्वृतिः ।**
**तदुपायश्च नेत्याहुर्मिथ्यात्वस्थानकानि षट् ॥ १२३ ॥**

**नयामृत०**—नास्तीत्यादि । नास्त्यात्मा इति चार्वाकमते, न नित्य इति क्षणिकवादिमते, न कर्ता न भोक्तेति साङ्ख्यमते, यद्वा न कर्त्तेति साङ्ख्यमते, न भोक्तेत्युपचरितभोक्तृत्वस्याप्यनभ्युपगमाद् वेदान्तिमते, नास्ति निवृत्तिः सर्वदुःखविमोक्षत्वलक्षणेति नास्तिकप्रायाणां सर्वज्ञानभ्युपगन्तॄणां यज्वनां मते, अस्ति मुक्तिः परं तदुपायो नास्ति सर्वभावानां नियतत्वेनाकस्मादेव भावादिति नियतिवादिमते, इत्येतानि षट् मिथ्यात्वस्थानकान्याहुः पूर्वसूरयः ॥ १२३ ॥

**षडेतद्विपरीतानि, सम्यक्त्वस्थानकान्यपि ।**
**मार्गत्याग-प्रवेशाभ्यां, फलतस्तत्त्वमिष्यते ॥ १२४ ॥**

**नयामृत०**—षडेतदिति । एतेभ्यः– प्रागुक्तेभ्यः, विपरीतानि षट् सम्यक्स्थानान्यपि भवन्ति,– अस्त्यात्मा, नित्यः, कर्त्ता, साक्षाद्भोक्ता, अस्ति मुक्तिः, अस्ति च तत्कारणं रत्नत्रयसामराज्यमिति, तदिदमुक्तम्—

" अत्थि जिओ तह णिच्चो, कत्ता भुत्ता स पुन्नपावाणं ।
अत्थि धुवं णिव्वाणं, तस्सोवाओ अ च्छ ट्ठाणा ॥ " [ ] इति ।

---

तमोऽपगमचिज्जनुःक्षणभिदा निदानोद्भवाः, श्रुता बहुतराः श्रुते नयविवादपक्षा यथा ।
तथा क इव विस्मयो भवतु सूरिपक्षत्रये, प्रधानपदवी धियां क नु दवीयसी दृश्यते ॥ ४ ॥
प्रसह्य सदसत्त्वयोर्नहि विरोधनिर्णायकं, विशेषण-विशेष्ययोरपि नियामकं यत्र न ।
गुणागुणविभेदतो मतिरपेक्षया स्यात्पदा, किमत्र भजनोर्जिते स्वसमये न सङ्गच्छते ॥ ५ ॥
प्रमाण-नयसङ्गता स्वसमयेऽप्यनेकान्तधीर्नयस्मयतटस्थतोल्लसदुपाधिकिर्मीरिता ।
कदाचन न बाधते स्वगुरुसम्प्रदायक्रमं, समञ्जसपदं वदन्त्युरुधियो हि सद्दर्शनम् ॥ ६ ॥ " इति ।

" **दर्शनप्रयोजनायां** " इत्यस्य स्थाने " दर्शननययोननाया " इति पाठो युक्तः । **समयनिष्णातैः** जैनराद्धान्ताभिज्ञाननिपुणैः ॥ १२२ ॥

त्रयोविंशत्युत्तरशततमपद्यमवतारयति– **अथेति** । विवृणोति– **नास्तीत्यादीति** । साङ्ख्यमते कर्तृत्वाभावेऽपि भोक्तृत्वमात्मनोऽस्तीति कल्पान्तरमाह– **यद्वेति** । " **निवृत्तिः** " इत्यस्य स्थाने " निर्वृतिः " इति पाठो ज्ञेयः । निर्वृतिः किंस्वरूपेत्यपेक्षायामाह– **सर्वदुःखेति** । **यज्वनां** मीमांसकानाम् । तदुपायश्च नेति कस्य मते इत्यपेक्षयामाह– **अस्ति मुक्तिरिति** । **तदुपायो** मुक्त्युपायः, कारणाभावे कथं मुक्तिरूपं कार्यमित्यत आह– **सर्वभावानामिति** । वह्निरुष्णो जलं शीतं समस्पर्शस्तथाऽनिलः । केनेदं रचितं तस्मात् स्वभावात् तद्व्यवस्थितिः ॥ [ ] इत्यादि वचनं सर्वभावानां नियतत्वावगमाय प्रगल्भते । के आहुरित्यपेक्षानिवृत्त्यर्थं **पूर्वसूरय** इति ॥ १२३ ॥

चतुर्विंशत्युत्तरशततमपद्यं विवृणोति– **षडेतदितीति** । **एतेभ्यः** इत्यस्य विवरणं– **प्रागुक्तेभ्य** इति । " **सम्यक्स्थानान्यपि** " इत्यस्य स्थाने " सम्यक्त्वस्थानान्यपि " इति भाव्यम् । **भवन्तीति** क्रियापदमाहृतम् । षट् सम्यक्त्वस्थानानि विशिष्योल्लिखति– **अस्त्यात्मेति** । **नित्य** इत्यादावप्यात्मेत्यनुषज्यते । " **सामराज्य** " इत्यस्य स्थाने " साम्राज्य " इति पाठः । षट् सम्यक्त्वस्थानानीत्यत्र सिद्धान्तवचनसंवादं दर्शयति– **तदिदमुक्तमिति** । **अत्थीति**–

चार्वाकादिपक्षनिरासश्चातिभूयानिति लतादित एव तदनुगमो विधेयः। 'अकस्माद् भवति' इत्यनुपायवादिमते चात्यन्तोपयुक्तत्वात् किञ्चिद् विचार्यते,- अकस्मादिति किंशब्दस्य हेतुपरतया हेत्वभावे भवनपरम्? उत "अ-मा-नो-ना प्रतिषेधे" इति स्मरणान्निषेधार्थकस्य 'अ'शब्दस्य क्रियासम्बन्धसम्भवाद् भवनाभावपरम्? किंवा किंशब्दस्य स्वभिन्नपरतयाऽलीकभिन्नपरतया वा स्वहेतुकत्वपरम्, अलीकहेतुकत्वपरं वा? अथवा अकस्मादिति स्वभावादित्यर्थे रूढतया स्वभावादेव कादाचित्कमित्यर्थके? एतेषु पञ्चसु नैकोऽपि प्रकारो युक्तः, नियतावधिकार्यदर्शनात्, अनियतावधित्वे निरवधित्वे वा कादाचित्कत्वस्वभावव्याकोपापातात्, तत्स्वाभाव्ये च सहेतुकत्वस्यावश्यत्वात्, तदुक्तमुदयनेन—

"हेतु-भूतिनिषेधो न स्वा-ऽनुपाख्याविधिर्न च। स्वभाववर्णना नैवमुपाधेर्नियतत्वतः॥"

इति [ न्यायकुसुमाञ्जलिकारिका-५ ]

---

"अस्ति जीवस्तथा नित्यः कर्ता भोक्ता स पुण्य-पापयोः। अस्ति ध्रुवं निर्वाणं तस्योपायश्च षट् स्थानानि ॥ १ ॥" इति संस्कृतम्। चार्वाकादिमतात्मकानि षड् मिथ्यात्वस्थानकान्यस्मन्निर्मितलतादिग्रन्थ एव खण्डितानीति तत एव तेषां खण्डनयुक्तयोऽवसेयाः, ग्रन्थगौरवभयान्नात्र तेषां खण्डनं क्रियत इत्युपदिशति- **चार्वाकादिपक्षनिरासश्चेति**। **तदनुगमः** चार्वाकादिपक्षनिरासानुगमः। नियतिवादिमतखण्डनस्यात्रापि कर्तव्यत्वावश्यकत्वमावेदयति- **अकस्मादिति**। **अकस्मादिति किंशब्दस्य** अकस्मादित्येतद्घटककिंशब्दस्य। **हेतुपरतया** हेत्वात्मकार्थप्रतिपादकत्वेन, भवतीति च भवनार्थकम्, तथा च अकस्माद् भवतीति वाक्यं **हेत्वभावे भवनपरं** हेत्वभावे सति भवतीत्यर्थकम्। अकस्मादित्यस्य न कस्मादकस्मादित्येवं न समासत्वम्, किन्तु निषेधार्थकोऽशब्दः समासानन्तर्गत एव, तस्य भवतीति क्रियाशब्देनैव साकाङ्क्षत्वमित्यकस्माद् भवतीति कस्मादपि न भवतीत्यर्थकमिति सर्वथा भवनप्रतिषेध इति द्वितीयविकल्पमुपदर्शयति- **उतेति**- अथवेत्यर्थः। अकस्मादित्यत्र किंशब्दः स्वभिन्नपरस्तेन सह नञः समासे अकस्मादित्यनेन स्वभिन्नभिन्नादिति लभ्यते, स्वभिन्नभिन्नं च स्वमेव भवतीति स्वहेतुकभवनपरमकस्माद् भवतीति। यदि च किंशब्दोऽलीकभिन्नपरस्तदाऽलीकभिन्नभिन्नादित्यकस्मादित्यस्यार्थः, अलीकभिन्नभिन्नं चालीकमेवेत्यलीकाद् भवतीत्येवं पर्यवसितादकस्माद् भवतीत्यलीकहेतुकभवनमकस्माद् भवतीति तदाह- **किं वेति**। यदा च लम्बकर्णादिशब्दवदव्युत्पन्न एवायमकस्मादिति शब्दः स्वभावादित्यर्थे वर्तते तदा स्वभावात् कादाचित्कभवनमित्यर्थकमकस्माद् भवतीत्याह- **अथवेति**। "**मित्यर्थके**" इत्यस्य स्थाने "मित्यर्थकम्" इति पाठो युक्तः। **एतेषु** अनन्तरमुपदर्शितेषु। कथं न युक्त इत्यपेक्षायामाह- **नियतावधिकार्यदर्शनादिति**- नियतोऽवधिर्यस्य स नियतावधिरेवम्भूतस्य कार्यस्य दर्शनादित्यर्थः, वह्नेरव्यवहितपूर्ववर्तिनः सत्त्व एव धूमोत्पादेन धूमस्य वह्निर्नियतोऽवधिर्दृश्यत एव, य एव च नियतः पूर्वावधिः स एव कारणमिति न स्वं स्वस्य नियतं पूर्ववर्ति, नवा स्वभावादिकं तथा। सहेतुककार्यभवने व्यवस्थिते तस्य निर्हेतुकत्वं सर्वथा निषेधश्च न सङ्गतिमञ्चतीत्यकस्माद् भवतीत्यस्य पञ्चापि प्रकारा अयुक्ता एवत्याशयः। नन्वनियतावधित्वं निरवधित्वमेव वा कार्यस्यास्तु, तथा च नियतावधिकत्वासिद्ध्या न कार्यस्य सहेतुकत्वसिद्धिरित्यत आह- **अनियतावधित्व** इति- अनियतावधित्वे धूमो यथा वह्निमवधिं कृत्वोत्पद्यते तथा वह्निभिन्नमपि कमप्यवधिं कृत्वोत्पद्येतेति न वह्निसद्भावानन्तरमेव धूमस्योत्पत्तिः, किन्तु वह्निसद्भावतः प्राक् तदव्यवहितोत्तरकालेऽपि च य कमप्यवधिं कृत्वा धूमो भवन् कादाचित्कः स्यादिति तस्य कादाचित्कत्वस्वभावो व्याहन्येत, एवं निरवधित्वेऽपि ये ये निरवधय आकाशादयो न ते कादाचित्कत्वस्वभावा इति निरवधिर्धूमोऽपि कादाचित्कत्वस्वभावो न भवेदित्येवं कादाचित्कत्वस्वभावव्याकोपान्नियतावधित्वे ततः सहेतुकत्वं स्वीकर्तव्यमेवेत्यर्थः। एतदेवाह- **तत्स्वाभाव्ये चेति**- कार्यस्य नियतावधिकत्वस्वाभाव्ये चेत्यर्थः। उक्तार्थे उदयनाचार्यवचनसंवादमाह- **तदुक्तमुदयनेनेति**। **हेत्विति**- अकस्माद् भवतीत्यनेनाहेतुतो भवतीत्यर्थाश्रयणाद्धेतुनिषेधो न, अकस्मादित्यत्राकारस्य भवतीतिक्रियासम्बन्धाश्रयणाद् भवनप्रतिषेधो न, हेतुतो यद् भवनं तत्प्रतिषेधो न, अकस्मादित्यस्योक्तदिशा स्वस्मादित्यर्थकरणात् स्वविधिः- स्वस्मादेव स्वमुत्पद्यत

अथाकाशत्वादीनां( नाम )कदाचित्कत्ववत् कादाचित्कत्वमपि न सहेतुकत्वसाधकमिति चेत् ? न,— आकाशत्वादीनां सर्वत्र सत्त्वे आकाशादिस्वभावत्वाभावप्रसङ्गात्, तत्स्वभावत्वं च धर्मिग्राहकमानसिद्ध-मिति हेतुं विनापि देशनियमस्तेषामिति । अथैवं कादाचित्कत्वमपि घटादिस्वभावत्वादेव हेतुं विनापि

इत्यपि न, अकस्मादित्यस्योक्तरीत्याऽलीकादित्यर्थकरणादलीकादेव कार्यमुपजायत इत्येवमनुपाख्यस्यालीकस्य विधिर्न च—नैव, अश्वकर्णादिवत् स्वभावादित्यस्यार्थे निरूढ एवायमकस्मादिति शब्दः, तथा च स्वभावादेव कार्यं भवतीत्येवं स्वस्वभाववर्णना न, सर्वत्र हेतुः— **अवधेर्नियतत्वत** इति, नियतावधित्वादिति तदर्थः " **नैवमुपाधेर्नियतत्वत** " इत्यस्य स्थाने 'नैवमवधे-र्नियतत्वतः " इति पाठो युक्तः, न्यायकुसुमाञ्जलौ उदयनाचार्योक्तिरेवम्— " अकस्मादेव भवतीति चेत् ? न—' हेतु-भूति-निषेधो न स्वा-ऽनुपाख्यविधिर्न च । स्वभाववर्णना नैवमवधेर्नियतत्वतः ॥ ५ ॥ " हेतुनिषेधे भवनस्यानपेक्षत्वेन सर्वदा भवनमविशेषात्, भवनप्रतिषेधे प्रागिव पश्चादप्यभवनमविशेषात्, उत्पत्तेः पूर्वं स्वयमसतः स्वोत्पत्तावप्रभुत्वेन स्वस्मादिति पक्षानुपपत्तेः, पौर्वापर्यनियमश्च कार्यकारणभावः, न चैकं पूर्वमपरं च तत्त्वस्य भेदाधिष्ठानत्वात्, अनुपाख्यस्य हेतुत्वे प्रागपि सत्त्वप्रसक्तौ पुनः सदातनत्वापत्तेः, स्यादेतत्— नाकस्मादिति कारणनिषेधमात्रं वा भवनप्रतिषेधो वा, स्वात्महेतुकत्वं वा, निरुपाख्यहेतुकत्वं वाऽभिधित्सितम्, अपि त्वनपेक्ष एव कश्चिन्नियतदेशवन्नियतकालस्वभाव इति ब्रूमः— " निरवधित्वेऽ-नियतावधिकत्वे वा कादाचित्कत्वव्याघातात्, न ह्युत्तरकालसिद्धत्वमात्रं कादाचित्कत्वम्, किन्तु प्रागसत्त्वे सति सावधित्वे तु स एव प्राच्यो हेतुरित्युच्यते, अस्तु प्रागभाव एवावधिरिति चेत् ? न— अन्येषामपि तत्काले सत्त्वात्, अन्यथा तस्यैव निरूपणानुपपत्तेः, तथा च न तदेकावधित्वमविशेषात्, इतरनिरपेक्षस्य प्रागभावस्यावधित्वे प्रागपि तदवधेः कार्यसत्त्व-प्रसङ्गात्, सन्तु ये केचिदवधयो न तु तेऽपेक्ष्यन्त इति स्वभावार्थ इति चेत् ? नापेक्ष्यन्त इति कोऽर्थः ? किं न नियताः ? आहोस्विन्नियता अप्यनुपकारकाः ? प्रथमे धूमो दहनवद्गर्दभमप्यवधीकुर्यात्, नियामकाभावात्, द्वितीये तु किमुपकारा-न्तरेण ? नियमस्यैवापेक्षार्थत्वात्, तस्यैव च कारणात्मत्वात्, ईदृशस्य स्वभाववादस्येष्टत्वात् " इति । ननु यथाकाशत्वादिषु क्वाचित्कत्वं— गगनादिरूपनियतदेशवृत्तित्वस्वभावो वर्तते, न च तत्र कश्चिद् हेतुरिति स स्वभावो न सहेतुकत्वसाधकस्तथा घटादिषु कादाचित्कत्वं— नियतकालवृत्तित्वस्वभावो वर्तते, न च तत्रापि कश्चिद् हेतुरिति स स्वभावो न सहेतुकत्वसाधको नियतवृत्तितासाम्यादित्याशङ्कते— **अथेति**— " **(नाम) कदाचित्कत्ववत्** " इति स्थाने " क्वाचित्कत्ववत् " इति पाठः सम्यक्, 'आकाशत्वादीनाम्' इत्यादिपदाच्चित्यवृत्त्यसाधारणतत्तद्धर्माणामुपग्रहः, आकाशत्वादीना हेतुमन्तरैव यथा नियतदेशवृत्तिता तथा घटादीनामपि हेतुमन्तरैव नियतकालवृत्तिता भविष्यति, यदि नियतकालवृत्तिता हेतुमन्तरा न भवेत्र भवेत् तर्हि नियतदेशवृत्तितापि हेतुमन्तरेति शङ्काशयः। आकाशत्वादीनामाकाशस्वभावत्वादेव हेतुमन्तरापि नियतदेशवृत्तिता भविष्यतीत्यभिप्रायवान् समाधत्ते— **नेति** । **इतीति**— इतिशब्दो हेतौ वर्तते, तथा च निरुक्तहेतोः, आकाशत्वादीनामाकाश-स्वभावत्वादेवेत्यर्थः । **हेतुं विनापि** कारणमन्तरापि, कारणे सति तु देशनियमो भवतीह तु कारणमन्तरापि देशनियम इत्यर्थस्यापि नाम्रेडनम् । **तेषाम्** आकाशत्वादीनाम् । **देशनियमः** गगनादिदेश एव वृत्तिर्न त्वन्यत्र इति नियमो भवतीति शेषः । नन्वाकाशत्वादीनामाकाशादिस्वभावत्वेऽपि देशनियमः कथम् ? कथं न सर्वत्र वृत्तिरित्याकाङ्क्षायामाह— **आकाश-त्वादीनामिति**— आकाशत्वादीनां सर्वत्र वृतित्वे आकाशादिस्वभावत्वमेव न स्यात्, तद्भिन्नतो व्यावृतत्वे सति तद्वृत्ति-धर्मस्यैव तत्स्वभावत्वादित्यर्थः, तथा चाकाशत्वादीनामाकाशस्वभावत्वमन्यथानुपपद्यमानमाकाशादिरूपदेश नियमयति, नान्यः कश्चिदत्र हेतुरिति भावः । नन्वाकाशत्वादीनामाकाशस्वभावत्वमिति कुतोऽवधारितमित्याकाङ्क्षायामाह— **तत्स्वभावत्वं च** आकाशत्वादीनामाकाशस्वभावत्व पुनः, **धर्मिग्राहकेति**— आकाशत्वस्य धर्मी आकाशः, तद्ग्राहक मानमनुमानम्— ' शब्दो द्रव्यसमवेतो विशेषगुणत्वाद् रूपादिवत् ' इति सामान्यतो द्रव्याश्रितत्वसाधकानुमानतो भूम्यादिप्रसिद्धाष्टद्रव्यसमवेतत्वबाधे सति ' पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यसमवेतोऽष्टद्रव्यासमवेतत्वे सति द्रव्यसमवेतत्वाद् यन्नैव तन्नैव यथा रूपादि ' इति परिशेषानु-मानम्, तेन सिद्धमिति । नन्वाकाशत्वादीनामाकाशादिस्वभावत्वाद् यथा हेतु विनैवाकाशादिव्यतिरिक्तघटादिदेशव्यावृत्तत्वं तथा कादाचित्कत्वमपि घटादिस्वभावत्वादेव हेतुं विनैव घटाद्यतिरिक्ताकाशादिव्यावृत्तमिति दुर्दुरूटः स्वभाववादी शङ्कते— **अथैवमिति** । नहि कादाचित्कत्वं यदा कदाचित् सत्त्वमात्रं येन हेतु विनैव भवेत्, किन्तु पूर्वकालासत्वे सत्त्वम्,

गगनादिव्यावृत्तमस्त्विति चेत् ? न– कादाचित्कत्वस्यावधिनियतत्वात्। सन्त्ववधयो न त्वपेक्ष्यन्त इति चेत् ? न– नियतपश्चाद्भावित्वस्यैवापेक्षार्थत्वात्, अन्यथा गर्दभाद् धूम इत्यपि प्रतीयेत । तन्नियतत्वेऽपि वद्गतोपकाराजनकस्य कथं तद्धेतुजनकत्वमिति चेत् ? उपकारो हि कार्यमिति तद्गतकार्यहेतुत्वस्य तद्धेतुत्वेऽतन्त्रत्वात्, अन्यथोपकारहेतुत्वाय उपकारेऽप्युपकारान्तरस्वीकारे अनवस्थापत्तेः, तर्हि घटादिनियतत्वं कपालादेरेव न तन्त्वादाविति कुत इति चेत् ? स्वभावादेवेति गृहाण, अथ तथापि ग्राहकाभावात् तदसिद्धिः, न च धूमादौ वह्न्यादेरन्वय-व्यतिरेकानुविधायित्वज्ञानसचिवं वह्न्यादिप्रत्यक्षमेव हेतुहेतुमद्भावग्राहकम्, धूममात्रेऽन्वय-व्यतिरेकज्ञानासम्भवात्, यत्किञ्चिद्धूमे रास-

---

त्त्वावधिनियतत्वात् सहेतुकत्वव्याप्तमेवेति हेतुं विना न तस्य गगनादिव्यावृत्तत्वमिति समाधत्ते– **नेति** । समाधानाभिसन्धिमजानानः परः शङ्कते– **सन्त्ववधय** इति । **न त्वपेक्ष्यन्त** इति- कार्येणावधयो नापेक्ष्यन्ते, कार्यस्य नावध्यपेक्ष्यत्वमित्यर्थः । तदपेक्षत्वं तदनन्तरभावित्वमेव, तच्च कार्यस्यावध्यव्यवहितोत्तरक्षणभाविनोऽप्यस्तीति कथं नावध्यपेक्ष्यत्वं कार्यस्येति समाधत्ते– **नेति** । **नियतपश्चाद्भावित्वस्यैव** नियमत उत्तरकालोत्पत्तिकत्वस्यैव । **अन्यथा** नियतपश्चाद्भावित्वस्यापेक्षार्थत्वाभावे । **गर्दभादिति**– सामान्यतो वह्नेः पश्चाद्भावित्वस्येव गर्दभात् पश्चाद्भावित्वस्यापि धूमे सत्त्वमिति धूमः स्वोत्पत्तौ वह्निमिव गर्दभमप्यवधीकुर्यात्, तथा च वह्नेर्धूम इत्येव यथा प्रतीयते तथा गर्दभाद् धूम इत्यपि प्रतीयेतेत्यर्थः । ननु वह्नेर्धूमनियतत्वेऽपि धूमगतोपकाराजनकत्वान्न तज्जनकत्वमित्याशङ्कते– **तन्नियतत्वेऽपीति**– अवधीनां कार्यनियतत्वेऽपीत्यर्थः । "**तद्धेतुजनकत्व**" इत्यस्य स्थाने "तज्जनकत्व" इति पाठो युक्तः । समाधत्ते– **उपकार** इति । **हि** यतः । कार्यगतोपकारः कार्यगतकार्यमेव, एवं च कार्यगतकार्यजनकस्य कार्यजनकत्वमिति स्यात्, तच्च न युक्तं कार्यगतकार्यजनकत्वस्य कार्यजनकत्वेऽप्रयोजकत्वादित्यर्थः । **अन्यथा** तद्गतोपकारलक्षणकार्यजनकत्वस्य तज्जनकत्वाप्रयोजकत्वाभ्युपगमे । **उपकारहेतुत्वाय** कार्यगतोपकारहेतुत्वार्थम् । **उपकारेऽपि** उपकारात्मककार्येऽपि, उपकारात्मककार्यजनकत्वं तदैव भवेद् यद्युपकारात्मककार्यगतोपकारजनकत्वं स्याद्, एवमुपकारात्मककार्यगतोपकारात्मककार्यजनकत्वमप्युपकारात्मककार्यगतोपकारात्मककार्यगतोपकारजनकत्वं स्यादित्येवमनवस्थाप्रसङ्गादित्यर्थः । ननु कार्यगतोपकाराजनकस्यापि कार्यनियतत्वाभ्युपगमे घटादिगतोपकाराजनकस्य कपालादेर्घटादिनियतत्व भवति न तन्त्वादेरित्यत्र किं नियामकम् ? नियामकाभावे तु तन्त्वादेरपि घटादिनियतत्वं प्रसज्येतेत्याशयेन पृच्छति– **तर्हीति** । कपालादेरेवायं स्वभावो यदुत– स घटादिनियतो भवति न तन्त्वादेरित्युत्तरयति– **स्वभावादेवेति** । **इति गृहाण** इति जानीहि । नन्वेवं कपालत्वेन कपालस्य घटं प्रति कारणत्वं घटत्वेन घटस्य कपालकार्यत्वमित्युपगत भवेत्, एवं धूमत्वेन वह्नित्वेन धूमवह्न्योः कार्यकारणभाव इति, तच्च न सम्भवति– कार्यकारणभावग्राहकप्रमाणाभावेन कार्यकारणभावस्यैवासिद्धेरित्याशङ्कते– **अथेति** । **तथापि** स्वभावान्नियतत्वसम्भवेऽपि । **ग्राहकाभावात्** कार्यकारणभावग्राहकप्रमाणाभावात्, **तदसिद्धिः** कार्यकारणभावासिद्धिः । वह्निसत्त्वे धूमसत्त्वं वह्न्यभावे धूमाभाव इत्येवं वह्निधूमयोर्यावन्वय-व्यतिरेकौ तत्सहकृतं वह्न्यादिप्रत्यक्षमेव वह्नि-धूमयोः कार्यकारणभावग्राहकं प्रमाणमित्याशङ्क्य प्रतिक्षिपति– **न चेति** । **धूमादाविति**– धूमादौ यद् वह्न्याद्यन्वयानुविधाय्यन्वयित्व यच्च वह्न्यादिव्यतिरेकानुविधायिव्यतिरेकित्व तदुभयज्ञानसहकृतमेव वह्न्यादिप्रत्यक्षमेव कार्यकारणभावग्राहकमित्यर्थः । निषेधे हेतुमाह– **धूममात्र** इति– देशान्तरधूमे वह्न्यन्वयाविधाय्यन्वयित्वस्य वह्निव्यतिरेकानुविधायिव्यतिरेकित्वस्य च ज्ञानासम्भवेन धूममात्रे सर्वस्मिन् धूमेऽर्थाद् धूमत्वावच्छिन्ने वह्न्यन्वय-व्यतिरेकानुविधाय्यन्वय-व्यतिरेकज्ञानासम्भवान्न तत्सचिवं वह्न्यादिप्रत्यक्षं कार्यकारणभावग्राहकमित्यर्थः । यदि च यत्किञ्चिद्धूमे वह्न्यन्वय-व्यतिरेकित्वज्ञानसहकृतं वह्न्यादिप्रत्यक्षं वह्निधूमयोः कार्यकारणभावस्य ग्राहकमुपेयते तदा यत्किञ्चिद्धूमे रासभायन्वय-व्यतिरेकानुविधाय्यन्वय व्यतिरेकित्वज्ञानमप्यस्तीति तत्सचिवं रासभादिप्रत्यक्षमपि धूमरासभायोः कार्यकारणभावग्राहक भवेदिति धूमं प्रति रासभादेरपि कारणत्वं प्रसज्येतेति प्रतिक्षेपहेतुमुपदर्शयति– **यत्किञ्चिद्धूम** इति । **तथाज्ञानात्** अन्वय-व्यतिरेकानुविधाय्यन्वय-व्यतिरेकज्ञानात् । ननु क्वचिद् रासभादिकमन्तरेणापि धूमोत्पत्तिर्दृश्यत इति व्यतिरेकव्यभिचारज्ञानान्न धूम-रासभायोः कार्यकारणभावग्रह इत्याशङ्कते– **रास-**

भादेरपि तथाज्ञानात्, रासभादेर्व्यभिचारज्ञानान्न तद्ग्रह इति चेत् ? न– वह्न्यादेरपि व्यभिचारशङ्कासाम्राज्यादिति, धूमाद्यर्थिनो वह्न्यादौ प्रवृत्तिश्च सम्भावनयैवोपपद्यत इति परमतमिति चेत् ? न– सामान्यव्यभिचारा-ऽनुगतागुरुविशेषान्तरानुपस्थितिदशायां यत्किञ्चिद्धूमवह्न्योस्तद्ग्रहसामग्र्या एव वह्निधूममात्रे तद्ग्राहकत्वात्, सति लाघवज्ञाने व्यभिचारशङ्काया अप्रतिबन्धकत्वात्, रासभादौ तु व्यभिचारनिर्णय एव, असति तन्निर्णये तत्र धूमहेतुत्वग्रहेऽपि भ्रमत्वमेव ग्राह्याभावात्, अन्यथासिद्धनियतपूर्ववर्तित्वं हि हेतुत्वम्, तथा च वह्न्यादेरवधिभूतस्य धूमादिनियतपूर्ववर्तित्वादनन्यथासिद्धत्वाच्च तद् दुर्निवारम्। यागा-ऽदृष्टादौ स्वर्गादिनिष्ठकार्यतानिरूपितकारणताग्रहश्चावच्छेदकविनिर्मोकेण शब्दानुमानादिनैव, तत्प्रामाण्यस्यापि तत्र व्यवस्थापितत्वात्। तृणा-ऽरणि-मण्यादीनां वह्निकारणताग्रहेऽपीयमेव रीतिः,

---

**भादेरि**ति। **न तद्ग्रहः** न धूम रासभयोः कार्यकारणभावग्रहः। देशान्तरे कालान्तरे वा वह्निं विनाऽपि धूमो भविष्यतीति व्यतिरेकव्यभिचारशङ्कया वह्नि धूमयोरपि कार्यकारणभावग्रहो न स्यादिति समाधत्ते– **न– वह्न्यादेरपी**ति। ननु धूमवह्न्योर्न यदि कार्यकारणभावस्तदा धूमरूपेष्टसाधनत्वस्य वह्नौ ज्ञानाभावाद् धूमार्थिनो वह्न्यानयनादौ प्रवृत्तिर्न स्याद्, एवं भोजनादेरपि तृप्त्यादिकं प्रति कारणत्वाभावेन तृप्त्याद्यर्थिनो भोजनादपीष्टसाधनत्वज्ञानाभावात् प्रवृत्तिर्न भवेदित्यत आह– **धूमाद्यर्थिन** इति। **सम्भावनयैव** प्रायो वह्न्यादेर्धूमादिर्भवतीति सम्भावनयैव इष्टसाधनत्वसंशयादपि कृषीवलादेः कृष्यादिकरणे प्रवृत्तिदर्शनेनेष्टसाधनत्वप्रमितित्वेनेष्टसाधनतानिश्चयत्वेन वेष्टसाधनताज्ञानस्य प्रवृत्तिं प्रति कारणत्वाभावादित्याशयः। **इति परमतम्** एवस्वरूपं कार्यकारणभावापलापिमतम्। समाधत्ते– **ने**ति। **सामान्ये**ति– धूमं प्रति वह्नेर्द्रव्यत्वेन तेजस्त्वादिना वा कारणत्वे व्यभिचारः सकलवह्न्यनुगतवह्नित्वापेक्षयाऽगुरोर्विशेषान्तरस्यावान्तरसामान्यस्यानुपस्थितिश्चेति तद्दशायां यत्किञ्चिद्धूमवह्न्योः कार्यकारणभावग्रहस्य या यत्किञ्चिद्धूमवह्न्यन्वयव्यतिरेकग्रहसहकृतवह्निधूमादिप्रत्यक्षलक्षणा सामग्री तस्या एव वह्निधूममात्रे वह्निसामान्य धूमसामान्ययोः, **तद्ग्राहकत्वात्** कार्यकारणभावग्राहकत्वात्, वह्न्याद्यन्यतमत्वापेक्षया वह्नित्वं लघ्विति **लाघवज्ञाने सति** धूमं प्रति वह्निसामान्यस्य वह्नित्वेन कारणत्वग्रहे क्वचिद् वह्निं विनाऽपि धूमो भविष्यतीति **व्यभिचारशङ्कायाः** अप्रतिबन्धकत्वादित्यर्थः। ननु रासभत्वादिकमपि रासभादावनुगतं सामान्यरूपत्वाच्चातद्व्यावृत्त्याद्यपेक्षया लघ्विति तेनाविरूपेण रासभादेर्धूमं प्रति कारणत्वग्रहः किं न स्यादित्यत आह– **रासभादौ त्वि**ति। **व्यभिचारनिर्णय एव** रासभाद्यभावेऽपि वह्न्यादिघटितसामग्र्या धूमोत्पत्तेर्दर्शनाद् व्यभिचारनिर्णय एव, स च कारणत्वग्रहं प्रति प्रतिबन्धक इति न धूमं प्रति रासभादेः कारणत्वग्रह इत्यर्थः। यदा च निरुक्तव्यभिचारग्रहो नास्ति तदा निरुक्तसामग्र्या रासभादेरपि धूमं प्रति कारणत्वग्रहो भवत्येव, किन्तु रासभादौ धूमकारणत्वाभावेऽपि धूमकारणग्रहो भवन् भ्रम एव, स च न वस्तुसाधक इति न ततो धूमं प्रति रासभादेः कारणत्व सिद्ध्यतीत्याह– **असती**ति। **तन्निर्णये** व्यभिचारनिर्णये। **तत्र** रासभादौ। **ग्राह्याभावात्** ग्राह्यस्य धूमं प्रति रासभादेः कारणत्वस्याभावात्। कारणत्वं निरुच्य तस्य धूमं प्रति वह्न्यादौ सद्भावमावेदयति– **अन्यथे**ति– अन्यथासिद्धिशून्यत्वे सति कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वं कारणत्वमित्यर्थः। **तथा च** कारणत्वस्य निरुक्तस्वरूपत्वे च। **तत्** कारणत्वम्। ननु स्वर्गत्वादेर्दुःखासम्भिन्नसुखविशेषादिरूपस्यादर्शनात् कथं यागत्वेन स्वर्गत्वेन कार्यकारणभावग्रहः, धर्माधर्मगतमदृष्टत्वं त्वतीन्द्रियत्वादेव न प्रत्यक्षमिति कथं स्वर्गत्वेनादृष्टत्वेन कार्यकारणभावोऽप्यन्वयव्यतिरेकग्रहसहकृतप्रत्यक्षप्रमाणग्राह्य इत्यत आह– **यागादृष्टादावि**ति। ननु कार्यकारणभावापलापिना चार्वाकेण प्रत्यक्षस्यैव प्रामाण्यं स्वीक्रियते, न शब्दानुमानादेरिति कथं ततो यागा-ऽदृष्टादौ स्वर्गादिजनकत्वग्रह इत्यत आह– **तत्प्रामाण्यस्यापी**ति– शब्दा-ऽनुमानादिप्रामाण्यस्यापीत्यर्थः। **तत्र** उदयनाचार्यादिप्रणीतकुसुमाञ्जल्यादौ, तत्रानुमानप्रामाण्यव्यवस्थापको ग्रन्थश्चायम्–

"शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम्। व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥ १ ॥" इति, कालान्तरे कदाचिद् व्यभिचरिष्यतीति कालं भाविनमाकलय्य शङ्केत, तदाकलनं च नानुमानमवधीर्य कस्यचित्, मुहूर्तयामा-ऽहोरात्र-पक्ष-मास-र्त्वयन-संवत्सरादयो हि भाविनो भवन्मुहूर्ताद्यनुमेया एव, अनवगतेषु स्मरणस्याप्यनाशङ्कनीयत्वात्,

अनाकलने वा क्रमाश्रित्य व्यभिचारः शङ्क्येत, तथा च सुतरामनुमानस्वीकार., एवं च देशान्तरेऽपि वक्तव्यम्, स्वीकृतमनुमानं सुहृद्भावेन पृच्छामः कथमाशङ्का निवर्तनीयेति चेत् ? न- यावदाशङ्कं तर्कप्रवृत्तेः, तेन हि वर्तमानेनोपाधिकोटौ तदायत्तव्यभिचारकोटौ वाऽनिष्टमुपनयतेच्छा विच्छिद्यते, विच्छिन्नविपक्षेच्छश्च प्रमाता भूयोदर्शनोपलब्धसाहचर्यं लिङ्गमनाकुलोऽधितिष्ठति, अधिष्ठिताच्च करणात् क्रियापरिनिष्पत्तिरिति किमनुपपन्नम् । ननु तर्कोऽप्यविनाभावमपेक्ष्य प्रवर्तते, ततोऽनवस्थया भवितव्यम्, न- शङ्काया व्याघातावधित्वात्, तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातादयो नावतरन्तीति लोकमर्यादा, नहि हेतुफलभावो न भविष्यतीति शङ्कितुमपि शक्यते, तथा सति शङ्कैव न स्यात्, सर्वं मिथ्या भविष्यतीत्यादिवत्, तथाप्यतीन्द्रियोपाधिनिषेधे किं प्रमाणमित्युच्यतामिति चेत् ? न वै कश्चिदतीन्द्रियोपाधिः प्रमाणसिद्धोऽस्ति यस्याभावे प्रमाणमन्वेषणीयम्, केवलं साहचर्ये निबन्धनान्तरमात्रं शङ्क्यते, ततः शङ्कैव फलतः स्वरूपतश्च निवर्तनीया, तत्र फलमस्याविपक्षस्यापि जिज्ञासा तर्कादाहत्य निवर्तते, ततोऽनुमानप्रवृत्तौ शङ्कास्वरूपमपीति सर्वं सुस्थम्, न चैतदागमम्, न्यायाङ्गतया तर्कं व्युत्पादयतः सूत्रकारस्याभिमतत्वात्, अन्यथा तद्व्युत्पादनवैयर्थ्यादिति । अनुमानस्य प्रामाण्ये तत एव सवादिप्रवृत्तिजनकत्वहेतुना शब्दजधियोऽपि प्रामाण्यं सिद्ध्यत्येव, प्रमाणं भवतु शब्दः किन्तु तस्यानुमानेऽन्तर्भाव इति न पृथक् प्रमाणमिति वैशेषिकमतं चाशङ्क्य कुसुमाञ्जलावेव दूषितम्, तद्ग्रन्थश्चायम्- "शब्दोऽपि न बाधकमनुमानानतिरेकादिति वैशेषिकादयः, तथाहि- यद्यप्येते पदार्था मिथः संसर्गवन्तो वाक्यत्वादिति व्यधिकरणम्, पदार्थत्वादिति चानैकान्तिकम्, पदैः स्मारितत्वादित्यपि तथा, यद्यपि चैतानि पदानि स्मारितार्थसंसर्गवन्ति तत्स्मारकत्वादित्यादौ साध्याभावः, नह्यत्र मत्वर्थः संयोगः समवायस्तादात्म्यं विशेषण-विशेष्यभावो वा संभवति, ज्ञाप्यज्ञापकभावस्तु स्वातन्त्र्येणानुमानान्तर्भाववादिभिर्नेष्यते, न च लिङ्गतया ज्ञापकत्वम्, यल्लिङ्गस्य विषयस्तदेव तस्य, परस्पराश्रयप्रसङ्गात् तदुपलम्भे हि व्याप्तिसिद्धिस्तत्सिद्धौ च तदनुमानमिति, तथाप्याकाङ्क्षादिमद्भिः पदैः स्मारितत्वात् गामभ्याजेति पदार्थवदिति स्यात्, न च विशेषासिद्धिर्दोषः, संसर्गस्य ससृज्यमानविशेषादेव विशिष्टत्वात्, यद्वा एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकानि आकाङ्क्षादिमत्त्वे सति तत्स्मारकत्वात्, गामभ्याजेतिपदवत्, न चैवमर्थासिद्धिः, ज्ञानावच्छेदकतयैव तत्सिद्धेः, तस्य च संसृज्यमानोपहितस्यैवावच्छेदकत्वान्न विशेषाप्रतिलम्भ इति, अत्रोच्यते- "अनैकान्तः परिच्छेदे सम्भवे च न निश्चयः । आकाङ्क्षासत्तया हेतुर्योग्यासत्तिरबन्धना ।। १ ।।" एते पदार्था मिथः संसर्गवन्त इति संसृष्टा एवेति नियमो वा साध्य. ? सम्भावितससर्गा वा ? न प्रथम.- अनाप्तपदकदम्बस्मारितैरनेकान्तात्, आप्तोक्त्या विशेषणीयमिति चेत् ? न- वाक्यार्थप्रतीतेः प्राक् तदसिद्धेः न ह्यविप्रलम्भकत्वमिहाप्तशब्देन विवक्षितम्, तदुक्तेरपि पदार्थसंसर्गव्यभिचारात्, अपि तु तदनुभवप्रामाण्यमपि, न चैतच्छक्यमसर्वज्ञेन सर्वदा सर्वविषये सत्यज्ञानवानयमिति निश्चेतुम्, भ्रान्तेः पुरुषधर्मत्वात्, यत्र क्वचिदाप्तत्वमनाप्तस्याप्यस्तीति न तेनोपयोगः, ततोऽस्मिन्नर्थेऽयमभ्रान्त इति केनचिदुपायेन ग्राह्यम्, न चैतत् संसर्गविशेषमप्रतीत्य शक्यम्, बुद्धेरर्थभेदमन्तरेण निरूपयितुमशक्यात्, पदार्थमात्रे चाभ्रान्तत्वसिद्धौ न किञ्चित्, अनाप्तसाधारण्यात्, एतेषां ससर्गेऽयमभ्रान्त इति शक्यमिति चेत् ?, न- एतेषां संसर्गे इत्यस्या एव बुद्धेरसिद्धेः, अननुभूतचरे स्मरणायोगात्, तदनुभवस्य लिङ्गाधीनतया तस्य च विशेषणासिद्धत्वेनानुपपत्तेरिति । नापि द्वितीयः- योग्यतामात्रसिद्धावपि संसर्गानिश्चयात्, वाक्यस्य च तदेकफलत्वात्, योग्यतामात्रस्य प्रागेव सिद्धेः, अन्यथा तदसिद्धावासन्नसाकाङ्क्षपदस्मारितत्वादित्येव हेतुः स्यात्, तथा चाग्निना सिञ्चेदित्यादिना स्मारितैरनेकान्तः, तथाविधानां सर्वथा संसर्गायोग्यत्वादिति । द्वितीयेऽपि प्रयोगे हेतुराकाङ्क्षादिमत्त्वे सतीति, तत्र केयमाकाङ्क्षा नाम, न तावद् विशेषणविशेष्यभावः, तस्य ससर्गस्वभावतया साध्यत्वात् नापि तद्योग्यता, योग्यतयैव गतार्थत्वात् ?, नाप्यविनाभावः, नीलं सरोजमित्यादौ तदभावेऽपि वाक्यार्थप्रत्ययात्, तत्रापि सामान्याक्षिप्तविशेषयोरविनाभावोऽस्तीति चेत् ?, न- अहो विमलं जल नद्याः, कच्छे महिषश्चरतीत्यादौ वाक्यभेदानुपपत्तिप्रसङ्गात् ?, नापि प्रतिपत्तुर्जिज्ञासा, पटो भवतीत्यादौ शुक्लादिजिज्ञासायां रक्तः पटो भवतीत्यस्यैकदेशवत् सर्वदा वाक्यापर्यवसानप्रसङ्गात्, गुण क्रियाद्यशेषविशेषजिज्ञासायामपि पदस्मारितविशेषजिज्ञासा आकाङ्क्षा, पट इत्युक्ते किंरूपः कुत्र किं करोतीत्यादिरूपजिज्ञासा, तत्र भवतीत्युक्ते किं करोतीत्येषैव परस्मारितविषया, न तु किंरूप इत्यादिरपि, यदा तु रक्त इत्युच्यते तदा किंरूप इत्येषाऽपि स्मारितविषया स्यात्, इति न किञ्चिदनुपपन्नमिति चेत् ? एवं तर्हि चक्षुषी निमील्य, परिभावयतु भवान्- किमस्या जातायामन्वयप्रत्ययोऽथ ज्ञातायामिति, तत्र प्रथमे नानया व्यभिचार-

**तृणत्वेन व्यभिचारज्ञानस्य तेनैव रूपेण कारणताग्रहविरोधित्वात्, अवच्छेदकौदासीन्येन तृणत्वसमाना-**

व्यावर्तनाय हेतुर्विशेषणीयः, मनःसंयोगादिवत् सत्तामात्रेणोपयोगात्, आसत्तियोग्यतामात्रेण विशिष्टस्तु निश्चितोऽपि न गमकोऽयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ व्यभिचारात्, द्वितीयस्तु स्यादपि, यद्यनुमानान्तरवत् तत्सद्भावेऽपि तज्ज्ञानवैधुर्यादन्वयप्रत्ययो न जायते, न त्वेतदस्ति, आसत्तियोग्यतामात्रप्रतिसन्धानादेव साकाङ्क्षस्य सर्वत्र वाक्यार्थप्रत्ययात्, निवृत्ताकाङ्क्षस्य च तदभावात्, कथमेष निश्चयः साकाङ्क्ष एव प्रत्येति न तु ज्ञाताकाङ्क्ष इति चेत्? तावन्मात्रेणोपपत्तावनुपलभ्यमानज्ञानकल्पनाऽनुपपत्तेः, अन्यत्र तथा दर्शनाच्च, यदा हि दूराद् दृष्टसामान्यो जिज्ञासते– कोऽयमिति, प्रत्यासीदंश्च स्थाणुरयमिति प्रत्येति, तदाऽस्य ज्ञातुमहमिच्छामीत्यनुव्यवसायाभावेऽपि स्थाणुरयमित्यर्थप्रत्ययो भवति, तथेहाप्यविशेषाद् विशेषोपस्थानकाले ससार्गावगतिरेव, न तु जिज्ञासाऽवगतिरिति, न च विशेषोपस्थानात् प्रागेव जिज्ञासावगतिः प्रकृतोपयोगिनी, तावन्मात्रस्यानाकाङ्क्षत्वात्, न चैवम्भूतोऽयमैकान्तिको हेतुः, यदा ह्ययमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामिति वक्तोच्चारयति श्रोता च व्यासङ्गादिना निमित्तेनायमेति पुत्र इत्यश्रुत्वैव राज्ञः पुरुषोऽपसार्यतामिति शृणोति तदाऽस्त्याकाङ्क्षादिमत्त्वे सति पदकदम्बत्वम्, न च स्मारितार्थसंसर्गज्ञानपूर्वकत्वमिति, स्यादेतत्, यावत्समभिव्याहृतत्वेन विशेषिते हेतौ नायं दोषः, कुतस्तर्हि कतिपयपदश्राविणः संसर्गप्रत्ययः, अलिङ्ग एव लिङ्गत्वाध्यारोपात्, एतावानेवायं समभिव्याहार इति तत्र श्रोतुरभिमानः, न– तत्संदेहेऽपि श्रुताऽनुरूपसंसर्गाऽवगमात्, भवति हि तत्र प्रत्ययो न जाने किमपरमनेनोक्तमेतावदेव श्रुतं यद् राज्ञः पुरुषोऽयमपसार्यतामिति, भ्रान्तिरसाविति चेत्? न तावदसौ दुष्टेन्द्रियजा, परोक्षाकारत्वात्, न लिङ्गाभासजा, लिङ्गाभिमानाभावेऽपि जायमानत्वात्, एतावत्पदकदम्बप्रतिसन्धानमेव ता जनयतीति चेत्? यद्येवमेतदेवादुष्टं तदभ्रान्तिं जनयत् केन वारणीयम्, व्याप्तिप्रतिसन्धान विनाऽपि तस्य ससर्गप्रत्यायने सामर्थ्यावधारणात्, चक्षुरादिवत्, नास्त्येव तत्र ससर्गप्रत्ययोऽससर्गाग्रहमात्रेण तु तथा व्यवहार इति चेत्? तर्हि यावत्समभिव्याहारेणापि विशेषणेनाप्रतीकारः, तथाभूतस्यानाप्तवाक्यस्य संसर्गज्ञानपूर्वकत्वाभावात्, अससर्गाग्रहपूर्वकत्वमात्रे साध्ये न व्यभिचार इति चेत्? एव तर्हि संसर्गो न सिद्ध्येत्, आप्तवाक्येषु सेत्स्यतीति चेत्?, न– सर्वविषयाप्तत्वस्यासिद्धेः, यत्र क्वचिदाप्तत्वस्यानैकान्तिकत्वात् प्रकृतविषये चाप्तत्वसिद्धौ संसर्गविशेषस्य प्रागेव सिद्ध्यभ्युपगमादित्युक्तम्, न च सर्वत्र जिज्ञासा निबन्धनम्, अजिज्ञासोरपि वाक्यार्थप्रत्ययात्, आकाङ्क्षापदार्थस्तर्हि कः? जिज्ञासां प्रति योग्यता, सा च स्मारिततदाक्षिप्तयोरविनाभावे सति श्रोतरि तदुत्पाद्यससर्गावगमप्रागभावः, न चैषोऽपि ज्ञानमपेक्षते, प्रतियोगिनिरूपणाधीननिरूपणत्वात् तदभावनिरूपणस्य च विषयनिरूप्यत्वादितीति। प्रत्यक्षमेवैकं प्रमाणमभ्युपगच्छतश्चार्वाकस्य प्रत्यक्षाभावादीश्वरमपलपतः शिक्षणमपि तत्रैव, तथा च तद्ग्रन्थः– "चार्वाकस्त्वाह– किं योग्यताविशेषाग्रहेण, यत्रोपलभ्यते तत्रास्ति विपरीतमस्ति, न चेश्वरादयस्तथा ततो न सन्तीत्येतदेव ज्यायः, एवमनुमानादिविलोप इति चेत्? नेदमनिष्टम्, तथा च लोकव्यवहारोच्छेद इति चेत्? न– सम्भावनामात्रेण तत्सिद्धेः, संवादेन च प्रामाण्याभिमानादिति, अत्रोच्यते– "दृष्टादृष्टयोर्न संदेहो भावाभावविनिश्चयात्। अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम्॥" सम्भावना हि सन्देह एव, तस्माच्च व्यवहारस्तस्मिन् सति स्यात्, स एव तु कुतः, दर्शनदशायां भावनिश्चयात्, अदर्शनदशायामभावावधारणात्, तथा च गृहाद् विनिर्गतश्चार्वाकवराको न निवर्तेत, प्रत्युत पुत्रदारधनाद्यभावावधारणात् सोरस्ताडं शोकविकलो विक्रोशेत्, स्मरणानुभवान्नैवमिति चेत्, न– प्रतियोगिस्मरण एवाभावपरिच्छेदात्, परावृत्तोऽपि कथं पुनरासादयिष्यति, सत्त्वादिति चेत्? अनुपलम्भकालेऽपि तर्हि सन्तीति न तावन्मात्रेणावधारणम्, तदैवोत्पन्ना इति चेत्? अनुपलम्भेन हेतूनां बाधात्, अबाधे वा स एव दोषः, अत एव प्रत्यक्षमपि न स्यात्– तद्धेतूनां चक्षुरादीनामनुपलम्भबाधितत्वात्, उपलभ्यन्त एव गोलकादय इति चेत्? न– तदुपलब्धेः पूर्वं तेषामनुपलम्भात्, न च यौगपद्यनियमः, कार्यकारणभावाद्" इति। अवच्छेदकविनिर्मोकेणान्यत्रापि कार्यकारणभाव इत्युपदर्शयति– **तृणाऽरणिमण्यादीनामिति।** **तृणत्वेनैवेति**– तृणत्वावच्छिन्नस्याभावेऽपि अरण्यादितो वह्नेर्भावेन तृणाभावे वह्निभावलक्षणव्यतिरेकव्यभिचारज्ञानस्य तृणत्वेनैव धर्मेण वह्निनिष्ठकार्यतानिरूपितकारणत्वस्य तृणे ग्रहे प्रतिबन्धकत्वादित्यर्थः। **अवच्छेदकौदासीन्येन** अवच्छेदकस्य कस्यचिदप्रवेशेन "**तृणत्वसमानाधिकरणताग्रहे**" इत्यस्य स्थाने "तृणत्वसामानाधिकरण्येन कारणताग्रहे" इति पाठो युक्तः, तृणं वह्निकारणमित्येवं कारणताग्रह इत्यर्थः। **विरोधाभावात्** तृणत्वेन व्यभिचारज्ञानस्याप्रतिबन्धकत्वात्। ननु कारणतायाः ससम्बन्धिकरूपदार्थत्वेन

धिकरणताग्रहे विरोधाभावात् । अवच्छेदकरूपानुपस्थितौ कथमवच्छेद्यकारणताग्रहः कारणताया ससम्बन्धिकपदार्थत्वेन तत्प्रत्यक्षे सम्बन्धिज्ञानस्य कारणत्वादिति चेत् ? न– " अयं घटः " इति समवायप्रत्यक्षे व्यभिचारात् । अथ येन समवायत्वादिना रूपेण ससम्बन्धिकता तेन रूपेण तत्प्रत्यक्षे तस्य हेतुत्वान्न व्यभिचार इति चेत् ? न– तथापि ससम्बन्धिकतावच्छेदकप्रकारकज्ञानत्वेन हेतुत्वमित्यत्र सम्बन्धिमात्रवृत्तित्वस्यैवावच्छेदकपदार्थत्वात्, प्रकृते च इयं वह्निव्यक्तिस्तृणजन्येति कारणताप्रत्यक्षस्यापि तृणकार्यताश्रयमात्रवृत्त्यैतद्वह्नित्वप्रकारकज्ञानसाध्यत्वसम्भवात्, यद्वा इयं वह्निव्यक्तिस्तृणजन्येति प्रत्यक्षस्यैतद्वह्नित्वावच्छिन्नकार्यतावगाहित्वेऽप्यवच्छेदकत्वांशे भ्रमत्वेऽपि कार्यतांशे प्रमात्वान्न कोऽपि दोषः । अथान्वय-व्यतिरेकाग्रहाप्रकारकजात्या कार्यत्वकल्पनाऽनौचित्यात् तथाभूतशक्त्या कारणत्वमेव

---

ससम्बन्धिकपदार्थप्रत्यक्षे सम्बन्धिज्ञानस्य कारणत्वादवच्छेदकरूपसम्बन्धिज्ञाने सत्येवावच्छेद्यकारणत्वग्रहो नान्यथेत्यवच्छेदकधर्मानुपस्थितौ कारणत्वग्रहो न सम्भवतीत्याशङ्कते– **अवच्छेदकरूपानुपस्थिताविति** । समाधत्ते– नेति– अय घट इति प्रत्यक्षे घटत्वप्रकारकेदंविशेष्यके समवायोऽपि संसर्गतया भासत इति समवायस्यापि तत् प्रत्यक्षं भवति, न च ततः प्राग् घटत्वेन घटस्य सम्बन्धिनः प्रत्यक्षं समस्ति यत् कारण भवेदिति सम्बन्धिप्रत्यक्षमन्तराऽपि ससम्बन्धिकसमवायज्ञानस्य भावेन व्यभिचारान्निरुक्तकार्यकारणभावस्यासम्भवादित्यर्थ. । नन्वयं घट इति प्रत्यक्षे समवायः संसर्गतयैव भासते न नित्यसम्बन्धत्वलक्षणसमवायत्वेन, निरुक्तसमवायत्वेनैत्र च तस्य ससम्बन्धिकपदार्थत्वमतस्तेन रूपेण तत्प्रत्यक्षत्वावच्छिन्नं प्रत्येव सम्बन्धिज्ञानस्य हेतुत्वादयं घट इति प्रत्यक्षस्य कार्यतावच्छेदकधर्मानाक्रान्तत्वान्न व्यभिचार इत्याशङ्कते– **अथेति** । **तेन रूपेण** समवायत्वेन रूपेण । **तत्प्रत्यक्षे** समवायप्रत्यक्षे । **तस्य** सम्बन्धिज्ञानस्य । समाधत्ते– नेति । **तथापि** उक्तप्रकारेण कार्यकारणभावाश्रयणेनायं घट इति समवायप्रत्यक्षे व्यभिचारपरिहारेऽपि । " **ससम्बन्धितावच्छेदकप्रकारकज्ञानत्वेन** " इत्यस्य स्थाने " ससम्बन्धिकतावच्छेदकप्रकारकप्रत्यक्षत्वावच्छिन्नं प्रति सम्बन्धितावच्छेदकप्रकारकज्ञानत्वेन " इति पाठो युक्तः । **सम्बन्धिमात्रेति**– तथा च ससम्बन्धिपदार्थवृत्तिप्रकारकप्रत्यक्षत्वावच्छिन्नं प्रति सम्बन्धिवृत्तिप्रकारकज्ञानत्वेन कारणत्वमित्यत्रैवोक्तकार्यकारणभावपर्यवसानम्, सम्बन्धत्वस्य ससम्बन्धिसमवायमात्रवृत्तित्वाभावात् संसर्गस्य संसर्गतयैव भानम्, तद्विशेषणस्य विशेषणत्वमेव न प्रकारत्वमिति सम्बन्धत्वस्यायं घट इति प्रत्यक्षे प्रकारत्वाभावात् ससम्बन्धिकसमवायमात्रवर्तिनः समवायत्वस्यापि तत्र प्रकारत्वाभावादयं घट इति समवायप्रत्यक्षस्य कार्यतावच्छेदकधर्मानाक्रान्तत्वात् तत्र व्यभिचारः परिहृत एव भवति । वह्नितृणयोः कार्यकारणभावे तृणनिष्ठकारणताया आश्रयतया सम्बन्धि तृण निरूपकतया वह्निव्यक्तिर्न तु वह्निमात्रं व्यभिचारेण तृणनिष्ठकारणताया वह्निमात्रनिरूपितत्वाभावात्, एवं च निरुक्तकारणताप्रत्यक्षमिय वह्निव्यक्तिस्तृणजन्येत्याकारकं तस्य तृणकार्यताश्रयवह्निव्यक्तिरूपसम्बन्धिमात्रवृत्त्येतद्वह्नित्वप्रकारकज्ञानजन्यत्वेन व्यभिचाराभावादित्याह– **प्रकृते चेति** । इयं वह्निव्यक्तिस्तृणजन्येति वह्नि-तृणयोः कार्यकारणभावप्रत्यक्षं तृणत्वावच्छिन्नकारणतानिरूपितैतद्वह्नित्वावच्छिन्नकार्यतावती वह्निव्यक्तिरियमित्याकारकत्वेन तृणनिरूपितवह्निनिष्ठकार्यतायामेतद्वह्नित्वावच्छिन्नत्वस्याभावेऽप्येतद्वह्नित्वावच्छिन्नत्वस्यावगाहनात् तदंशे भ्रमत्वेऽप्येतद्वह्निव्यक्तौ तृणनिरूपितकार्यतायाः सत्त्वात् तदंशे प्रमात्मकमेव, तस्य च वह्निनिष्ठतद्व्यक्तित्वप्रकारकज्ञानजन्यत्वमस्त्येवेति न कश्चिद् दोष इति कल्पान्तरमाह– **यद्वेति** । ननु तृणसत्त्वे एतद्वह्निसत्त्वं तृणाभावे एतद्वह्न्यभाव इत्येवमन्वय-व्यतिरेकग्रहो नात्र सम्भवति, एतद्वह्निव्यक्तेरपूर्वत्वेन तस्याः कदाचिदपि पूर्वं तृणतोऽभावाद् वह्न्यन्तरस्य तृणान्तरात् पूर्वं भावेऽपि तत्रैतद्वह्नित्वस्याभावादिति नैतद्वह्नित्वेन तृणत्वेन कार्यकारणभावग्रहः सम्भवति, तृणजन्यवह्निमात्रवर्तिवह्नित्वावान्तरजातेश्च नान्वय-व्यतिरेकग्रहप्रकारत्वमिति न तया कार्यकारणभावकल्पना युक्तेति तृणा-ऽरणि-मणिष्वेका वह्न्यनुकूला शक्तिरस्ति, तयैव तृणादीना वह्नित्वावच्छिन्न प्रति कारणत्वमिति तृणनिष्ठनिरुक्तशक्त्यवच्छिन्नकारणतानिरूपितकार्यतावच्छेदक वह्नित्वमेवेत्याशङ्कते– **अथेति** । " **अथान्वयव्यतिरेकाग्रहाप्रकारकजात्या** " इत्यस्य स्थाने " अथान्वय-व्यतिरेकग्रहाप्रकारजात्या " इति पाठो युक्तः, तथाकल्पनाऽनौचित्य चाप्रत्यक्षीभूतस्य वह्नित्वावान्तरजातित्रयस्य कल्पने गौरवादेव । **तथाभूतशक्त्या** अन्वय-व्यतिरेकग्रहाप्रकारीभूततृणारणिमण्यनुगतवह्न्यनु-

कल्प्यतां लाघवात् इति चेत् ? न- तृणादेः फूत्कारादिसहकारिनियमानुपपत्तेर्मणिफूत्कारादिनापि वह्न्याद्युत्पत्तिप्रसङ्गात्, तथा च फूत्कारादिजन्यविजातीयवह्नौ तृणत्वादिना हेतुत्वस्यावश्यकत्वात्, न च तृणफूत्कारादिसंयोगेष्वेव शक्तिरिति न तन्नियमानुपपत्तिः, तर्हि तृणत्वादिना तृणादीनामहेतुत्वेऽकारणत्वेनैव सामयिकशक्तिविशेषकल्पनप्रसङ्गात्, तथाभूताभावविशेषस्यैव वा तत्रौचित्यान्नायमपि । वह्नौ जातिभेदस्यानुभविकत्वादेव तत्तदवच्छिन्ने तृणत्वादिना हेतुत्वमित्यन्ये, वह्नित्वावच्छिन्ने विलक्षणो-

---

कूलशक्त्या । लाघवादिति- तथाभूता शक्तिरेकैवेत्यनेकजातिकल्पनाऽपेक्षयैकशक्तिकल्पने लाघवादित्यर्थः । फूत्कारसहकृतात् तृणादेव वह्न्युत्पत्तिर्निर्मन्थनसहकृतादरणेरेव वह्न्युत्पत्तिः सूर्यकिरणसंयोगसहकृतान्मणेरेव वह्न्युत्पत्तिरिति तृणादेः फूत्काराद्येव सहकारीति नियमो न भवेत्, फूत्कारादीनां वह्न्यनुकूलशक्तिमत एव सहकारित्वेन फूत्कारसचिवारण्यादितोऽपि वह्निरुत्पद्येतेति समाधत्ते- नेति । तथा च वह्निं प्रत्येकशक्तिमत्त्वेन तृणादीनां कारणत्वस्य कल्पयितुमशक्यत्वे च । फूत्कारादीत्यादिपदान्निर्मन्थनरविकिरणसंयोगयोरुपग्रहः, तृणत्वादिनेत्यत्रादिपदादरणित्वमणित्वयोरुपग्रहः, एवं च फूत्कारजन्यविजातीयवह्निं प्रति तृणत्वेन तृणस्य, निर्मन्थनजन्यविजातीयवह्निं प्रति अरणित्वेनारणेः, तरणिकिरणप्रतिफलनजन्यविजातीयवह्निं प्रति मणित्वेन मणेश्च हेतुत्वस्याऽऽवश्यकत्वादित्यर्थः । ननु तृणफूत्कारसंयोगे निर्मन्थनारणिसंबन्धे तरणिकिरणमणिसंयोगे च वह्न्यनुकूलशक्तिरेकोपेयते, तादृशशक्तिमत्त्वेन तृणफूत्कारसंयोगादीनां वह्निं प्रति कारणत्वे नोक्तदोषप्रसङ्ग इत्याशङ्क्य प्रतिक्षिपति- न चेति । न तन्नियमानुपपत्तिः न सहकारिनियमानुपपत्तिः । यत् कारणं तत् कार्यानुकूलशक्तिमत्, यच्च न कारणं न तत् कार्यानुकूलशक्तिमदिति कार्यकारणेषु कार्यानुकूलशक्तेरिव कार्याकारणेषु कार्याननुकूलशक्तेरपि स्वसमयसिद्धायाः कल्पनं स्याद्, एवं च तृणत्वादिना तृणादीनां वह्निकारणत्वाभावे तेष्वकारणत्वेन स्वसमयसिद्धस्य शक्तिविशेषस्य कल्पनं प्रसज्येतेति समाधत्ते- तर्हीति । तथाभूतेति- तृणफूत्कारसंयोगभिन्नत्वे सति अरणिनिर्मन्थनसम्बन्धभिन्नत्वे सति तरणिकिरणसंयोगभिन्नो यस्तद्भिन्नत्वरूपान्यतमत्वात्मकाभावविशेषस्यैव वा तत्र तृणफूत्कारसंयोगादिषु वह्निकारणतावच्छेदकतया कल्पनौचित्यप्रसङ्गादित्यर्थः । भवत्वन्यतमत्वेनैव कारणत्वं किं नश्छिन्नमित्यत आह- नायमपीति- अन्यतमत्वेन कारणत्वमपि न सम्भवति, अन्यतमत्वस्य भेदकूटावच्छिन्नभेदरूपतया तत्र कूटत्वस्यैकविशिष्टापरत्वात्मकत्वेन विशेष्य-विशेषणभावे विनिगमनाविरहादन्यतमत्वस्यानेकरूपतया तदवच्छिन्नकारणत्वस्याप्यनेकत्वप्रसङ्गादित्यर्थः । एवं च वह्नित्वावान्तरजातित्रयस्य प्रत्यक्षसिद्धस्यैव तृणादिजन्यतावच्छेदकत्वमिति विजातीयवह्नित्वावच्छिन्नं प्रति तृणत्वेन, विजातीयवह्नित्वावच्छिन्नं प्रति अरणित्वेन, विजातीयवह्नित्वावच्छिन्नं प्रति मणित्वेन कारणत्वमित्येवं कार्यकारणभावत्रयकल्पनमेव ज्याय इत्याह- वह्नौ जातिभेदस्येति । अन्ये इति- उदयनाचार्याः, तथा च तद्ग्रन्थः- "फूत्कारेण तृणादेरेव, निर्मन्थनेनारणेरेव, प्रतिफलिततरणिकिरणैर्मणेरेवेति प्रकारनियमवत् तेनैव व्यज्यमानस्य कार्यजातिभेदस्य भावात्, दृश्यते च पावकत्वाविशेषेऽपि प्रदीपः प्रासादोदरव्यापकमालोकमारभते, न तथा ज्वालाजालजटिलोऽपि दारुदहनो नितरां च कारीषः । यस्तु तं नाकलयेत् स कार्यसामान्येन कारणमात्रमनुमिनुयादिति किमनुपपन्नम्, एवं तर्हि धूमादावपि कश्चिदनुपलक्षणीयो विशेषः स्यात्, यस्य दहनापेक्षेति न धूमादिसामान्याद् वह्निसामान्यादिसिद्धिः, एतेन व्यतिरेको व्याख्यातः, तथा च कार्यानुपलब्धिलिङ्गभङ्गे स्वभावस्याप्यसिद्धेर्गतमनुमानेनेति चेत् ? प्रत्यक्षानुपलम्भगोचरो जातिभेदो न कार्यप्रयोजक इति वदतो बौद्धस्य शिरस्येष प्रहारः, अस्माकं तु यत्सामान्याक्रान्तयोर्ययोरन्वय-व्यतिरेकवत्ता तयोस्तथैव हेतुहेतुमद्भावनिश्चयः, तथा चावान्तरविशेषसद्भावेऽपि न नो विरोधः, किं पुनस्तार्णादौ दहनसामान्यस्य प्रयोजकं तृणादीनां विशेष एव नियतत्वादिति चेत् ? तेजोमात्रोत्पत्तौ पवनो निमित्तम्, अवयवसंयोगोऽसमवायी, तेजोऽवयवाः समवायिनः, इयमेव सामग्री गुरुत्ववद् द्रव्यसहिता पिण्डितस्य, इयमेव तेजोगतमुद्भूतस्पर्शमपेक्ष्य दहनम्, तत्रापि जलं प्राप्य दिव्यम्, पार्थिवं प्राप्य भौमम्, उभयं प्राप्यौदर्यमारभत इति स्वयमूहनीयमिति ।" अनन्तरमुल्लिखिते उदयनाचार्यग्रन्थ एव "इयमेव तेजोगतमुद्भूतस्पर्शमपेक्ष्य दहनम्" इत्युक्त्या प्राचीननैयायिकानामुदयनाचार्यप्रभृतीनामेव मतमेतत्, यदुत- वह्नित्वावच्छिन्ने विलक्षणोष्णवत्तेजः कारणमिति, युक्तं चैतत्, अन्यमतोपदर्शने वह्नित्वावान्तरवैजात्यवच्छिन्ने तृणत्वादिना कारणत्वोपदर्शनेऽपि वह्नित्वावच्छिन्ने

णस्पर्शवत्तेजः कारणमिति नव्याः, तेजस्त्वेन तत्र हेतुत्वम्, व्यणुकात्मकवह्नौ तृणत्वादिना, त्रसरेण्वादिनिष्ठवैजात्यावच्छिन्ने व्यणुकादिनिष्ठवह्नित्वेनेत्यतस्मात् कचिदेकान्तेन कचिच्च विकल्पेन, दण्डत्वादिना घटादौ तृणत्वादिना च वह्निविशेषादौ कारणतायुक्तागमबलात् तत्त्वज्ञानत्वेन कर्मविशेषत्वादिना च कारणताऽऽवश्यकीति नानुपायवादः श्रेयानिति नैयायिकादयः।

वयं तु ब्रूमः– तन्तोरेव पटो न कपालादेरिति, कुन इति प्रश्ने स्वभावादेवेति यदुत्तरं तत्र प्रश्नोत्तरे किं हेतुविषये, उत नियामकविषये? उभयत्रापि किं धर्म्यालम्बने, उत धर्मालम्बने? आद्ये–तन्तुजन्यकपालाजन्यपटे स्वभावो हेतुरित्यागतम्, स च स्वात्मैवेत्यात्माश्रयः, द्वितीयेऽपि स एव दोषः स्वस्य स्वनियामकत्वासम्भवात्, भेदगर्भनियामकस्यैव जिज्ञासितत्वाच्च, न तृतीयः– धर्महेतोरजिज्ञासि-

---

कस्यचित् कारणस्यानुपदर्शनाद् वह्नित्वावच्छिन्ने किं कारणमित्याकाङ्क्षायास्तन्मतेऽनिवृत्तेः, तस्मादन्यमतमेवैतत्। तथा च "मित्यन्ये" इत्यस्य स्थाने "मिति। अन्ये" इति पाठः "कारणमिति" इति स्थाने "कारणमिति।" इति पाठः। "नव्याः," इत्यस्य स्थाने "नव्यास्तु" इति पाठेन भाव्यम्, तस्य तेजस्त्वेनेत्याद्यग्रिमग्रन्थे समन्वय इति बोध्यम्। तत्र वह्नित्वावच्छिन्ने। तृणत्वादिनेत्यनन्तरं हेतुत्वमित्यनुषज्यते, एवमग्रेऽपि, तेजस्त्वावान्तरजातेः परमाण्वात्मकतेजस्यनुपगमाच्च द्व्यणुकात्मकवह्नौ परमाणुनिष्ठवह्नित्वेन कारणत्वसम्भव इति द्व्यणुकात्मकवह्नौ तृणत्वादिना हेतुत्वमङ्गीकृतम्। त्रसरेण्वादिनिष्ठेति– द्व्यणुके तेजस्त्वावान्तरवह्नित्वजातिः सम्भवतीति तद्रूपेण द्व्यणुकात्मकवह्नेस्त्रसरेण्वात्मकवह्निगतवैजात्यावच्छिन्न प्रति कारणत्वं सम्भवतीति। उपसंहरति– तस्मादिति। "नेत्यतस्मात्" इत्यस्य स्थाने "नेति, तस्मात्" इति पाठो युक्तः। कचिदेकान्तेनेति– घटादौ दण्डादेर्दण्डत्वादिना यत् कारणत्वं तदेकान्तेन, न हि दण्डादिकमन्तरेण कस्यापि घटादिजातीयस्य सम्भव इति, वह्निविशेषादौ तृणत्वादिना तृणादेर्यत् कारणत्वं तद् विकल्पेन, तृणाद् वा मण्यादितो वा वह्निविशेषादेः सम्भव इति। "कारणतायुक्तागम" इत्यस्य स्थाने "कारणता युक्ता, आगम" इति पाठो युक्तः। तत्त्वज्ञानत्वेनेति– मोक्षं प्रति तत्त्वज्ञानत्वेन कर्मविशेषत्वादिना च कारणताऽवश्यमभ्युपेयेत्यर्थः। इति एतस्मात् कारणात्। अनुपायवादः नियतिवादिनां स्वभावादेव कार्यमात्रमुपजायते न कस्यचित् किञ्चित् कारणमिति तत्त्वज्ञानादिकमन्तरेणापि मोक्षो भविष्यत्येवेति न तदर्थमायासो विधेय इत्यनुपायवादो न श्रेयान् न युक्त इति नैयायिकादयो वदन्तीत्यर्थः।

स्वय नियतिवादखण्डनमुपदर्शयति– वयं त्विति– स्याद्वादिनोऽस्मदादय इत्यर्थः। "रिति, कुत" इत्यस्य स्थाने "रिति कुन" इति पाठो युक्तः। किं हेतुविषये इति– तन्तोरेव पटो न कपालादेरिति कस्माद्धेतोरिति हेतुविषयः प्रश्नः, तन्तोरेव पटो न कपालादेरिति स्वभावादेवेति हेतुविषयकमुत्तरमित्येवं प्रश्नोत्तरे किं हेतुविषये इत्यर्थः, उत नियामकविषये इति– तन्तोरेव पटो न कपालादेरिति कस्मान्नियामकादिति नियामकविषयः प्रश्नः, तन्तोरेव पटो न कपालादेरिति स्वभावादेव नियामकादित्येवं किं नियामकविषये प्रश्नोत्तरे इत्यर्थः। उभयत्रापि हेतुविषयप्रश्नोत्तरयोर्नियामकविषयप्रश्नोत्तरयोश्च। आद्ये धर्म्यालम्बने हेतुविषये प्रश्नोत्तरे इति प्रथमपक्षे। आगतम् उत्तरस्वरूपं प्राप्तम्। धर्म्यालम्बनपक्षे स्वमेव भावः स्वभाव इत्येतत्पक्षे व्युत्पत्त्या स्वभावः स्वमेव भवेत्, तथा च स्वस्मादेव भवतीति, न चैकस्यैव पौर्वापर्यनियतकार्यकारणभावः संभवत्यात्माश्रयश्चात्र दोष इत्याह– स चेति स्वभावश्चेत्यर्थः। द्वितीयेऽपि धर्म्यालम्बने नियामकविषये प्रश्नोत्तरे इति द्वितीयपक्षेऽपि। स एव आत्माश्रय एव, यथाऽऽत्माश्रयात् स्वं न स्वस्य हेतुस्तथाऽऽत्माश्रयात् स्वं न स्वस्य नियामकमित्याह– स्वस्येति। जिज्ञासितविषयत्वात् प्रश्नस्य नहि स्वं स्वनियमकारीति स्वभिन्ननियमकारिणो जिज्ञासितत्वात् तद्विषयकप्रश्नस्योत्तरं स्वभिन्ननियामकविषयकमेव भवितुमर्हतीति निरुक्तोत्तरस्य स्वात्मनियामकगोचरस्य न तथात्वसम्भव इत्याह– भेदगर्भेति। न तृतीय इति धर्मालम्बने हेतुविषयप्रश्नोत्तरे इति तृतीयपक्षोऽपि न युक्त इत्यर्थः। निरुक्तनिषेधेऽपि पूर्वोक्तमेव हेतुमुपदर्शयति– धर्महेतोरिति। नापि चतुर्थ इति– धर्मालम्बने नियामकविषये प्रश्नोत्तरे इति

तत्वात्, नापि चतुर्थः- पटे तन्तुजन्यत्व-कपालाजन्यत्वधर्मशालित्वस्य तत्स्वभावनियम्यत्वे निरूपकत्वेन स्वस्यैव प्रवेशात्। एतेन तत्तत्प्रकारकेश्वरेच्छा-ज्ञानरूपाया नियतेर्नियामकत्वमपि पामराभ्युपगतं निरस्तम्। तस्मात् स्वभावो नाम स्वहेतुस्तस्मादुक्तधर्मशालित्वमित्येव व्याख्यातुमुचितम्। तावद्धर्मावच्छिन्नतद्व्यक्त्युपपत्तौ तावद्धर्मविशिष्टतन्निरूपितभव्यतानुप्रवेशेनैव तद्धेतोर्व्याप्रियमाणत्वादि(त्वा)नादित्वा(द्य)वध्यवधिमत्प्रवाहस्यानवस्थादिदोषाननुपातात्। अयमेव जैनानां तथाभव्यत्वहेतुताप्रवादः, एतदनभ्युपगमे च तीर्थकरा-ऽतीर्थकर-प्रत्येकबुद्ध-बुद्धबोधितादिसिद्धकार्यभेदः कथमुपपादनीयः, तत्रान्यपुष्कलहेत्वभावात्, अथेयं चैत्रावलोकितमैत्रनिर्मितनीलेतरघटत्वादिनापि कार्यता स्यादिति चेत्? स्यादेव किं नः

---

चतुर्थपक्षोऽपि न युक्त इत्यर्थः। तत्र हेतुमाह- **पट** इति। **तत्स्वभावनियम्यत्वे** पटगततन्तुजन्यत्व-कपालाजन्यत्वात्मकस्वभावनियम्यत्वे, नियम्यं- निरूप्यम्, नियामकं च- निरूपकम्, न च स्वमेव स्वस्य निरूपकम्, प्रकृते तु निरूप्यमेव निरूपकशरीरे प्रविष्टमिति निरूप्यत्वेन स्वस्यैव प्रवेशादात्माश्रयापातेन नेदमप्युत्तरं समीचीनमित्यर्थः। **एतेनेत्यस्य निरस्तमित्यनेनान्वयः। एतेन** नियामकशरीरप्रवेशप्रयुक्तनिरूपकत्वत आत्माश्रयापातेन। **तत्तदिति**- यथा पटे यत्तन्तुजन्यत्वकपालाजन्यत्वात्मकधर्मस्तत्प्रकारिका येश्वरेच्छा तत्प्रकारकं वा यदीश्वरज्ञानं तद्रूपायास्तदात्मिकाया नियतेर्नियामकत्वमपि घटगतोक्तधर्मस्य नियम्यस्य निरुक्तनियामकशरीरसन्निविष्टतया निरूपकत्वत आत्माश्रयप्रसङ्गदोषग्रस्तमतः **पामराभ्युपगतं** मूर्खकल्पविद्वन्मन्यस्वीकृत खण्डितमवसेयमित्यर्थः। तस्मात् स्वभावादेव- स्वहेतुत एव पटे तन्तुजन्यत्वकपालाजन्यत्वधर्मशालित्वमिति हेतुहेतुमद्भावोऽस्मदाद्युपगतः श्रेयानिति निगमयति- **तस्मादिति**। तन्तुजन्यत्व-कपालाजन्यत्वादियावद्धर्मविशिष्टपटव्यक्तेस्तथाभव्यत्वादेवोत्पाद इति तथाभव्यत्वहेतुताप्रवाद जैनानां सङ्गमयति- **तावद्धर्मावच्छिन्नतद्व्यक्त्युपपत्ताविति**- "**तद्व्यक्त्युपपत्तौ**" इत्यस्य स्थाने "तद्व्यक्त्युत्पत्तौ" इति पाठः सम्यग्, अस्य **तद्धेतोर्व्याप्रियमाणत्वादि**त्यनेनान्वय.। **तन्निरूपितेति**- तद्व्यक्तिनिरूपितेत्यर्थः। **भव्यताऽनुप्रवेशेनैवेति**- नह्येकस्मात् कारणादेव कार्यमुपजायते किन्तु कारणकूटलक्षणसामग्रीत एन, अत एव नह्येकं किञ्चिज्जनकं किन्तु सामग्री वैजनिकेति प्राचीनैर्गीयते, सामग्र्या च कारणान्तरसन्निवेशवत् तावद्धर्मविशिष्टतद्व्यक्तिनिरूपितभव्यत्वमपि प्रविशतीत्येव भव्यत्वानुप्रवेशेनैवेत्यर्थः। "**दि(त्वा)नादित्वा(द्य)वध्य**" इत्यस्य स्थाने "दित्यनाद्यवध्य" इति पाठः सम्यक्, **इति** एतस्मात् कारणात्, **अनाद्यवध्यवधिमत्प्रवाहस्येति**- अवधिर्हेतुः, अवधिमत् कार्यम्, तयो. प्रवाहः- परम्परा, तथा अनादिश्चासाववध्यवधिमत्प्रवाहश्चानाद्यवध्यवधिमत्प्रवाहस्तस्येत्यर्थः, अनाद्यवध्यवधिमत्प्रवाहस्य तथाभव्यत्वादेव भावेन भव्यत्वस्वभावाद् भवतस्तस्यानवस्थादिदोषाननुपातात्, अनवस्थितस्वरूपे तस्मिन्ननवस्थामन्तरेण तथाभव्यत्वमेवानुपपन्नमिति प्रामाणिकीयमनवस्था न दोषावहेत्यनवस्थाया भावेऽपि तस्या न दोषरूपतेत्येवमनवस्थादिदोषाननुपातादित्यर्थः। **अयमेव** कारणकूटे तावद्धर्मविशिष्टतद्व्यक्तिनिरूपितभव्यत्वानुप्रवेशेन तद्धेतोस्तावद्धर्मावच्छिन्नतद्व्यक्त्युत्पत्तौ व्याप्रियमाणत्वमित्यभ्युपगमवाद एव। **एतदनभ्युपगमे च** निरुक्ततथाभव्यत्वहेतुतावादानभ्युपगमे च। **तीर्थकरेति**- यस्तीर्थकरो भूत्वा सिद्ध्यति स तीर्थकरसिद्धः, यश्चातीर्थकर एव सिद्ध्यति सोऽतीर्थकरसिद्धः, एवमग्रेऽपि, तत्त्वज्ञानादितो मोक्षमासादयतां जीवानां योऽयं तीर्थकरसिद्धादिलक्षणकार्यभेद. स तथाभव्यत्वस्य कारणत्वस्वीकारमन्तरेण कथमुपपादनीयः, उपपादयितुमशक्य इत्यर्थः। तत्र हेतुमाह- **तत्रेति**- तीर्थकरसिद्धादिकार्यभेदे इत्यर्थः। **अन्यपुष्कलहेत्वभावादिति**- केवलज्ञानादिकारणकदम्बकं सर्वत्र समानमेव, किन्तु तथाभव्यत्वान्येव प्रतिनियतकार्यनिरूपितानि विभिन्नानि कारणानि, तत्प्रवेशत एव सामग्र्या अपि भेदः, तथाभव्यत्वस्य कारणत्वानभ्युपगमे तु तथाभव्यत्वान्यस्य पुष्कलहेतो. सामग्रीलक्षणस्य कार्यविभेदकस्याभावादित्यर्थ.। ननु कार्ये यावन्तो धर्माः सम्भवन्ति तावद्धर्मविशिष्टकार्यव्यक्तिं प्रति तथाभव्यत्वस्याभिहितस्वरूपस्य कारणत्वाभ्युपगमे तावद्धर्मावच्छिन्नत्वमपि कार्यताया स्यात्, तथा च कुत्रचिद् घटे चैत्रावलोकितत्वं मैत्रनिर्मितत्वं नीलेतरत्वं घटत्वादिकं चास्तीति तावद्धर्मावच्छिन्ना घटनिष्ठकार्यताऽऽपद्यत इत्याशङ्कते- **अथैवमिति**। इष्टापत्तिरेवात्र समाधानमित्याह- **स्यादेवेति**- चैत्रावलोकितमैत्रनिर्मितनीलेतरघटत्वादिना कार्यता स्यादेवेत्यर्थः। **किं नश्छिन्नं** तथाभव्यत्वकारणत्ववादिना

छिन्नम्, तथाभव्यत्वकार्यतायास्तथाभावेऽपि दृष्टदण्डादिकार्यताया घटत्वाद्यवच्छेदेनैव यथादर्शनमभ्युपगमेन प्रवृत्त्यादिव्यवहारानुच्छेदात्, इष्यते चानन्यगत्या परेणाप्यर्थसमाजसिद्धधर्मेणापि परामर्श-तत्त्व-

जैनानां न किमप्येवमभ्युपगमे छिन्नं खण्डितं भवति । नन्वेवं घटत्वादिसामान्यधर्ममात्रावच्छिन्नकार्यताया अभावात् तन्निरूपितदण्डत्वाद्यवच्छिन्नकारणताया अप्यभावेन घटाद्यर्थिनस्तन्निमित्तदण्डादिसम्मेलनप्रवृत्त्यादिव्यवहारोच्छेदः प्रसज्येतेत्यत आह- **तथाभव्यत्वकार्यताया** इति- तथाभव्यत्वनिष्ठकारणतानिरूपितकार्यताया इत्यर्थः । **तथाभावेऽपि** चैत्रावलोकित-मैत्रनिर्मितनीलेतरघटत्वाद्यवच्छिन्नत्वस्य भावेऽपि । **दृष्टेति**- दृष्टा अन्वय-व्यतिरेकग्रहसचिवप्रत्यक्षविषयीभूता या दण्डत्वाद्यवच्छिन्नकारणतानिरूपितकार्यता तस्याः, घटत्वाद्यवच्छेदेनैव घटत्वाद्यवच्छिन्नत्वेनैव, यथादर्शनमभ्युपगमेन- प्रत्यक्षमनतिक्रम्य स्वीकारेण, घटादिकार्यसम्पादनार्थं दण्डादिकारणसङ्घटनादिविषयकप्रवृत्त्यादिव्यवहारेच्छाभावादित्यर्थः । प्रत्येकधर्मप्रयोजका-नेकसामग्रीप्रयोज्यत्वलक्षणार्थसमाजसिद्धत्वाक्रान्तधर्मेणापि कार्यत्वं नैयायिकादिभिरप्युपेयत इति तद्रूपेण तथाभव्यत्वनिरूपित-कार्यत्वकल्पना नादृष्टचरीत्याह- **इष्यते चेति**- अभ्युपगम्यते चेत्यर्थः । **अनन्यगत्या** व्यतिरेकव्यभिचारनिवारकप्रकारान्तराभावेन । **परेणापि** नैयायिकादिनाऽपि । **अर्थसमाजसिद्धधर्मेणापि** स्वघटकप्रत्येकधर्मप्रयोजकसामग्रीसमुदायप्रयोज्य-धर्मेणापि । **परामर्शेति**- वह्निव्याप्यधूमवान् पर्वत इति परामर्शात् पर्वतो वह्निमानित्यनुमितिरुपजायते, वह्निव्याप्यालोकवान् पर्वत इति परामर्शादपि पर्वतो वह्निमानित्यनुमितिरुपजायत इति वह्निव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्न-विशेष्यताकनिश्चयात्मकपरामर्शाभावेऽपि वह्निव्याप्यालोकत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकनिश्चयात्मक-परामर्शात् पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकानुमित्युत्पत्तेर्व्यतिरेकव्यभिचारेण वह्नित्वावच्छिन्नप्रकारता निरूपितपर्वतत्वावच्छिन्नविशेष्यताकानुमितित्वावच्छिन्नं प्रति न पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्निव्याप्यधूमत्वावच्छिन्न-प्रकारतानिरूपकनिश्चयत्वेन कारणत्व किन्तु वह्निव्याप्यधूमवान् पर्वत इति परामर्शाव्यवहितोत्तरनिरुक्तानुमितित्वावच्छिन्नं प्रति निरुक्तपरामर्शत्वेन कारणत्वम्, एवं वह्निव्याप्यालोकवान् पर्वत इति परामर्शाव्यवहितोत्तरनिरुक्तानुमितित्वावच्छिन्नं प्रति वह्निव्याप्यालोकवान् पर्वत इति परामर्शत्वेन कारणत्वमित्येवाभ्युपगन्तव्यम्, तच्चानुमितिसामान्यं प्रति व्याप्तिज्ञानसामान्यं कारणमित्यनुमितित्वं व्याप्तिज्ञानस्य कार्यतावच्छेदकम्, वह्निप्रकारकत्वं च तत्र व्याप्तौ वह्निनिरूपितत्वज्ञानप्रयोज्यमिति तद्व्याप्ति-विशेष्यकस्य निरूपितत्वसम्बन्धेन वह्निप्रकारकस्य वह्निनिरूपितत्वप्रकारकस्य वा ज्ञानस्य कार्यतावच्छेदकम्, पर्वतनिष्ठविशे-ष्यताकत्वं चानुमितौ व्याप्यज्ञाने पर्वतनिष्ठविशेष्यकत्वप्रयोज्यमिति पर्वतनिष्ठविशेष्यताकत्वमनुमितौ पर्वतविशेष्यकव्याप्यज्ञानस्य कार्यतावच्छेदकम्, तदव्यवहितोत्तरत्वावच्छिन्नं प्रति तदेव कारणमिति परामर्शाव्यवहितोत्तरत्वावच्छिन्नं प्रति परामर्शः कारणमिति परामर्शाव्यवहितोत्तरत्व परामर्शस्य कार्यतावच्छेदकत्वम्, तेषां च सर्वेषा पर्वतत्वावच्छिन्नविशेष्यतानिरूपित-वह्निव्याप्यधूमत्वावच्छिन्नप्रकारताकनिश्चयात्मकपरामर्शाव्यवहितोत्तरपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारता-कानुमितित्वशरीरे प्रविष्टत्वमिति भवत्यर्थसमाजसिद्धेन निरुक्तधर्मेण परामर्शनिरूपितकार्यता, एवं तत्त्वज्ञानादिनिरूपिता स्वाव्यवहितोत्तरमोक्षत्वाद्यवच्छिन्नकार्यताऽपि तथेत्यर्थः । तथा कालस्य देशस्यापि कारणत्वं परमतेऽवश्यमभ्युपेयमिति तद-पेक्षया लाघवादेकस्य तथाभव्यत्वस्यैव कारणत्वं युक्तं तत एव नियतकालनियतदेशविभिन्नकार्योत्पत्तिसम्भवेन कार्यैकत्वैककाले नानाकार्योत्पत्त्येकदेशे नानाकार्योत्पत्त्यादेर्वारणसम्भवादित्याह- **किञ्चेति** । **धारावाहिकस्थले** इति- घटे चक्षुस्संयोगा-नन्तरं यावत्कालं विषयान्तरेण सह चक्षुस्संयोगो न भवति किन्तु पूर्वकालीन एव घटचक्षुस्सयोग एक एव तावत्कालीनोऽव-तिष्ठते, तत्र घटचक्षुस्संयोगात् क्रमिकाणि घटज्ञानानि जायन्ते तद्धारावाहिकस्थलं तत्रेत्यर्थः । " **कार्यैककल्पनिरासाय** " इत्यस्य स्थाने " कार्यैकत्वनिरासाय " इति पाठो युक्त., यदेव पूर्वपूर्वज्ञानं प्रति कारण तदेवोत्तरोत्तरज्ञानं प्रति यदि कारणं तदा कारणभेदाभावात् कार्यभेदो न स्यात् किन्तु कार्यैकत्वमापद्येतेत्यतः कार्यैकत्वापत्तिवारणायेति तदर्थः । **तत्तत्क्षणत्वेन कालस्य कारणतेति**- तत्तज्ज्ञानं प्रति तत्तज्ज्ञानाव्यवहितपूर्ववर्तितत्तत्क्षणत्वेन कालस्य कारणत्वमिति तत्तत्कालघटित-सामग्रीभेदात् तत्तज्ज्ञानरूपकार्यभेद इति भवति कार्यैकत्वनिरास इत्यर्थः । ननूत्तरोत्तरज्ञानं प्रति पूर्वपूर्वज्ञानं कारणमिति कारणभेदात् कार्यभेदस्य सम्भवेनेत्येतावतापि कार्यैकत्वनिराससम्भवेन किं कालस्य कारणत्वकल्पनयेत्यत आह- **पूर्वपूर्वघट-ज्ञानानामिति** । अथवा " **कार्यैककल्पनिरासाय** " इत्यस्य स्थाने ' कार्यैककालत्वनिरासाय " इति पाठो युक्तः,

नादिकार्यता( कारणता )स्वाव्यवहितोत्तरानुमि[ति]त्व-मोक्षत्वादिना । किञ्च, धारावाहिस्थले कार्यैककल्प-निरासाय तत्तत्क्षणत्वेन कालस्य कारणताऽवश्यं वाच्या, पूर्वपूर्वघटज्ञानानां घटत्वरूपविशेषणज्ञानत्वे-नोत्तरघटज्ञानहेतुतया तत्र कार्ये कालस्य निराकर्तुमशक्यत्वात्, एकज्ञानकाले द्वितीयादिसकलोत्पत्ते-र्दुर्वारत्वात् । तथा कार्यैकदेश्यनिरासाय तत्तद्देशी[य]कारणताप्यवश्यं वाच्या, कथमन्यथा इह सामग्री-समवधानादेतद्घटोत्पत्तिर्न स्यात्, इत्ययं कालधर्मानुप्रवेशेन ऋजुसूत्रनयेन स्वभाव-नियत्योर्व्यापारोऽवश्यं प्रतिपत्तव्यः, सामान्यतः कालहेतुतायाः प्रागभावसमवायिकारणविधया स्वभाव-नियतिहेतुतायाश्च

तस्य चैव सङ्गमनं- यथैकघटादावेकदैवोत्पन्नानां पाकजरूप-रस गन्ध-स्पर्शानां मध्ये यदेव घटाद्येकस्य समवायिकारणं तदेवा-परस्यापि, य एव च तेजस्संयोगविशेषलक्षणपाक एकस्यासमवायि कारणं स एवापरस्यापीत्येवं समवायिकारणा-ऽसमवायि-कारणात्मककारणभेदाभावेऽपि रूपप्रागभावादीनां निमित्तकारणानां भेदाद् रूप-रस-गन्ध-स्पर्शात्मककार्याणां भेदः, तथा धारा-वाहिकस्थलेऽपि पूर्वोत्तरक्रमेणोत्पन्नाना ज्ञानाना प्रागभावलक्षणनिमित्तकारणभेदाद् भेद सम्भवेदपि, किन्तु पाकजाना भिन्नप्रागभावलक्षणकारणप्रभवाणा युगपदेवोत्पत्तेर्भावाद् यथैककालत्व तथा भिन्नप्रागभावलक्षणकारणप्रभवाणा धारावाहिक-ज्ञानानामपि युगपदुत्पत्तिप्रसङ्गत एक कालत्वमापाद्येतेत्यतस्तद्वारणायेत्यर्थः । **तत्तत्क्षणत्वेनेति**- तत्तज्ज्ञान प्रति तत्तज्ज्ञाना-व्यवहितपूर्वतत्तत्क्षणत्वेन कालस्य कारणत्वम्, तथा च कारणीभूताना तत्तत्क्षणानामेकदाऽसता कालैकत्वाभावात् तत्कार्याणा-मपि ज्ञानाना नैककालत्वमित्यर्थः । **पूर्वपूर्वघटज्ञानानामिति**- पूर्वपूर्वघटज्ञानानामुत्तरोत्तरघटज्ञानानि प्रति यः कार्यकारणभावः स तत्तद्धटज्ञानं प्रति तत्तद्धटज्ञानाव्यवहितपूर्ववर्तितत्तद्घटज्ञानत्वेन तत्तद्धटज्ञान कारणमित्येवं न किन्तु विशिष्टबुद्धिं प्रति विशेषणज्ञानं कारणमिति सामान्यकार्यकारणभावस्य क्लृप्तत्वेन तदनुरोधेन घटत्वप्रकारकत्वेन घटत्वविशिष्टबुद्धिरूपतयोत्तरोत्तर-ज्ञानं प्रति पूर्वपूर्वघटज्ञानानां घटत्वात्मकविशेषणविषयकत्वेन विशेषणबुद्धिरूपतयेति घटज्ञानं प्रति घटत्वज्ञानत्वेन घट-ज्ञानमित्येव कार्यकारणभाव इति तादृशहेतुतया कार्यैककालत्वस्य निराकर्तुमशक्यत्वादित्यर्थः । "कार्ये कालस्य" इत्यस्य स्थाने "कार्यैककालत्वस्य" इति पाठो युक्तः । एव च सति यदापद्यते तदुपदर्शयति- **एकज्ञानकाल** इति- पूर्वज्ञानोत्पत्त्यव्यवहितपूर्वकाले यथा पूर्वज्ञानस्य प्रागभावस्तथा द्वितीय-तृतीयादिक्षणभाविनां धारावाहिकज्ञानानामशेषाणामपि प्रागभावाः सन्ति, चक्षुर्घटसंयोगादिकं कारणान्तरमपि विद्यत इति सम्भृतसामग्रीत्वादेकज्ञानोत्पत्तिकाल एव द्वितीयादि-सकलज्ञानोत्पत्त्यापत्तेर्धारावाहिकत्वमेव भज्येतेत्यतस्तत्तत्क्षणत्वेन कालस्य तत्तज्ज्ञान प्रति हेतुता कार्यैककालत्वपरिहाराया-ऽऽवश्यकीत्यर्थः । एवं कार्यैकदेशत्वपरिहाराय तत्तद्देशीयतत्तद्धटादिक प्रति तत्तद्देशत्वेन देशस्यापि कारणत्वमावश्यकमित्याह- **तथेति** । **कार्यैकदेश्यनिरासाय** कार्यैकदेशत्वपरिहाराय । **तत्तद्देशीयेति**- तत्तद्देशनिष्ठेत्यर्थः । **कथमित्यस्य न स्यादित्यनेनान्वयः** । **अन्यथा** तत्तद्देशीयघटं प्रति तत्तद्देशत्वेन देशस्य कारणत्वाभावे । **इति** एवंस्वरूपः । **अयं** प्रतिनियतकाल-देशयोः प्रतिनियतकार्ये व्यापार. । **कालधर्मानुप्रवेशेन** तत्तत्क्षणाव्यवहितोत्तरजायमानतत्तद्घटत्वरूपकार्य-तावच्छेदकशरीरे तत्तत्क्षणत्वरूपकालधर्मस्यानुप्रवेशेन । **ऋजुसूत्रनयेन** उत्तरोत्तरक्षणं प्रति पूर्वपूर्वक्षणस्य कारणत्व-मित्यभ्युपगन्तृऋजुसूत्रनयेन, स्वभाव-नियत्योर्व्यापार इत्यत्रैवायमिति पूर्वोक्तोऽन्वेति । ऋजुसूत्रनयेन स्वभाव-नियति-हेतुताप्रवादसमर्थनं कृत्वा सङ्ग्रहनयेन तत्समर्थनमावेदयति- **सामान्यत** इति- कार्यत्वावच्छिन्न प्रति कालत्वेन कालस्य हेतुताया इत्यर्थः, अस्य **प्रवादस्ये**त्यनेनान्वयः । **प्रागभावेति**-प्रागभावविधया स्वभावहेतुतायाः समवायिकारणविधया नियतिहेतुताया इत्येवमन्वयोऽत्र, एतत्कालान्तरमेवानेनोत्पत्तव्यमिति स्वभावहेतुता प्रागभावकारणतावलम्बनेन प्रवृत्ता, कपाले एव घटेनोत्पत्तव्यं तन्तुष्वेव पटेनोत्पत्तव्यमिति नियतिहेतुता समवायिकारणहेतुतावलम्बनेन प्रवृत्ता, कार्यमात्रं प्रति प्राग-भावस्य कारणत्व भावकार्यसामान्यं प्रति समवायिकारणस्य कारणत्वमिति पर्यवसितः स्वभाव-नियतिहेतुताप्रवाद इति बोध्यम् । **सङ्ग्रहनयाभिप्रायेणैवेति**- कालत्वेन कालमात्रस्य प्रागभावत्वेन प्रागभावमात्रस्य समवायिकारणत्वेन समवायिकारण-मात्रस्य कार्यत्वेन कार्यमात्रस्य सङ्ग्रहणं सङ्ग्रहणनयाभिप्रायेण सम्भवति नान्यनयाभिप्रायेणेत्यन्यनयाभिप्रायव्यवच्छेदायैव-कारोपादानम्, एवम्भूतनयाभिप्रायेण तथाभव्यत्वमेव तत्तत्कार्यजनकमिति निगमयति- **तथा चेति**- ऋजुसूत्रनयाभिप्रायेण तत्तत्क्षणत्वेन तत्तत्कार्यं प्रति कारणत्वस्य सङ्ग्रहनयाभिप्रायेण सामान्यतः कालत्वादिना हेतुत्वस्य व्यवस्थितौ चेत्यर्थः ।

प्रवादस्य सङ्ग्रहनयाभिप्रायेणैव समर्थयितुं शक्यत्वात्; तथा च देशतया कालतया चैकस्यैवाहेतुत्वं लाघवादयुक्तमित्येवम्भूतनयाभिप्रायेण तादृगवस्थं भव्यत्वमेव तथाभव्यत्वनामशालि तादृशतत्तत्कार्यजनकमवश्यमास्थेयम्, इत्थमेव सकलातिप्रसङ्गभङ्गसम्भवात् । अथैवमतिविशेषेण कार्यकारणभावविश्रामे असिद्धसाध्यविशेषार्थं [ साधनविशेषार्थं ] साधनविशेषे प्रवृत्त्यनुपपत्तिस्तादृशतद्व्यक्तिविशेषावच्छिन्नकारणतायाः पूर्वं दुर्ग्रहत्वात्, इष्टसाधनताज्ञानस्य च प्रवृत्तिहेतुत्वादिति चेत् ? मैवम्– कार्यकारणभावो हि व्याप्तिविशेष एव, सा च सामान्यतो विशेषतश्चास्त्येव किन्त्वगृहीतसाध्यसाधनविशेषावच्छिन्नायास्तस्या अबुभुक्षितानुमानस्थले दुर्ग्रहत्वेनानुमित्यप्रयोजकतया सामान्यावच्छिन्नव्याप्त्य-

---

"चैकस्यैवाहेतुत्वं" इत्यस्य स्थाने "चैकस्यैव हेतुत्व" इति पाठो युक्तः, लाघवाद् देशतया कालतया चैकस्यैव हेतुत्वं यत् सङ्ग्रहनयाभिप्रेतं तदयुक्तमित्याकारको य एवम्भूतनयाभिप्रायस्तेनेत्यर्थः । **तादृगवस्थं** यद् यदा यद्व्युत्पत्तिनिमित्तक्रियाविष्टयावद्धर्मशालि तथाभूततावद्धर्माक्रान्ततद्व्यक्तिं प्रति तथाभूततावद्धर्मविशिष्टतद्व्यक्तिनिरूपितम् । ननु तादृगवस्थं भव्यत्वं कार्यजनकमितीदानीमुपेयते पूर्वं तु तथाभव्यत्वं कार्यजनकमिति प्रतिज्ञातमिति भेदान्न तन्निगमनमित्यत आह– **तथाभव्यत्वनामशालीति** एव च तादृगवस्थभव्यत्वस्यैव तथाभव्यत्वमिति नामेति भवति तन्निगमनमिति । **तादृशतत्तत्कार्यजनकं** तथाभूततावद्धर्माक्रान्ततत्तद्व्यक्त्यात्मककार्यजनकम् । **इत्थमेव** नैगमनयाभिप्रायेणातिविशेषरूपेण कारणत्वपर्यवसायितथाभव्यत्वकारणत्वसमर्थनेनैव । **सकलातिप्रसङ्गभङ्गसम्भवादिति**– कार्यैक्य-कार्यैककालत्व-कार्यैकदेशत्वादिप्रसङ्गभङ्गसम्भवादित्यर्थः । परः शङ्कते– **अथेति** । **एवम्** एवम्भूतनयाभिप्रायेण तथाभव्यत्वकारणत्वस्याश्रयणे । **अतिविशेषेणेति**– यतः परं विशेषान्तरं न समस्ति स स्वापेक्षया विशेषान्तराभावेन विशेषमतिक्रान्तत्वादतिविशेषोऽन्त्यविशेष इति यावत्, तेनेत्यर्थः । **कार्यकारणभावविश्रामे** तत्तद्व्यक्तिं प्रति तत्तद्व्यक्तिनिरूपिततथाभव्यत्वकारणत्वस्यान्त्यविशेषरूपेण कार्यकारणभाव एव पर्यवसाने । **असिद्धसाध्यविशेषार्थं** तत्तद्व्यक्तिरूपकार्यमपूर्वमेव जायते, तत् प्रति कारणविशेषस्यान्वय-व्यतिरेकाग्रहान्न स कार्यविशेषः कारणविशेषस्य कार्यतया सिद्धो निश्चित इत्यसिद्धसाध्यविशेषस्तदर्थं तदुत्पत्त्यर्थम् । **साधनविशेषे** यस्य साधनविशेषस्य तत्कार्यविशेषं प्रति कारणत्वं न निश्चितं तस्मिन् कारणविशेषे । **प्रवृत्त्यनुपपत्तिः** तदानयनाद्यनुकूलयत्नानुपपत्तिः । कुतस्तत्र प्रवृत्त्यनुपपत्तिरित्यपेक्षानिवृत्त्यर्थं तत्र हेतुमाह– **तादृशेति**– विशेषातिक्रान्तेत्यर्थः । "**तद्व्यक्तिविशेषावच्छिन्नकारणतायाः**" इत्यस्य स्थाने "तद्व्यक्तिविशेषावच्छिन्नकार्यतानिरूपिततद्व्यक्तिविशेषावच्छिन्नकारणतायाः" इति पाठो युक्तः, भवतु तादृशकारणताया दुर्ग्रहत्वं तेन कस्य प्रवृत्तिकारणस्याभावात् प्रवृत्त्यनुपपत्तिरित्यत आह– **इष्टसाधनताज्ञानस्य चेति** । समाधत्ते– **मैवमिति** । **हि** यतः । **कार्यकारणभावो व्याप्तिविशेष एवेति**– यत्र यत्र धूमस्तदव्यवहितप्राक्क्षणावच्छेदेन तत्र वह्निरिति वह्नेर्यद्व्यापकत्वं यच्च धूमस्य व्याप्यत्वं तदेव वह्नि-धूमयोः कार्यकारणभाव इति भवति कार्यकारणभावस्य व्याप्तिविशेषरूपतेति । **सा च** व्याप्तिश्च । **सामान्यतः** यत्र यत्र धूमस्तत्र तत्र वह्निरिति सामान्यतो व्याप्तिः । **विशेषतश्च** यत्रायं धूमस्तत्रायं वह्निरिति विशेषतो व्याप्तिः । पृच्छति– **किन्त्विति** । उत्तरयति– **अगृहीतेति**– अगृहीतः पूर्वमज्ञातो यः साध्यविशेष एवं साधनस्य विशेषस्तदवच्छिन्नायाः **तस्या** व्याप्तेः, अस्य **दुर्ग्रहत्वेने**त्यनेन **अनुमित्यप्रयोजकतये**त्यनेन चान्वयः । कुत्र तस्या दुर्ग्रहत्वेनानुमित्यप्रयोजकत्वमित्यपेक्षायामाह– **अबुभुक्षितानुमानस्थल** इति– समानविषयत्वप्रत्यासत्त्या ज्ञानेच्छयोः कार्यकारणभावाद् यस्यैव ज्ञानं तस्यैवेच्छा भवति, विषयनिरूप्यं हि ज्ञानमिति निरूपकस्य विषयस्य ज्ञाने सत्येव निरूप्यस्य तज्ज्ञानस्य ज्ञानमित्यन्त्यविशेषविशिष्टस्य विषयस्य पूर्वमग्रहे तद्विषयकस्य ज्ञानस्याप्यग्रह इत्यन्त्यविशेषविशिष्टः स्वविषयकज्ञानेच्छाया अभावाद् बुभुक्षितो बोद्धुमिष्टो न भवतीत्यबुभुक्षितस्तस्यानुमानस्थले इत्यर्थः, एतेन यत्र साध्य-साधनयोर्विशेषौ शब्दादिना पूर्वं गृहीतौ, ततश्च तादृशविशेषविशिष्टसाध्यव्यक्तेरनुमितिर्मे जायतामितीच्छालक्षणाबुभुत्सा, तत्र बुभुत्सिततादृशविशेषविशिष्टसाध्यव्यक्त्यनुमानस्थले गृहीतसाध्यसाधनविशेषावच्छिन्नाया व्याप्तेः सुग्रहत्वेनानुमितिप्रयोजकत्वसम्भवेन तद्ग्रह एव कारणं न तु सामान्यावच्छिन्नव्याप्त्यन्तरग्रहः कारणमित्यावेदितं भवतीति बोध्यम् । **सामान्यावच्छिन्नव्याप्त्यन्तरग्रह** इत्यस्य **कारणमि**त्यनेन सम्बन्धः । **वा** अथवा । **तासामेव** अगृहीतसाध्यसाधनविशेषावच्छिन्नानामेव । तत्र विशेषव्याप्तीनां प्रत्येकं विशेष-

न्तरग्रहस्तासामेव वा विशेषव्याप्तीनां वह्निनिरूपितधूमनिष्ठव्याप्तित्वेनानुगतीकृतानां धूमत्ववह्नित्वावच्छेदेन ग्रहः कारणमास्थीयत इत्येतावत्, एवमिहाप्यसिद्धसाध्यविशेषाय साधनविशेषे प्रवर्त्तमानस्य तत्तद्व्यक्तिविशेषावच्छिन्नकार्यकारणभावग्रहः सम्भवतीति सामान्यावच्छेदेन कारणताग्रहप्रवृत्त्यर्थमिष्यते, न तु प्रतिव्यक्तिविशेषकारणत्वं त्यज्यते । अत एव गङ्गेशेनापि तत्तन्नतित्वेन तत्तद्विघ्नध्वंसे हेतुत्वमुक्तमित्यनुपपत्त्यभावात् । केवलमेकत्रर्जुसूत्रादिशुद्धनयस्य अपरत्र व्यवहारनयस्य प्रवृत्तिः, व्यवहारे च "जो तुल्लसाहणाणं" [ ] इत्याद्युक्तोपपत्त्या पूर्वकृतस्यानन्यथासिद्धस्यान्वय-व्यतिरेकाभ्यां पूर्वपुरुषकारस्य च हेतुत्वमिष्यते, पुरुषकारपदं च स्व-स्वविषयान्यतरपरतया दण्डादेरप्युपलक्षणमिति न तदसङ्ग्रहः, तथा च सकलनयदृष्ट्या मुद्गपक्त्यादिदृष्टान्तेन सिद्धान्तसिद्धा पञ्चकारणी सर्वत्र सङ्गतिमङ्गति, तत्पक्षस्य सर्वनयमतत्वेन सम्यग्रूपत्वात्, एककारणपरिशेषपक्षस्य च दुर्नयत्वेन मिथ्यारूपत्वात्, तदाहुराचार्याः—

व्याप्तित्वेन ग्रहो न सम्भवतीत्यतः- **वह्निनिरूपितेति**- वह्निनिरूपिता धूमनिष्ठा या व्याप्तिः । तत्र वह्नित्वेन सर्वेषां वह्नीनां धूमत्वेन सर्वेषां धूमानामनुगमनात् सर्वा अपि तत्तद्वह्निनिरूपितास्तत्तद्धूमनिष्ठा व्याप्तय इति तत्त्वेन तादृशव्याप्तित्वेनानुगतीकृतानामेकीकृतानाम्, यद्यपि तत्तद्व्याप्तित्वेन तासां तत्तद्व्यक्तिष्वेव स्वतो धूमत्व-वह्नित्वावच्छेदेन ग्रहो न सम्भवति तथापि यद्रूपेणैकीकृतास्तास्तद्रूपेण तासां धूमत्व-वह्नित्वावच्छेदेन ग्रहः सम्भवतीति तथाग्रहः कारणमास्थीयते स्वीक्रियते इति । एवं चोक्तदिशा प्रकृते इष्टसाधनत्वग्रहः सम्भवतीति ततः साध्यविशेषार्थं साधनविशेषे प्रवृत्तिः सम्भवतीत्याह- **एवमिहापीति** । "**ग्रहप्रवृत्त्यर्थं**" इत्यस्य स्थाने "ग्रहः प्रवृत्त्यर्थं" इति पाठो युक्तः । **न त्वित्यस्य त्यज्यत** इत्यनेनान्वयः, प्रवृत्त्यर्थं सामान्यावच्छेदेन कारणताग्रहस्य स्वीकारेऽपि प्रतिव्यक्तिविशेषकारणत्वं न तु त्यज्यते इत्यर्थः । विशेषरूपेण कार्यकारणभावे चिन्तामणिकृत्सम्मतिमुपदर्शयति- **अत एवेति**- विशेषरूपेण कार्यकारणभावस्याभ्युपगमादेवेत्यर्थः । **गङ्गेशेनापि** चिन्तामणिकृता गङ्गेशोपाध्यायेनापि, **अस्योक्तमि**त्यनेनान्वयः । एवं सति चिन्तामणिकृन्मतर्जुसूत्रमतयोः को विशेष इत्यपेक्षायामाह- **केवलमिति**- एकत्र तत्तत्क्षणत्वेन हेतुत्वमिति कालत्वेन हेतुत्वमिति प्रागभावसमवायिकारणविधया हेतुत्वमिति तथाभव्यत्वस्य तत्तत्कार्यं प्रति हेतुत्वमिति च मतेषु । **ऋजुसूत्रादीति**- आदिपदात् संग्रहैवम्भूतनययोः परिग्रहः । **अपरत्र** सामान्यतोऽपि च कार्यकारणभावो विशेषतोऽपि च कार्यकारणभाव इति चिन्तामणिकृन्मते । **व्यवहारे चे**त्यस्य **हेतुत्वमिष्यते** इत्यनेनान्वयः । **जो तुल्ल०** इति- "यस्तुल्यसाधनानाम्' इति संस्कृतम् । **इत्याद्युक्तोपपत्त्या** इत्याद्यागमोक्तोपपत्तितः । **पूर्वकृतस्ये**त्यस्य **हेतुत्वमि**त्यनेनान्वयः, 'पूर्वजन्मार्जितं कर्म दैवमित्यभिधीयते' इत्यादिवचनाद् दैवापराभिधानस्य पूर्वजन्मार्जितस्य पुण्य पापान्यतरात्मकस्य कर्मण इत्यर्थः । तस्य नियतपूर्ववर्तित्वं निर्विवादमेवानन्यथासिद्धत्वमपि तस्येत्यावेदनाय तद्विशेषणम्- **अनन्यथासिद्धस्येति** । एवं चानन्यथासिद्धत्वे सति नियतपूर्ववर्तित्वलक्षणं कारणत्वं तत्र सङ्गतिमञ्चतीति पूर्वकृतस्य कर्मणोऽतीन्द्रियत्वात् तत्रोक्तदिशैव कारणत्वलक्षणाक्रान्तत्वात् कारणत्वम्, पुरुषकारस्य तु प्रयत्नविशेषरूपस्य प्रत्यक्षविषयत्वात् तत्रान्वय-व्यतिरेकयो सम्भवेन ताभ्यामप्यवधार्यते कारणत्वमित्याशयेनाह- **अन्वय-व्यतिरेकाभ्यामिति** कार्याव्यवहितपूर्ववर्तिन एव पुरुषकारस्य कारणत्वमित्यावेदनाय **पूर्वेति** । ननु दैव-पुरुषकारयोरेवेत्थं कारणत्वमायाति न तु दण्डादेरित्यत आह- **पुरुषकारपदं चेति** । **स्व-स्वविषयान्यतरपरतये**त्यत्र स्वपदं स्वसम्बन्धिपरम्, प्रयत्नविशेषश्च पुरुषकारपदस्य वाच्यत्वात् सम्बन्धी भवतीति स्वं प्रयत्नविशेषः, स्वविषयश्च प्रयत्नविशेषविषयश्च तदन्यतरपरतयेत्यर्थः । **न तदसङ्ग्रहः** न दण्डादेरसङ्ग्रहः । **पञ्चकारणीति**- पञ्चानां कारणानां समाहारः पञ्चकारणी, काल स्वभाव नियति-पूर्वकृत-पुरुषकारभेदेन पञ्चकारणानि । **तत्पक्षस्य** सिद्धान्तसिद्धपञ्चकारणाभ्युपगमपक्षस्य । **एककारणपरिशेषपक्षस्य चेति**- काल एव कारणं स्वभाव एव कारणं नियतिरेव

"कालो सहावणियई पुव्वकयं पुरिसकारेणेगन्ता । मिच्छत्तं ते चेव उ समासओ हुन्ति सम्मत्तं ॥"

[ सम्मति, का० ३, गाथा—५३ ]

न च तथाभव्यत्वेनैवेतरान्यथासिद्धेः समुदायपक्षोऽनतिप्रयोजन इति शङ्कनीयम्, तथापदार्थकुक्षावेवेतरकारणप्रवेशाद् व्यक्तिविशेषपरिचायकत्वेनान्योऽन्यव्याप्तिप्रदर्शकत्वेन च तस्यान्यथासिद्ध्यप्रदर्शकत्वात्, अत एव—" जं जहा भगवया दिट्ठं तं तहा विपरिणमइ " [ ] इति भगवद्वचनं सुष्ठु सङ्गच्छते, तथापदेनैव तत्रेतरकारणोपसङ्ग्रहात्, इत्थमेव सर्वत्र दृष्टा-दृष्टकारणात्मकपुरुष-दैवजन्योक्तिरपि न्याय्यैव, तदिदमुक्तं हरिभद्रसूरिभिः—

"तहभव्वत्तं जं काल णियइ-पुव्वकय-पुरिस-किरियाओ। आखिवइ तहसहावं ता तदधीणं तयं पि भवे ॥१॥
एवं जेणेव जहा होयव्वं तं तहेव होइ त्ति । ण य दिव्वपुरिसकारा वि हंदि एवं विरुज्झन्ति ॥ २ ॥"

[ बीजादिविंशतिकायाम् ]

यद्येवं सर्वत्र दैव-पुरुषकारोभयव्यापारस्तदा किञ्चित् कार्यं दैवजन्यमेव किञ्चिच्च पुरुषकारजन्यमेवेति विभागः सार्वजनीनः कथमिति चेत् ? कार्यत्वावच्छेदेन तयोः कारणत्वग्रहे तद्विभागः, अन्यतरस्वल्प-बहुव्यापारवत्त्वस्यैव नियामकत्वकल्पनादिति गृहाण, स्वल्प-बहुव्यापारवत्त्वं चानुत्कटोत्कट-

---

कारण पूर्वकृतमेव कारणं पुरुषकार एव कारणमित्येवमेककारणपरिशेषपक्षस्य चेत्यर्थः । पञ्चकारणाभ्युपगमपक्षस्य सम्यक्त्वम्, एककारणपरिशेषपक्षस्य च मिथ्यात्वमित्यत्र संमतिगाथासंवादमाह– **तदाहुरिति** । **आचार्याः** सिद्धसेनदिवाकरसूरयः । **कालो०** इति–" काल. स्वभावो नियतिः पूर्वकृतं पुरुषकार इत्येकान्ताः । मिथ्यात्वं ते एव समासतो भवन्ति सम्यक्त्वम् ॥ " इति संस्कृतम् । **न चे**त्यस्य **शङ्कनीयमि**त्यनेनान्वयः । **तथाभव्यत्वेनैव** तथाभव्यत्वलक्षणकारणेनैव । **इतरान्यथासिद्धेः** तथाभव्यत्वभिन्नकारणानामन्यथासिद्धत्वात् । **समुदायपक्षः** समुदितकालादिपञ्चकं कारणमिति पक्षः । **अनतिप्रयोजनः** न किञ्चित्प्रयोजनक. । निषेधे हेतुमाह– **तथेति**– तथाभव्यत्वघटकं यत् तथापदं, तदर्थकुक्षावित्यर्थः । न च तत्र तथाशब्दोऽन्यकारणान्यथासिद्ध्युपदर्शकः किन्तु कार्यव्यक्तिविशेषस्य भव्यत्वनिरूपकस्य परिचायकः, व्यक्तिविशेषरूपकार्य-भव्यत्वरूपकारणयोरितरकारण भव्यत्वात्मककारणयोश्च परस्परव्याप्तेः, 'तथाभव्यत्व यत्र तत्र निरुक्तकार्यव्यक्तिः, निरुक्तकार्यव्यक्तिर्यत्र तत्र तथाभव्यत्वम्' इति । 'तथाभव्यत्व यत्र तत्रान्याखिलानि कारणानि, यत्रान्यान्यखिलानि कारणानि तत्र तथाभव्यत्वमित्याकारायाः परिचायकश्चेत्याह– **व्यक्तिविशेषेति** । **तस्य** तथाशब्दस्य । उक्तार्थे भगवद्वचन प्रमाणयति– **अत एवेति**– अस्य 'सङ्गच्छते' इत्यनेनान्वयः । **जं०** इति–" यद् यथा भगवता दृष्टं तत् तथाविपरिणमति " इति संस्कृतम् । **तथापदेनैवेति**– तथा विपरिणमतीत्यत्रोक्तथापदेनैवेत्यर्थः । **इत्थमेव** उक्तप्रकारेणैव । अत्र श्रीहरिभद्रसूरिवचनं प्रमाणयति– **तदिदमुक्तमिति** । **तहभव्वत्तमिति**– " तथाभव्यत्व यत् काल-नियति-पूर्वकृत-पुरुषकारादीन् । आक्षिपति तथास्वभाव तत् तदधीन तदपि भवेत् ॥ एवं येनैव यथा भवितव्यं तत् तथैव भवतीति । न च दैव-पुरुषकारा अपि हन्दि एवं विरुद्ध्यन्ते ॥ " इति संस्कृतम् । पृच्छति– **यद्येवमिति** । उत्तरयति– **कार्यत्वावच्छेदेनेति** । **तयोः** दैव-पुरुषकारयोः । **तद्विभागः** किञ्चित् कार्यं दैवजन्यमेव, किञ्चिच्च पुरुषकारजन्यमेवेति विभागः । नन्वेवं कार्यत्वावच्छेदेन तयोः कारणत्वग्रहे सर्वं कार्यं दैवजन्य पुरुषकारजन्यं चेति सुतरां तद्विभागोऽसङ्गत इत्यत आह– **अन्यतरेति**– दैव-पुरुषकारयोरन्यतरस्मिन् यत् स्वल्पबहुव्यापारवत्त्वं तस्यैव तद्विभागे नियामकत्वस्य कल्पनादिति जानीहि, अर्थाद् यस्मिन् कार्ये दैवस्य स्वल्पव्यापारः पुरुषकारस्य बहुव्यापारस्तत् कार्यं पुरुषकारजन्यमेवेति, यस्मिन् कार्ये तु पुरुषकारस्य स्वल्पव्यापारो दैवस्य बहुव्यापारस्तत्कार्यं दैवजन्यमेवेत्येव विभागस्तयोः कार्यत्वावच्छेदेन कारणत्वग्रहेऽपि सम्भवतीत्यर्थः । यस्मिन् कार्ये दैवस्य बहुव्यापारवत्त्व पुरुषकारस्याल्पव्यापारवत्त्वमिति, एतस्मिन् कार्ये पुनः पुरुषकारस्य बहुव्यापारवत्त्वं दैवस्य च स्वल्पव्यापारवत्त्वमिति केन प्रमाणेन कल्प-

शक्त्युद्बोधादिरूपकार्यदर्शनान्यथानुपपत्त्या कल्पनीयमित्यादि व्यवस्थापितं द्वात्रिंशिकाप्रकरणादावस्माभिः । उक्तविभागाय प्रत्येकजन्यतावच्छेदकजातिभेदस्वीकारे तूभयजन्ये साङ्कर्यम्, तत्रापि जात्यन्तरस्वीकारे तूभयसमाजे प्रत्येककार्योपत्तिवारणायैककार्येऽपराभावादिसहभावत्वकल्पने महागौरवम्, अथ दैवमात्रजन्यमेतत् कार्यमित्यत्र दैवातिरिक्तोत्कटव्यापाराजन्यमित्यर्थे भवदभिमते प्रतिप्रतियोगिसिद्ध्यसिद्धिभ्यां व्याघातः इति चेत् ? न– उत्कटव्यापारसम्बन्धावच्छिन्नप्रतियोगिना दैवातिरिक्तजन्यत्वाभावस्यैव तदर्थत्वात्, तदिदमभिप्रेत्योक्तं हरिभद्रसूरिभिः—

नीयमित्यपेक्षायामाह– **स्वल्प-बहुव्यापारवत्त्वं** चेति– यस्य चानुत्कटशक्त्युद्बोधादिरूपकार्यस्य दर्शनं तस्य च तादृशकार्यदर्शनान्यथानुपपत्त्या स्वल्पव्यापारवत्त्व यस्य पुनरुत्कटशक्त्युद्बोधादिरूपकार्यस्य दर्शनं तस्य पुनस्तादृशकार्यदर्शनान्यथानुपपत्त्या बहुव्यापारवत्त्वमित्येवं तत्कल्पन नाप्रमाणिकमित्यर्थः । अत्र विशेषावगमार्थिभिरस्मदुपज्ञद्वात्रिंशिकाप्रकरणादिकमवलोकनीयमित्युपदेशाभिप्रायवान् ग्रन्थकृदाह– **इत्यादि व्यवस्थापितमिति** । प्रकारान्तरेण तद्विभागस्यायुक्तत्वमावेदयति– **उक्तविभागायेति**– किञ्चित् कार्यं दैवजन्यमेव किञ्चित् कार्यं पुरुषकारजन्यमेवेति विभागार्थमित्यर्थः । **प्रत्येकजन्यतावच्छेदकजातिभेदस्वीकारे** दैवनिष्ठकारणतानिरूपितकार्यतावच्छेदिका जातिरन्या, अन्या च पुरुषकारनिष्ठजनकतानिरूपितजन्यतावच्छेदिका जातिरिति स्वीकारे । तथास्वीकारे यत्र कार्ये दैवनिष्ठकारणतानिरूपितकार्यतावच्छेदिका जातिरेव तत् कार्यं दैवजन्यमेव, यस्मिन् कार्ये पुरुषकारनिष्ठकारणतानिरूपितकार्यतावच्छेदिका जातिरेव तत् कार्यं पुरुषकारजन्यमेव, यत्र तु निरुक्तजातिद्वयमप्यस्ति तत् कार्यं दैवपुरुषकारोभयजन्यमित्येव विभागस्य सम्भवेऽपि निरुक्तजात्योः साङ्कर्यं दुर्वारम्, तयोः परस्परात्यन्ताभावसामानाधिकरण्यस्यैकैकमात्रजन्ये सामानाधिकरण्यस्य चोभयजन्ये सद्भावादित्याह– **उभयजन्ये साङ्कर्यमिति** । ननु प्रत्येकजन्यतावच्छेदकजातिद्वयादन्यैव जातिरुभयजन्येति न स्यात् साङ्कर्यमित्यत आह– **तत्रापीति**– उभयजन्येऽपीत्यर्थः । **जात्यन्तरस्वीकारे** प्रत्येककार्यमात्रवृत्तिप्रत्येकजन्यतावच्छेदकजातिद्वयभिन्नजातिस्वीकारे । **तु** पुनः । **उभयसमाजे** दैवपुरुषकारोभयसमवधाने । **प्रत्येककार्योपत्तिवारणाय** दैवमात्रजन्यकार्यस्य पुरुषकारमात्रजन्यकार्यस्य चोत्पत्तिवारणाय । दैवमात्रजन्यकार्यं प्रति दैवं कारणमिति दैवरूपकारणतस्तन्मात्रजन्यं कार्यमुत्पद्येत, एवं पुरुषकारमात्रजन्यकार्यं प्रति पुरुषकारः कारणमिति पुरुषकाररूपकारणतः पुरुषकारमात्रजन्यं कार्यमुत्पद्येत, सम्भृतसामग्रीकत्वादित्य**ेककार्ये** एकमात्रजन्यकारे, **अपराभावादिसहभावत्वकल्पने** यन्मात्रजन्यं कार्यं तदन्यकारणाभावादेस्तत्सहकारित्वकल्पने । एवं च नोभयसमाजस्थले प्रत्येकमात्रजन्यकार्योत्पत्तिः, यतस्तत्रापरकारणाभावरूपसहकारिणोऽभावात्, यथा दैव-पुरुषकारोभयसमाजे दैवमात्रजन्यकार्ये अपरस्य पुरुषकारस्य पुरुषकारमात्रजन्यकारणस्याभावोऽपि सहकारिविधया कारणमिति तदभावान्न दैवमात्रजन्यकार्योत्पत्त्यापत्तिः, किन्तु तथाकल्पने **महागौरवं** स्यादतस्तथाकल्पन न युक्तमिति भावः । शङ्कते– **अथेति** । "**प्रतिप्रनियोगि**" इत्यस्य स्थाने "सति प्रतियोगि" इति पाठो युक्तः । **प्रतियोगिसिद्ध्यसिद्धिभ्यां व्याघात** इति– दैवातिरिक्तोत्कटव्यापाराजन्यमिति दैवातिरिक्तोत्कटव्यापारजन्यत्वाभाववदिति पर्यवसितरूपं तत्रोक्ताभावस्य प्रतियोगिनो दैवातिरिक्तोत्कटव्यापारजन्यत्वस्य यदि सिद्धिस्तदा दैवजन्ये दैवातिरिक्तोत्कटव्यापारजन्यत्वस्य सद्भावान्न तत्र तदभाव इति दैवातिरिक्तोत्कटव्यापाराजन्यमिति व्याहन्यते, अथ दैवातिरिक्तोत्कटव्यापारजन्यत्वस्य न सिद्धिस्तदा दैवातिरिक्तोत्कटव्यापारजन्यत्वरूपप्रतियोगिनोऽसिद्ध्या तदभावस्याप्यसिद्धिरिति तद्वदपि न किञ्चित् सम्भवतीत्येवमपि दैवातिरिक्तोत्कटव्यापारजन्यमिति व्याहन्यत इत्यर्थः । समाधत्ते– **नेति** । "**उत्कटव्यापारसम्बन्धावच्छिन्नप्रतियोगिना**" इत्यस्य स्थाने "उत्कटव्यापारसम्बन्धावच्छिन्नजनकतानिरूपितजन्यत्वप्रतियोगिकस्वरूपसम्बन्धेन" इति पाठः समीचीनः । एव च कार्यतावच्छेदेन दैव पुरुषकारयो. कारणत्वे यद् दैवमात्रजन्यतयाऽभिमत तदपि पुरुषकारजन्य भवत्येव, किन्तु तत्र पुरुषकारजन्यत्वमनुत्कटव्यापारसम्बन्धावच्छिन्नपुरुषकारनिष्ठजनकतानिरूपितजन्यत्वप्रतियोगिकस्वरूपसम्बन्धेनैवेति तत्र दैवातिरिक्तजन्यत्वस्योत्कटव्यापारसम्बन्धावच्छिन्नकारणतानिरूपितकार्यताप्रतियोगिकस्वरूपसम्बन्धो व्यधिकरण इति न तेन सम्बन्धेन निरुक्तजन्यत्व कुत्रापीति तत्सम्बन्धावच्छिन्नप्रतियोगिताकस्य दैवातिरिक्तजन्यत्वाभावस्य

"जो दिव्वेण पखित्तो तहा तहा हन्त पुरिसकारु त्ति । तत्तो फलमुभयजमवि भन्नइ खलु पुरिसकाराओ ॥१॥
एएण मीसपरिणामिए उ जं तंमि तं च दुगजण्णं । दिव्वाउ णवरि भन्नइ णिच्छयओ उभयजं सव्वं ॥२॥"

[ बीजादिविंशतिका ]

अत्र मिश्रपरिणामिन इत्यस्यानुत्कटत्वेन परिणामित इत्यर्थः । ननु यत्र भोजकादृष्टेन भोजनं भोक्तृव्यापारं विनैवोपनामितं तत्र भोक्तृयत्नस्यानुत्कटोऽपि क इव व्यापार इति चेत् ? तदीयचेष्टात्वावच्छिन्ने तदीययत्नत्वेन हेतुत्वात् सामग्र्युपनायकोऽपि मुखप्रक्षेपादिरूप एव, प्रापकादृष्टेन आकस्मिकधनप्राप्त्यादिस्थलेऽपि प्रतिग्रहादियत्नोऽवर्जनीय एव, किं बहुना ? यत्र व्यक्त्या यत्नो न कोऽपि दृश्यते तत्र दैवाक्षेपकभवान्तरीययत्नेनाप्युभयोस्तुल्यकक्षात्वमुपपादनीयम्, प्रधान-गुणभावस्यापेक्षिकत्वेन तद्बाधकत्वात्, तदुक्तम्—

" पुव्वकयं कम्मं चिय चित्तविवागमिह भन्नई दिव्वो । कालाइएहिं तप्पायणं तु तहपुरिसकारु त्ति ॥१॥
इय समणीइयोगा इयरेयरसंगया उ जुज्जन्ति । इय दिव्व-पुरुसगारा पहाण-गुणभावओ दो वि ॥२॥"

[ बीजादिविंशतिका ]

दैवम् आर्षत्वात् पुंस्त्वम्, कालादिभिस्तत्परिपाचनमिति— कृदभिहितन्यायात् कालादिभिः परिपक्वं

---

केवलान्वयिनो दैवमात्रजन्यत्वेनाभिमते सत्त्वान्न व्याघात इत्यर्थः । उक्ताभिप्रायकहरिभद्रसूरिवचनसंवादमुपदर्शयति— तदिदमभिप्रेत्योक्तमिति । **जो दिव्वेण०** इति— "यो दैवेन प्रक्षिप्तस्तथा तथा हन्त पुरुषकारोक्तिः । तत् ततः फलमुभयजमपि भण्यते खलु पुरुषकारत. ॥ एतेन मिश्रपरिणामिनस्तु यत् तन्मात्र च द्वयजन्यम् । दैवात् तु नवरं भण्यते निश्चयत उभयज सर्वम् ॥" इति संस्कृतम् । ननु मिश्रपरिणामिनस्तु यत् तत् कथं दैवमात्रजन्यमित्यत आह— **अत्रेति**— उक्तहरिभद्रसूरिवचने । "**परिणामित**" इत्यस्य स्थाने "परिणामिन" इति पाठो युक्त. । सर्वस्य पुरुषकारजत्वमसहमानः शङ्कते— **नन्विति** । उत्तरयति— **तदीयचेष्टात्वावच्छिन्न** इति । **सामग्र्युपनायकोऽपि** सामग्र्यनुमापकोऽपि । **मुखप्रक्षेपादिरूप एवेति**— मुखे भक्तादेर्हस्तादिना प्रक्षेपादिरपि तदीयचेष्टात्वावच्छिन्न एव तं प्रत्यपि तदीययत्नत्वेन यत्नस्य कारणत्वाद् यत्नरूपकारणमन्तरेण निरुक्तचेष्टैव न सम्भवतीति तदीयचेष्टारूपकार्येण तत्कारणीभूतस्तदीयप्रयत्नोऽनुमीयत एवेति प्रयत्नलक्षणपुरुषकारस्य न तत्र व्यभिचार इत्यर्थः, अन्यत्रापि पुरुषकारस्य व्यभिचारमपाकरोति— **प्रापकादृष्टेनेति**— धनप्रापकदैवेनेत्यर्थः, प्रापकादृष्टेनापि प्रतिग्रहादियत्नसहकृतेनैव धनप्राप्तिरिति पुरुषकारस्तत्राप्यस्तीति न व्यभिचार इत्यर्थः । यत्र न कोऽपि यत्न इदानीमुपलभ्यते तत्रापि दैवस्य कारणतयाऽभ्युपगतस्य कारणं जन्मान्तरीयप्रयत्नोऽपि तत्कारण भवत्येवेति न तत्रापि कार्ये पुरुषकारस्य व्यभिचार इत्याह— **किं बहुनेति** । **उभयो.** दैव-पुरुषकारयोः । **तुल्यकक्षत्वं** समानयोगक्षेमत्वम् । ननु यत्र यत्नो न दृश्यते तत्र जन्मान्तरीयस्य यत्नस्य सद्भावेऽपि तस्य गौणत्वमेव, प्राधान्येन त्वदृष्टस्यैव कारणत्वमित्यत आह— **प्रधान-गुणभावस्येति**— किञ्चित्कार्ये दैवस्य प्राधान्य पुरुषकारस्य गुणभावः, क्वचित् कार्ये पुरुषकारस्य प्राधान्यं दैवस्य गुणभाव इत्येवं प्रधान गुणभावस्यापेक्षिकत्वेन पुरुषकारकारणत्वाबाधकत्वादित्यर्थः, अत्रापि हरिभद्रसूरिवचनं संवादकमुपदर्शयति— **तदुक्तमिति** । **पुव्वकयं** ति— "पूर्वकृतं कर्मैव, चित्रविपाकमिह भण्यते दैवम् । कालादिकैस्तत्पाचनं तु तथा पुरुषकार इति ॥ इति समयनीतियोगाद् इतरेतरसङ्गतौ तु युज्येते । इति दैवपुरुषकारौ प्रधान-गुणभावतो द्वावपि ॥" इति संस्कृतम् । **दिव्वो** इत्यस्य संस्कृतं **दैवमिति**— एवं सति नपुंसकेन भाव्यमिति दिव्वो इत्येवं पुल्लिङ्गवचनं कथमित्यपेक्षायामाह— **आर्षत्वात् पुंस्त्वमिति** । **कालादिभिरिति**— "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायबलात् कालादिभिः परिपाचनमित्यस्य कालादिभिः परिपक्वमित्यर्थ इत्यर्थ., **तथापुरुषकार** इतीत्यस्य फलितमर्थमावेदयति— **दैवपरिणतस्यैवेति**, यस्यात्मनो दैवरूप. परिणामः प्रथमतोऽभवत् तस्यैव दैवरूपपरि-

तदित्यर्थः, दैवपरिणतस्यैवात्मनः कालादिपरिपाकेन पुरुषकारपरिणतिः, अभेदोपपत्तिरित्यर्थः, प्रधान-गुणभावत इति– कार्यविशेषेऽन्यतरस्य बह्वल्पव्यापारापेक्षया, जात्या तु– " अब्भन्तर-वज्झाणं " इत्यादिना प्रबन्धेन दैव-पुरुषकारयोस्तुल्यप्राधान्यमुपपादितमस्माभिरध्यात्ममतपरीक्षायामिति विस्तरार्थिना तत्र दृष्टिर्देया । तदेवं पञ्चकारणीनये हेतुद्वयनये वा सुदैववत् पुरुषकारस्य कार्यमात्रहेतुत्वान्मोक्षेऽपि हेतुत्वं ध्रुवम् । स च ग्रन्थिभेदानन्तरं– " तदूर्ध्वं बाध्यते दैवं प्रयोजनं तु विजृम्भते " [ ] इति वचनाद् दैवं बाधित्वा स्वातन्त्र्येण प्रवर्तमानो रत्नत्रयमयत्वमास्कन्दंश्चेतसः पुष्टिशुद्ध्यनुबन्धं विधाय सद्य एव मुमुक्षोर्मोक्षमर्पयति । तेन 'चारित्रक्रियाया अप्यभव्य-दूरभव्यादौ व्यभिचारात् ।

" संवरनिर्जरारूपो बहुप्रकारस्तपोविधिः शास्त्रे । रोगचिकित्साविधिरिव कस्यापि कथञ्चिदुपयुक्तः ॥ "
[ ]

इत्यनेन प्रतिपुरुषं नानाविधक्रियाया अनियतहेतुत्वदर्शनस्याहेतुत्वपर्यवसायकत्वाच्च न मोक्षोपायवादो ज्यायान्, इत्यपास्तम्, पुष्टिशुद्ध्यनुबन्धाभिव्य[ङ्ग्य]भावचारित्रत्वजातिमतः पुरुषकारस्य मोक्षं

---

णामयोगिन आत्मनो या कालादिपरिपाकेन पुरुषकाररूपेण परिणतिः साऽभेदोपपत्तिः, पूर्वकृत कर्मैव कालादिभिः परिपक्वं सत् पुरुषकाररूपं भवत्येतदेव दैवपुरुषकारयोरभेदोपपत्तिरभेदसमर्थनमित्यर्थः इत्यर्थः, दैवपुरुषकारयोरुभयोरपि कार्यमात्रं प्रति कारणत्वे व्यवस्थिते सति यत्किञ्चित्कार्यं प्राधान्येन दैवस्य कारणत्वं दैवमात्रजन्यं कार्यमेतदितिव्यवहारनिबन्धनं तत्र गुणभावेन पुरुषकारस्य कारणत्वं, यच्च कुत्रचित् कार्यं प्राधान्येन पुरुषकारस्य कारणत्वं पुरुषकारमात्रजन्यं कार्यमेतदिति-व्यवहारनिबन्धनं, तत्र गुणभावेन दैवस्य कारणत्वमित्येवं **प्रधान गुणभावतः** इत्येवंरूपेण दैवपुरुषकारकारणत्वं **कार्यविशेषे** क्वचित्कार्ये, **अन्यतरस्य** दैव-पुरुषकारयोर्मध्यादेकस्य **बह्वल्पव्यापारापेक्षया** यस्मिन् कार्ये दैवस्य बहुसङ्ख्यको व्यापारः, पुरुषकारस्य त्वल्पसङ्ख्यको व्यापारस्तस्मिन् कार्ये दैवस्य प्राधान्येन कारणत्वं पुरुषकारस्य तु गुणभावेन कारणत्वम्, यत्र च पुरुषकारस्य बहुसङ्ख्यको व्यापारो दैवस्य त्वल्पसंख्यको व्यापारस्तत्र कार्ये पुरुषकारस्य प्राधान्येन कारणत्वं दैवस्य तु गुणभावेन कारणत्वमित्यर्थः । यदा तु व्यापारगतबह्वल्पसङ्ख्ययोर्न विवक्षा तदानीं कार्यमात्रे सामान्यतः समप्राधान्येनैव दैव-पुरुषकारयोः कारणत्वं प्रवचनोपपादितमवसेयमित्याह– **जात्या** **त्विति** । उपदिशति– **विस्तरार्थिनेति** । **तत्र** अध्यात्ममतपरीक्षायाम् । उपसंहरति– **तदेवमिति** । **पञ्चकारणीनये** काल-स्वभाव-नियति-दैव-पुरुषकाराः पञ्चापि कार्यमात्रे कारणमिति मते । **वा** अथवा । **हेतुद्वयनये** कार्यमात्रे दैव-पुरुषकारौ कारणमिति मते । " **सुदैववत्** " इत्यस्य स्थाने " 'दैववत् " इति पाठो ज्ञेयः । **मोक्षेऽपि हेतुत्वं ध्रुवं** मोक्षस्य कार्यमात्रान्तर्गतत्वेन तत्रापि दैववत् पुरुषकारस्य कारणत्वं निश्चितम् । **स चेत्यस्य मोक्षमर्पयतीत्यनेन** सम्बन्धः । **स च** पुरुषकारश्च । **तदूर्ध्वं** ग्रन्थिभेदोत्तरकाले । " **प्रयोजनं** " इत्यस्य स्थाने " योजनं " इति पाठो भवतुमर्हति, **योजनं** प्रयत्नः । **स्वातन्त्र्येण प्रवर्तमान** इत्यादिकं पुरुषकारस्य विशेषणं बोध्यम् । **सद्य एव** चेतसः पुष्टि शुद्ध्यनुबन्धविधानान्यतरकाल एव । **तेनेत्यस्य** 'अपास्तम्' इत्यनेन सम्बन्धः । चारित्रक्रियायास्तावन्मोक्षकारणत्वं न सम्भवति, अभव्य दूरभव्यादौ चारित्रक्रियायाः सत्त्वेऽपि मोक्षस्याभावेन व्यतिरेकव्यभिचारादित्याह – **चारित्रक्रियाया अपीति** । संवर– निर्जरारूपतपोविधेरपि न मोक्षोपायत्वमित्याह– **संवरेति** । **इत्यनेन** उक्तवचनेन । **प्रतिपुरुषं** पुरुषं पुरुषं प्रति । **अनियतहेतुत्वदर्शनस्य** कस्यचित् पुरुषस्यैका क्रिया मोक्षं प्रति कारणं पुरुषान्तरस्य तदन्या क्रिया मोक्षं प्रति कारणमित्येवमनियतहेतुत्वबोधनस्य । **अहेतुत्वपर्यवसायकत्वात्** तत्क्रियाया अभावेऽपि क्रियान्तरेण मोक्षस्य भावेन व्यतिरेकव्यभिचारेण न मोक्षत्वावच्छिन्नं प्रति सा क्रिया कारणमेवं क्रियान्तरस्याभावेऽपि तत्क्रियया मोक्षस्य भावेन व्यतिरेकव्यभिचारेण क्रियान्तरमपि न मोक्षत्वावच्छिन्नं प्रति कारणमित्येवमकारणत्वपर्यवसायकत्वात् । **चः** समुच्चये । **मोक्षोपायवादः** मोक्षं प्रति कस्यचित् कारणत्वाभ्युपगमवादः । **न ज्यायान्**

प्रति नियतहेतुताया अप्रत्यूहत्वात्, पुष्टिशुद्ध्यनुबन्धे च प्रणिधानाद्यन्विततत्क्तक्रियाणामनियतहेतुत्वेऽपि तद्विधीनामारोग्यहेतुधातुसाम्ये तत्तच्चिकित्साविधीनामिवानुपपत्त्यभावात् । यत् पुनः उच्यते- पूर्वं निर्गुणस्य सतः सम्यक्त्वादिप्राप्तौ किं तदनन्तरं नानाविधगुणोपायान्वेषणेति तत् तुच्छम्, पूर्वसेवायां मृदूपायसाध्यायां तादृग्गुणानपेक्षायामपि महाविद्यालाभस्थानीये चारित्रे विशिष्टगुणापेक्षाया आवश्यकत्वात्, अस्तु वा स्वसामग्रीप्रभवानां गुणानामवर्जनीयत्वमेवानन्तरमपेक्षा । किञ्च, सकलशिष्टैकवाक्यतया यम-नियमादौ मुमुक्षोः प्रवृत्तिरेव मोक्षोपायत्वे मानम्, तदुक्तम्—

"विफला विश्ववृत्तिर्नो न दुःखैकफलापि च । दृष्टलाभफलेनापि विप्रलम्भोऽपि नेदृशः ॥ १ ॥"

[ कुसुमाञ्जलिस्तबक० श्लो० ] इत्यादि ।

---

न श्रेष्ठतमः । इति एवं स्वरूपमाशङ्कनम् । तेन पुरुषकारस्योक्तदिशा मोक्षत्वावच्छिन्नं प्रति हेतुत्वव्यवस्थापनेन । अपास्तं निरस्तमित्यर्थः । तेनेत्यनेनोपदिष्टमेव निरासकारणं स्पष्टप्रतिपत्तये उपदर्शयति- पुष्टीति- चेतसः पुष्टिशुद्ध्यनुबन्धे- नाभिव्यङ्ग्याया भावचारित्रत्वलक्षणजातिस्तद्वतः पुरुषकारस्येत्यर्थ., अप्रत्यूहत्वात् बाधलक्षणविघ्नरहितत्वात् "तत्क्त" इत्यस्य स्थाने "तत्त" इति पाठो युक्तः । तद्विधीनां पुष्टिशुद्ध्यनुबन्धार्थं तत्तत्क्रियाविधायकशास्त्रवचनानाम्, अस्या- नुपपत्त्यभावादित्यनेनान्वयः । अत्र दृष्टान्तमाह- आरोग्येति- धातूनां कफ-पित्त-वायूनां मध्यादेकस्य द्वयोस्त्रयाणां वा वैषम्ये कफप्रभव पित्तप्रभव-वायुप्रभवरोगाणां कफ-वायुद्वयप्रभव-कफपित्तोभयप्रभव-पित्तवायूभयप्रभवरोगाणां कफपित्त- वायुत्रयप्रभवरोगस्य वा प्रादुर्भावो भवति, निरुक्तधातुत्रयाणां साम्ये तु निरुक्तरोगविनाशलक्षणमारोग्यमुपजायत इति आरोग्यजनक यद् धातुसाम्य तत्र तदर्थम्, तत्तच्चिकित्साविधीनां तत्तच्चिकित्साविधायकायुर्वेदवचनानाम्, अनुप- पत्त्यभाववत्, पुष्टिशुद्ध्यनुबन्धार्थमनियतहेतुप्रणिधानाद्यन्विततत्तत्क्रियाविधायकशास्त्रवचनानामप्यनुपपत्त्यभावादित्यर्थः । अन्यदपि परकीयाक्षेपवचनमुपन्यस्य प्रतिक्षिपति- यत् पुनरिति । उच्यते परेणाभिधीयते । पूर्वं सम्यक्त्वादिगुणप्राप्तितः प्राक्काले । निर्गुणस्य सम्यक्त्वादिविशिष्टगुणरहितस्य, सतः तथावस्थितस्य जीवस्य । सम्यक्त्वादिप्राप्तौ सम्यक्त्वादि- गुणप्राप्तौ सत्याम् । किं किमर्थम् । तदनन्तरं सम्यक्त्वादिगुणप्राप्त्यनन्तरम् । तत् तुच्छं नानाविधगुणोपायान्वेषणकै- मर्थ्यप्रतिपादकं परवचनं तुच्छ न समीचीनम् । तत्र हेतुमाह- पूर्वसेवायामिति । अथवा नानाविधगुणोपायान्वेषणं न क्रियत एव किन्तु स्वसामग्रीप्रभवा गुणास्तदानी भवन्त्येवेत्येतावतैव तदपेक्षा गीयत इत्याह- अस्तु वेति । यमनियमादौ मोक्षोपायत्वे प्रमाणमप्यस्त्येवेत्याह- किञ्चेति । सकलशिष्टैकवाक्यतया सकलशिष्टसम्मततया । उक्तार्थे उदयनाचार्य- वचनसंवादमाह- तदुक्तमिति । "दृष्टलाभफलेनापि" इत्यस्य स्थाने "दृष्टलाभफला नापि" इति पाठ. सम्यग् । उक्तपद्यार्थ- स्पष्टप्रतिपत्तये तद्ग्रन्थ एवोल्लिख्यते—"अस्तु दृष्टमेव सहकारिचक्र किमपूर्वकल्पनया" इति चेत्, न- विश्ववृत्तितः, "विफला विश्ववृत्तिर्नो न दुःखैकफलाऽपि वा । दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृशः ॥" [ कुसुमाञ्जलिस्तबक- श्लो० ] यदि हि पूर्वपूर्वभूतपरिणतिपरम्परामात्रमेवोत्तरोत्तरनिबन्धनम्, न परलोकार्थी कश्चिदिष्टापूर्तयोः प्रवर्तेत, नहि निष्फले दुःखैकफले वा कश्चिदेकोऽपि प्रेक्षापूर्वकारी घटते, प्रागेव जगत्; लाभपूजाख्यात्यर्थमिति चेत् ? लाभादय एव किं- निबन्धनाः ? नहीय प्रवृत्तिः स्वरूपत एव तद्धेतुः; यतो वाऽनेन लब्धव्यं यो वैनं पूजयिष्यति स किमर्थम् ?, ख्यात्यर्थ- मनुरागार्थं च, जनो दातरि मानयितरि च रज्यते, जनानुरागप्रभवा हि सम्पद इति चेत् ? न- नीतिनर्मसचिवेष्वेव तदर्थं दानादिव्यवस्थापनात्; त्रैविद्यतपस्विनोऽपि धूर्तवका एवेति चेत् ? न- तेषा दृष्टसम्पद प्रत्यनुपयोगात्; सुखार्थं तथा करोतीति चेत् ?, न- नास्तिकैरपि तथाकरणप्रसङ्गात्, सम्भोगवत्; लोकव्यवहारसिद्धत्वादफलमपि क्रियते वेद- व्यवहारसिद्धत्वात् सन्ध्योपासनवदिति चेत् ?, गुरुमतमेतत्, न तु गुरोर्मतम्, ततो नेदमनवसर एव वक्तुमुचितम्; वृद्धै- र्विप्रलब्धत्वाद् बालानामिति चेत् ?, न-वृद्धानामपि प्रवृत्ते·; न च विप्रलम्भकाः स्वात्मानमपि विप्रलभन्ते, तेऽपि वृद्ध- तरैरित्येवमनादिरिति चेत् ? न तर्हि विप्रलिप्सुः कश्चिदत्र, यत. प्रतारणशङ्का स्यात्, इद प्रथम एव कश्चिदनुष्ठायापि धूर्तः परानजुप्रापयतीति चेत् ? किमसौ सर्वलोकोत्तर एव यः सर्वस्वदक्षिणया सर्वबन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्म-

तेनानुपायवादः षष्ठं मिथ्यात्वस्थानम्, मोक्षोपायवादश्च सम्यक्त्वस्थानमिति सुव्यवस्थितम्। नन्वेते षडपि पक्षप्रतिपक्षाः स्याद्वादलाञ्छिताः सुनया एव, तन्निरपेक्षाश्च दुर्नया एवेत्येकेषु मिथ्यात्वस्थानम्, अपरेषु च सम्यक्त्वस्थानकमिति को विशेष इत्यत आह– मार्गेत्यादि, नास्तित्ववादे गुरुशिष्यक्रियाऽक्रियाफलादिव्यवहारविलोपान्मार्गत्यागः, अस्तित्ववादे चोक्तव्यवहारप्रामाण्याश्वासेन तत्प्रवेश इत्येताभ्यां हेतुभ्यां फलतस्तत्त्वं सम्यक्त्वमिथ्यासाधनकत्वमिष्यते ॥ २४ ॥

अ[न]भिनिविष्टं प्रत्येतदुक्तम्, एकान्ताभिनिवेशे तु जात्या सर्वेषां तुल्यत्वमेवेत्याह—

**स्वरूपतस्तु सर्वेऽपि, स्युर्मिथोऽनिश्रिता नयाः।**
**मिथ्यात्वमिति को भेदो, नास्तित्वास्तित्वनिर्मितः ॥ १२५ ॥**

**नयामृत०—स्वरूपतस्त्विति०–** स्पष्टः, मिथोऽनिश्रिता इति– स्याद्वादमुद्रया परस्पराकाङ्क्षारहिता इत्यर्थः ॥ १२५ ॥

ननु नास्तिकास्तिकव्यवहारप्रयोजकतयैवैतेषां भेदो भविष्यतीत्यत आह—

**धर्म्यंशे नास्तिको ह्येको, बार्हस्पत्यः प्रकीर्तितः।**
**धर्मांशे नास्तिका ज्ञेयाः, सर्वेऽपि परतीर्थिकाः ॥ १२६ ॥**

---

चर्येण तपसा श्रद्धया वा केवल परवञ्चनकुतूहली यावज्जीवमात्मानमवसादयति, कथं वैनं प्रेक्षापूर्वकारिणोऽप्यनुविदध्युः, केन वा चिह्नेनायमीदृशस्त्वया लोकोत्तरप्रज्ञेन प्रतारक इति निर्णीतः? नन्वेतावतो दु.खराशेः प्रतारणसुख गरीयः, यतः पाखण्डाभिमतेष्वप्येव दृश्यत इति चेत्? न–हेतुदर्शनादर्शनाभ्यां विशेषात्, अनादौ चैवम्भूतेऽनुष्ठाने प्रतार्यमाणे प्रकारान्तरमाश्रित्यापि बहुवित्तव्ययायासोपदेशमात्रेण प्रतारणा स्यात्, न त्वनुष्ठानागोचरेण कर्मणा, प्रमाणविरोधमन्तरेण पाखण्डित्वप्रसिद्धिरपि न स्यात्" इति उपसंहरति– **तेनेति**– मोक्षोपायव्यवस्थापनेनेत्यर्थः। **मार्गत्याग-प्रवेशाभ्यामि**त्याद्युत्तरार्द्धं व्याख्यातुमवतारयति– **नन्विति**। **एते** त्रयोविंशत्युत्तरशततमपद्योक्ता आत्मा नास्तीत्यादिपक्षाः, चतुर्विंशत्युत्तरशततमपद्यपूर्वार्धोपदिष्टाऽस्त्यात्मेत्यादयः पूर्वपक्षविरुद्धपक्षाः। **षडपि** प्रत्येक षडपि, तेन समुदितास्ते द्वादश पक्षा इति बोध्यम्। **स्याद्वादलाञ्छिताः** स्यान्नास्त्यात्मा, स्यान्न नित्य आत्मा, स्यान्न कर्ताऽऽत्मा, स्यान्न भोक्ताऽऽत्मा, स्यान्न मोक्षः स्यान्न मोक्षोपाय इत्येवं षट् पक्षाः स्याद्वादलाञ्छितस्वरूपाः, स्यादस्त्यात्मा, स्यान्नित्य आत्मा, स्यादात्मा कर्ता, स्याद् भोक्ताऽऽत्मा, स्यादस्ति मुक्तिः, स्यादस्ति मुक्त्युपाय इत्येव षट् पक्षाः स्याद्वादलाञ्छितस्वरूपाश्च। **तन्निरपेक्षाश्च** स्याद्वादनिरपेक्षाः पुनः। **एकेषु** नास्त्यात्मेत्यादिषट्सु पक्षेषु। **अपरेषु च** अस्त्यात्मेत्यादिषट्सु तत्प्रतिपक्षपक्षेषु पुनः। **को विशेषः** न कोऽपि विशेषो दृश्यत इत्याक्षेप.। **गुरुशिष्येति**– यदि नास्त्यात्मा तर्हि को गुरुः? कश्च शिष्यः? इति गुरुशिष्यात्मनोरभावादात्मनिष्ठयोरध्यापकत्वादिरुपगुरुत्वा-ऽध्येतृत्वादिलक्षणशिष्यत्वयोरप्यभाव इत्ययं गुरुरयं च शिष्य इत्येवं गुरु-शिष्यादिव्यवहारस्य विलोपः, आत्मनश्चाभावे कं प्रति विहिता क्रिया निषिद्धा च क्रिया भवेदित्यस्येय विहिता क्रियेति इयं चास्य निषिद्धा क्रियेति क्रियाऽक्रियादिव्यवहारस्य विलोपः, विहित-निषिद्धक्रिययोरभावे अनया क्रियया तत्कर्तुरात्मनः स्वर्गादिकमिष्टफलमुपजायते, अनया क्रियया पुनरनिष्टं नरकाद्यनिष्टफल भवतीत्येवं फलव्यवहारस्य विलोप., आदिपदादयमात्मा बद्धोऽयमात्मा मुक्त इत्यादिव्यवहारस्योपग्रहः, इत्येवं निरुक्तव्यवहारविलोपान्मार्गत्याग इत्यर्थः। **तत्प्रवेश**· मार्गप्रवेशः। **एताभ्यां** मार्गत्याग-मार्गप्रवेशाभ्याम् ॥ १२४ ॥

पञ्चविंशत्युत्तरशततमपद्यमवतारयति– **अनभिनिविष्टमिति**– अनाग्रहशालिन प्रतीत्यर्थ.। **एतत्** मिथ्यात्वस्थान-सम्यक्त्वस्थानविभजनम्। विवृणोति– **स्वरूपतस्त्वितीति**। स्पष्टत्वात् प्रत्येकपदव्याख्यान नात्र कर्तव्यतामञ्चतीत्याह- **स्पष्ट** इति। **मिथोऽनिश्रिता** इत्यस्य विवरण– **स्याद्वादमुद्रया परस्पराऽऽकाङ्क्षारहिता** इति ॥ १२५ ॥

**नयामृत०**—धर्म्यंश इति– धर्मिणः– आत्मनः, अंशे-नास्तित्वभागे, एको बार्हस्पत्यः–चार्वाको नास्तिकः प्रकीर्तितः धर्माणाम्– आत्मनः शरीरपरिमाणत्व-नानात्व-परिणामित्व-ध्रुवत्व-सर्वज्ञजातीयत्वादीनाम्, अंशे– नास्तित्वपक्षे, सर्वेऽपि नैयायिक-वैशेषिक-वेदान्ति-साङ्ख्य पातञ्जल-जैमिनीयादयः-परतीर्थिकाः, नास्तिकाः, ज्ञेयाः, यत्र यथा यदस्तित्वं तत्र तथा तदनभ्युपगमस्य स्वरसतो भगवद्वचनाश्रद्धानस्यैव वा नास्तिकपदप्रवृत्तिनिमित्तत्वादिति भावः, चार्वाकादिभिन्नदर्शनस्वीकर्तृत्वमेवास्तिकत्वमिति रूढिस्त्वनुकम्पामात्रम् ॥ १२६ ॥

सम्यक्त्व-मिथ्यात्वस्थानकयोरुक्तमेव प्रकारं क्रियावाद-तदितरवादेष्वतिदिशन्नाह—

**इत्थमेव क्रियावादे, सम्यक्त्वोक्तिर्न दुष्यति ।**
**मिथ्यात्वोक्तिस्तथाऽज्ञाना-क्रिया-विनयवादिषु ॥ १२७ ॥**

**नयामृत०**—इत्थमेवेति । इत्थमेव मार्गप्रवेशत्यागाभ्यामेव, क्रियावादे सम्यक्त्वोक्तिः "सम्मद्दिट्ठी किरियावाइ" इत्यादिलक्षणा । अक्रियाऽज्ञानविनयवादिषु च मिथ्यात्वोक्तिः– "सेसा य मिच्छगा वा" इत्यादि, न दुष्यति० न दोषावहः भवति, फलत इत्थं विभागाभिप्रायस्याविरोधात्, जात्या चान्यत्र सर्वतौल्योक्तेरुपपत्तेः ॥ १२७ ॥

क्रियावादस्य सम्यक्त्वरूपतामेव युक्त्यन्तरेण द्रढयति—

**क्रियायां पक्षपातो हि, पुंसां मार्गाभिमुख्यकृत् ।**
**अन्त्यपुद्गलभावित्वादन्येभ्यस्तस्य मुख्यता ॥ १२८ ॥**

**नयामृत०**—क्रियायामिति । क्रियायां पक्षपातो मोक्षेच्छयाऽऽवेशो हि पुंसां मार्गाभिमुख्य-

---

षड्विंशत्युत्तरशततमपद्यमवतारयति– नन्विति । एतेषां नयानाम् । विवृणोति– **धर्म्यंश इतीति**– धर्मिणोऽशो धर्म्यंश इति समासमवलम्ब्य **धर्मिण** इत्यस्य विवरणमात्मन इति, **अंशे** इत्यस्य विवरणं– **नास्तित्वभागे** इति । **बार्हस्पत्यः** बृहस्पतिप्रणीतसूत्रानुसरणशीलः । स क इत्यपेक्षायामाह– **चार्वाक** इति– पृथिव्यादिचतुष्टयमेव तत्त्वम्, शरीरव्यतिरिक्त आत्मा नास्ति, प्रत्यक्षमेवैक प्रमाणमित्याद्युपगन्ता चार्वाकनामा धर्माणामंशो धर्मांश इति समासमवलम्ब्य **धर्माणामित्यस्य** विवरणमात्मन. **शरीरपरिमाणत्व-नानात्व-परिणामित्व-ध्रुवत्व-सर्वज्ञजातीयत्वादीनामिति** । **अंशे** इत्यस्य विवरण– **नास्तित्वपक्ष** इति– आत्मन शरीरपरिणामित्वादिक नास्तीति पक्ष इति तदर्थः । **सर्वेऽपीत्यस्य** पर्यवसितार्थ-कथनं– **नैयायिक-वैशेषिक-वेदान्ति-साङ्ख्य-पातञ्जल-जैमिनीयादय** इति । किं नास्तिकपदप्रवृत्तिनिमित्तं येन तद्वा-न्नैयायिकादयो नास्तिकपदव्यपदेश्या इत्यपेक्षाया तद्भावमुपदर्शयति– **यत्र यथेति** स्पष्टम् । तर्हि नैयायिकादीनां लोक-रूढ्याऽऽस्तिकव्यपदेश्यत्व कथमित्यपेक्षायामाह– **चार्वाकादिभिन्नेति** । **अनुकम्पामात्रमिति**– अनुकम्पैव केवलम्, न तु वस्तुतो नैयायिकादय आस्तिका इति ॥ १२६ ॥

सप्तविंशत्युत्तरशततमपद्यमवतारयति– **सम्यक्त्वेति** । **उक्तमेव प्रकारं** अनन्तराभिहितमेव मार्गप्रवेश-तत्त्यागलक्षण-प्रकारम् । **तदितरेति**– क्रियेतरेत्यर्थः । विवृणोति– **इत्थमेवेतीति** । इत्थमेवेत्यस्य विवरणं– **मार्गप्रवेश-त्यागाभ्यामेवेति** । **सम्म०** इति– "सम्यग्दृष्टिः क्रियावादी" इति संस्कृतम् । **सेसा०** इति– "शेषाश्च मिथ्यात्वगा वा" इति संस्कृतम् । न दुष्यतीत्यस्य विवरण– **न दोषावहो भवतीति** । तत्र हेतुमाह– **फलत** इति ॥ १२७ ॥

अष्टाविंशत्युत्तरशततमपद्यमवतारयति **क्रियावादस्येति** । विवृणोति– **क्रियायामितीति** । **पक्षपात** इत्यस्य विवरण– **मोक्षेच्छयाऽऽवेश** इति । हि यतः । मार्गाभिमुख्यकृदित्यस्य विवरणं– **मार्गानुसारितास्थैर्याधायको भवतीति** ।

कृत् मार्गानुसारितास्थैर्याधायको भवति, तेनान्त्यपुद्गलभावित्वात् चरमपुद्गलपरावर्तमात्रसंभवित्वात्, अन्येभ्यः– अक्रियावादादिभ्यः, तस्य क्रियावादस्य मुख्यता, तदुक्तं दशाचूर्णौ—

"जो अकिरियावाई सो भविओ अभविओ वा कण्णपक्खिओ सुक्कपक्खिओ वा। जो किरिआवाई सो णियमा भविओ णियमा सुक्कपक्खिओ अन्तो पुग्गलपरिअट्टस्स सिज्झइ" ॥ [ ] इत्यादि।

अत्र च क्रियावाद्यादीनां त्रिषष्ट्यधिकशतत्रयभेदप्रतिपादिका—

"असियसयं किरियाणं, अकिरियवाईण होइ चुलसीइ। अन्नाणि य सत्तट्ठी वेणइयाणं तु बत्तीसा ॥१॥"

[ सू० प्र० सम० अध्य० निर्युक्तौ ]

इति गाथा विनेयजनानुग्रहार्थं इह व्याख्यायते– अशीत्युत्तरशतं क्रियावादिनाम्, तत्र कर्तारं विना क्रियाऽसम्भव इति नाम्नात्मसमवायिनीं वदन्ति ये तच्छीलाश्च ते क्रियावादिनः, ते पुनरात्माद्यस्तित्वप्रतिपत्तिलक्षणा अमुनोपायेनाशीत्यधिकशतसङ्ख्या विज्ञेयाः, जीवा-ऽजीवा-ऽऽश्रव-बन्ध-संवर-निर्जरा-पुण्या-ऽपुण्य-मोक्षाख्यान् नव पदार्थान् पट्टिकादौ लिखित्वा परिपाट्या जीवपदार्थस्याधः, स्व-परभेदावुपन्यसनीयौ, तयोरधो नित्या-ऽनित्यभेदौ तयोरप्यधः कालेश्वरा-ऽऽत्म-नियति-स्वभावभेदा उपन्यसनीयाः, ततश्चेत्थमभिलापः कर्तव्यः– अस्ति जीवः स्वतो नित्यः कालत इत्येको विकल्पः, तदर्थश्च विद्यते खल्वयमात्मा स्वेन रूपेण नित्यश्च कालत इति कालवादिनः पक्षः, अत्रास्तित्वे स्वतस्त्वमवच्छेदकीभूय विशेषणम्, नित्यत्वमात्मन एवोपरञ्जनकं विशेषणम्, कालत इति नियामकं विद्यमानत्वरूपसत्तायाः

---

तेन क्रियापक्षपातस्य मार्गानुसारितास्थैर्याधायकत्वेन, अस्य मुख्यतेत्यनेन सम्बन्धः। अन्त्यपुद्गलभावित्वादित्यस्य विवरणं– चरमपुद्गलपरावर्तनमात्रसंभावित्वादिति। अन्येभ्य इत्यस्य विवरणं– अक्रियावादादिभ्य इति, आदिपदादज्ञान-विनयवादादीना ग्रहणम्। तस्येत्यस्य विवरण– क्रियावादस्येति। उक्तार्थे दशाचूर्णिवचनसम्मतिमुपदर्शयति– तदुक्तमिति। जो० इति– "योऽक्रियावादी स भविकोऽभविको वा, कृष्णपक्षिकः, शुक्लपक्षिको वा; यः क्रियावादी स नियमभविको नियमाच्छुक्लपक्षिकोऽन्तःपुद्गलपरावर्तस्य सिद्ध्यति" इति संस्कृतम्। अत्र च क्रियावादादिविचारे च। प्रतिपादिकेत्यस्य गाथेत्यनेनान्वयः। असिय० इति– "अशीत्युत्तरशतं क्रियाणामक्रियावादिनो भवति चतुरशीतिः। अज्ञानिनश्च सप्तषष्टिर्वैनयिकाना तु द्वात्रिंशत्" इति संस्कृतम्। इति गाथा उक्तस्वरूपा गाथा। विनेयजनानुग्रहार्थं शिष्यादिजनानुग्रहार्थम्। इह अस्मिन् ग्रन्थे। व्याख्यायते विव्रियते। क्रियावादिनः स्वरूप सङ्ख्या चोपदर्शयति– तत्रेति– क्रियावाद्यादिषु मध्ये इत्यर्थः। "नाम्ना" इत्यस्य स्थाने "नाना" इति पाठो युक्तः। तच्छीलाश्च नानात्मसमवायिनीं क्रिया वदितु शील स्वभावो येषा ते तच्छीलास्ते च। ते पुनः क्रियावादिनः पुनः। आत्माद्यस्तित्वप्रतिपत्तिलक्षणाः आत्मादीना पदार्थाना यदस्तित्व तदभ्युपगमस्वरूपाः। अमुनोपायेन जीवा-ऽजीवेत्याद्यनन्तरोपदर्श्यमानोपायेन। परिपाट्या लेखनं भावयति– जीवपदार्थस्याध इति– जीवः स्वतः परतश्च नित्योऽनित्यः कालेश्वराऽऽत्म-नियति-स्वभावभेदतः, एवमुट्टङ्कनम्। तयोरधः स्व-परयोरधः। तयोरप्यधः नित्या-ऽनित्ययोरप्यधः। ततश्च एवं परिपाट्योपन्यासतश्च। इत्थम् अस्ति जीव इत्याद्यनन्तराभिधीयमानप्रकारेण। तदर्थश्च अस्ति जीव. स्वतो नित्यः कालत इत्यभिलापार्थश्च। अत्र अस्मिन् विकल्पे। अवच्छेदकीभूय विशेषणम् अस्तित्वे अवच्छेदकतया विशेषण स्वतस्त्वमित्यतः स्वरूपावच्छिन्नास्तित्ववानित्याकारता प्रयोगस्य निष्पद्यते। कालतो नित्य आत्मेत्यपि प्रयोगघटकम्, तत्र नित्यत्वमुपरञ्जकविशेषणम्, कालत इति चास्तित्व एव नियामकतयाऽन्वेतीत्याह– नित्यत्वमिति। कथ कालत इति नियामकमित्यपेक्षायामाह– विद्यमानत्वेति– एतेन नित्य आत्मा कालनियम्यत्वासाधारणात्मत्वाद्यवच्छिन्नविद्यमानत्वरूपा-

कालनियम्यत्वात् १, कालत इत्यस्य स्थाने ईश्वरत इति वदत ईश्वरवादिनो द्वितीयो विकल्पः, ईश्वरस्य सर्वनियन्तृत्वेन आत्मसत्ताया अपि तन्नियम(म्य)त्वात् २, ईश्वरत इत्यस्य स्थाने आत्मत इति कुर्वत आत्मवादिनस्तृतीयः, स्वसत्तायाः स्वनियम्यताया अनन्यगत्यैव स्वीकारात् ३, नियतित इति करणे चतुर्थविकल्पो नियतिवादिनः ४, स्वभावत इति करणे पञ्च विकल्पाः स्वभाववादिनः ५, एवं स्वत इत्यजहता लब्धाः पञ्च विकल्पाः, परत इत्यनेनापि पञ्च एव लभ्यन्ते, नित्यत्वापरित्यागेन चैते दशविकल्पाः १० एवमनित्यत्वेनापि दशैव २० । एते विंशतिर्जीवपदार्थेन लब्धाः, अजीवादिष्वप्यष्टस्वेवमेव प्रतिपदं विंशतिर्विकल्पानाम्, अतो विंशतिर्नवगुणाः शतमशीत्युत्तरं १८० क्रियावादिनामिति । अक्रियावादिनां च भवन्ति चतुरशीतिभेदाः, नहि कस्यचिदवस्थितस्य पदार्थस्य क्रिया समस्ति क्रियोत्पत्त्याधारत्वेनाभिमत एव काले पदार्थावस्थितेरभावादित्येवंवादिनोऽक्रियावादिनः, तथा चाहुरेके—
"क्षणिकाः सर्वसंस्कारा अस्थितानां कुतः क्रिया ?। भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते ॥१॥"
[ ] इत्यादि ।

---

स्तित्वत्वानित्याकारकः कालतो नित्यः स्वतोऽस्ति जीव इति प्रथमोऽभिलाप इति । **कालत** इत्यस्येति स्पष्टम् । तत्र नित्य आत्मेश्वरनियम्यत्वासाधारणात्मत्वाद्यवच्छिन्नस्वसत्तारूपास्तित्वत्वानित्याकारो बोध्यः । कथमात्मनः सत्तेश्वरनियम्येत्यपेक्षायामाह– **ईश्वरस्येति** । **तन्नियम्यत्वाद्** ईश्वरनियम्यत्वात् । तृतीयविकल्पस्वरूपमुपदर्शयति– **ईश्वरत इत्यस्येति** । **अनन्यगत्यैवेति**– परनियम्यत्वे नियामकस्यापि परस्य सत्ता परनियम्येत्येवमनवस्थाप्रसङ्गात्, तत्परिहारेऽन्यप्रकारो नास्तीत्यात्मनियम्यत्व एव स परिहृतो भवतीत्येवमनन्यगत्यैवेत्यर्थः । चतुर्थविकल्पस्वरूपमुपदर्शयति– **नियतित इति** । **करण** इति– आत्मन इत्यस्य स्थाने नियतित इति करणे इत्यर्थः । पञ्चमविकल्पमुपदर्शयति– **स्वभावत इति करणे** इति– नियतित इत्यस्य स्थाने स्वभावत इति करणे । एषु पञ्चसु विकल्पेषु स्वत इत्यस्य न परित्याग इत्याह– **एवमिति** । **पञ्च विकल्पाः** अस्ति जीवः स्वतो नित्यः कालतः१, अस्ति जीवः स्वतो नित्य ईश्वरतः२, अस्ति जीवः स्वतो नित्य आत्मतः३, अस्ति जीवः स्वतो नित्यो नियतितः४, अस्ति जीवः स्वतो नित्यः स्वभावतः५, इत्येवं स्वत इत्यस्यापरित्यागेन पञ्च विकल्पाः । **परत इत्यनेनापीति**– अस्ति जीवः परतो नित्यः कालतः१, अस्ति जीवः परतो नित्य ईश्वरतः२, अस्ति जीवः परतो नित्य आत्मतः३, अस्ति जीवः परतो नित्यो नियतितः४, अस्ति जीवः परतो नित्यः स्वभावतः५, इत्येव परत इत्यस्यापरित्यागेन पञ्चविकल्पा लभ्यन्ते इत्यर्थः । द्वयोर्मेलने दश विकल्पाः, सर्वत्र नित्यत्वस्यापरित्याग इत्याह– **नित्यत्वापरित्यागेनेति** । उक्तदिशा अनित्यत्वेनापि दश विकल्पा इत्यतिदिशति– **एवमिति**– नित्यत्वस्थाने अनित्यत्वस्य प्रवेशोऽन्यत् सर्वं समानमिति । नित्यत्वापरित्यागेन दशानां विकल्पानामनित्यत्वापरित्यागेन दशानां विकल्पाना मेलने विंशतिर्विकल्पा जीवपदार्थापरित्यागेन लब्धा इत्युपसंहरति– **एते** इति । प्रत्येकमजीवादिष्वप्यष्टपदार्थेषूक्तदिशा विंशतिर्विकल्पानां नवगुणिताना च तेषामशीत्युत्तरं शतं क्रियावादिनामित्याह– **अजीवादिष्वपीति** । अक्रियावादिना चतुरशीतिभेदानुपदर्शयितुमाह– **अक्रियावादिनां चेति** । अक्रियावादिनां स्वरूपं निरूपयति– **नहीति**– अस्य **समस्तीत्यनेनान्वयः** । अवस्थितस्य पदार्थस्य क्रिया नास्तीत्यत्र हेतुमुपदर्शयति– **क्रियोत्पत्त्याधारत्वेनेति**– प्रथमक्षणावस्थितस्य वस्तुनो यदि द्वितीयक्षणेऽवस्थितिर्भवेत् स्यात् तदा तत्र द्वितीयक्षणभाविनी क्रिया, न चैवम्, पदार्थानां क्षणमात्रस्थायित्वेन द्वितीयक्षणे स्थितेरेवाभावादित्यर्थः । उक्तार्थाभ्युपगन्तॄणा मतं तद्वचनेनैव प्रकटयति– **तथा चाहुरेके** इति । क्षणिका इति– **सर्वसंस्काराः** सर्वेऽपि पदार्थाः, **क्षणिकाः** क्षणमात्रस्थायिन, एवं च **अस्थितानां** द्वितीयादिक्षणेऽनवस्थितानां, **क्रिया** द्वितीयादिक्षणभाविनी क्रिया, **कुतः** कस्मात् कारणात्, न कस्मादपीति यावत्, भवनादिलक्षणा तु क्रिया क्षणिकानामपि समस्तीति न तस्याः प्रतिषेध इत्याशयेनाह– **भूतिरिति**– एषां क्षणिकानां पदार्थानां या भूतिर्भवनमुत्पत्तिरिति यावत्, **सैव** क्रिया, एवकारेण भवनातिरिक्तक्रियाया प्रतिषेधः, **कारकमव्यवहितोत्तरक्षण**भाविकार्यं प्रति कारक करणक्रिया, **सैव** भूतिरेव, **चः** समुच्चये, क्रियान्तराणामपि प्रथमक्षणभाविना भवनक्रियारूपतां

एते चात्मादिनास्तित्वप्रतिपत्तिलक्षणाऽमुनोपायेन चतुरशीतिर्द्रष्टव्याः, तथाहि—एतेषां पुण्या-ऽपुण्यविवर्जितपदार्थसप्तकं न्यसनीयम्, पुण्या-ऽपुण्यनिरासस्य नास्तिकनाम्नैव सुप्रसिद्धत्वेन पुनरविवक्षितत्वात्, तत्र च जीवस्याधः स्व-परविकल्पभेदद्वयोपन्यासः, असत्त्वादात्मनो नित्या-ऽनित्यभेदौ नाङ्गीक्रियेते, नित्या ऽनित्ये ह्युपरञ्जकत्वेन तदुपन्यासविशेषणे, ते चोपरञ्जनीयाभावात् कमुपरञ्जयेताम्, निषेध-प्रतियोगिता समानाधिकरण-व्यधिकरणधर्मविधयाऽवच्छेदकत्वेन तदुपन्यासश्च स्वतस्त्व-परतस्त्वभेदद्वयं नातिक्रामतीति पृथक् तदुपन्यासो निर्बीज इति युक्तमीक्षामहे । कालादीनां च पञ्चानां षष्ठी यदृच्छोपन्यसनीया, यदृच्छा नामाऽकस्माद्भावः, तथा च आकस्मिकोत्पादेनापि सम्भाव्यमानस्य जीवादेः

समुच्चिनोति, उच्यते क्षणिकवादिभि. कथ्यते । एते च अक्रियावादिनोऽनन्तरमभिहितस्वरूपाः पुनः । "लक्षणाऽमुनो" इत्यस्य स्थाने "लक्षणा अमुनो" इति पाठो युक्तः । अमुनोपायेन तथाहीत्यादिनाऽनन्तरमेव वक्ष्यमाणोपायेन । एतेषाम् अक्रियावादिनाम् । पुण्या-ऽपुण्यविवर्जितेति जीवा-ऽजीवा-ऽऽश्रव-बन्ध-संवर-निर्जरा-पुण्याऽपुण्य मोक्षेषु नवसु पदार्थेषु पुण्याऽपुण्ये विहाय जीवाऽजीवादिपदार्थसप्तक न्यसनीयं—स्थापनीयम् । स्थापनायां पुण्याऽपुण्यविवर्जन कथमित्यपेक्षायामाह—पुण्या-ऽपुण्यनिरासस्येति—जीवाऽजीवादिपदार्थाना नास्तित्वप्रतिपत्त्यर्थमेव न्यासः क्रियते, अक्रियावादिनां यन्नास्तिक इति नाम तेनैव पुण्याऽपुण्यनिरासस्य पुण्याऽपुण्यापाकरणस्य सुप्रसिद्धत्वेनेति—नास्तिकास्त एवोच्यन्ते ये पुण्यापुण्ये न स्वीकुर्वन्तीत्येवं लोके सुप्रतीतत्वेनेत्यर्थः । अविवक्षितत्वादिति—यो हि परस्याज्ञातः, सन्दिग्धो विपर्ययविषयो वा भवति तदवबोधनायैव वक्तुर्विवक्षा भवति, यश्च निश्चितस्तत्राज्ञान-संशय-विपर्ययनिराकरणलक्षणप्रयोजनाभावाद् विवक्षा न भवत्येवमविवक्षितत्वादिति पुण्याऽपुण्ययोर्न न्यसनमित्यर्थः । तत्र च जीवाऽजीवादिसप्तपदार्थन्यासे च । जीवस्य जीवपदार्थन्यासस्य । अध. अधस्तात् । स्वपरविकल्पभेदद्वयोपन्यास इति—स चेत्थं निभालनीयः—जीवः स्वतः परतश्च कालत ईश्वरत आत्मतो नियतितः स्वभावतो यदृच्छातश्च, एवमजीवादिपदार्थन्यासस्याधस्तादपि न्यासो बोध्यः, सर्वत्र नास्तीति न्यासो निषेधप्रतिपादक. कर्तव्य., कालादीना चेत्याद्यग्रिमग्रन्थ प्रतिसन्धाय मूलानुपदर्शितोऽत्र स्व-परयोरधस्तात् कालादिन्यास उल्लिखितः । तत्र नित्योऽनित्यश्चेत्येवं न्यासः कथं नेत्याकाङ्क्षानिवृत्तये त्वाह—असत्त्वादात्मन इति—अक्रियावादिना मते आत्मनोऽसत्त्वादभावादित्यर्थः । आत्मनोऽभावेऽपि यथा कालादीनां न्यासस्तथा कथ न तयोर्न्यास इत्यपेक्षायामाह—नित्याऽनित्ये इति । तदुपन्यासेति—जीवोपन्यासेत्यर्थः । ते च नित्याऽनित्ये पुनः । उपरञ्जनीयाभावात्—उपरञ्जनीयस्यात्मनोऽभावात् । कमिति—काक्वा न कमपीत्यर्थः । ननु नित्यत्वेनात्मा नास्ति, अनित्यत्वेनास्तीत्येवमात्मनिष्ठप्रतियोगिताया निषेधनिरूपितायामवच्छेदकविधया नित्यत्वाऽनित्यत्वयोरन्वयसम्भवात् तत्प्रयोजनक एव तयोरुपन्यासोऽस्त्वित्यत आह—निषेधेति—यथा घटत्वेन घटो नास्तीत्यत्र निषेधस्य घटात्यन्ताभावस्य प्रतियोगिता घटे वर्तते घटत्वमपि तत्र वर्तत इति भवति, समानाधिकरणो धर्मो घटत्वमिति समानाधिकरणधर्मविधया घटत्वस्य घटनिष्ठप्रतियोगिताया अवच्छेदकत्वम्, पटत्वेन घटो नास्तीत्यत्र निषेधस्य घटात्यन्ताभावस्य प्रतियोगिता घटे वर्तते न च तत्र पटत्वं वर्तत इति भवति पटत्व व्यधिकरणधर्म इति व्यधिकरणधर्मविधया पटत्वस्य घटनिष्ठप्रतियोगिताया अवच्छेदकत्वं तथा प्रकृते आत्मनोऽसत्त्वान्निषेध्ये तस्मिन् नित्यत्वाऽनित्यत्वयोरभावान्न तयो. समानाधिकरणधर्मत्वमिति यद्यपि समानाधिकरणधर्मविधया न तयोर्निषेधप्रतियोगिताया अवच्छेदकत्वं तथापि व्यधिकरणधर्मविधयाऽवच्छेदकत्वं सम्भवतीति तेन नित्यत्वाऽनित्यत्वोपन्यासश्च स्वतस्त्व-परतस्त्वान्यतरस्मिन्नेव तयोरन्तर्भावात् स्वतस्त्व-परतस्त्वोपन्यासान्तर्गत एव तयोरुपन्यास इति पृथक्तया तयोरुपन्यासो निर्बीज इत्येतस्मात् कारणान्न तयोरुपन्यास इति युक्त पश्याम इत्यर्थः । "निषेधप्रतियोगिता" इत्यस्य स्थाने "निषेधप्रतियोगितायाः" इति पाठो युक्त., तस्य चावच्छेदकत्वेनेत्यनेनान्वयः । कालादयः पञ्च यदृच्छा च स्वतः परतश्चेत्यस्याधस्तादुपन्यसनीया इत्याह—कालादीनां चेति—षष्ठ्या यदृच्छाया अधिकाया उपन्यसनीयत्वप्राप्तौ कालादीना पञ्चानामुपन्यसनीयत्वं प्राप्तमेवेति यदृच्छा किंस्वरूपेत्यपेक्षायामाह—यदृच्छेति । नामेति कोमलामन्त्रणे । तथा च अकस्माद्भावलक्षणाया यदृच्छाया उपन्यासे च ।

पदार्थस्य निरासान्नास्तिकवादसासाज्यम्, [ पश्चात् ]विकल्पाभिलापः— नास्ति जीवः स्वतः कालत इत्येको विकल्पः, एवम्— ईश्वरादिभिरपि यदृच्छावसानैः सर्वे षड्विकल्पाः ६, तथा नास्ति जीवः परतः कालत इति षडेव ६ विकल्पा एकत्र द्वादश, एवमजीवादिष्वपि षट्सु प्रतिपदं द्वादश विकल्पा इति सप्त द्वादशगुणाश्चतुरशीतिः ८४ विकल्पानामिति । ननु निषेधे कालादीनामनियामकत्वात् कथं तद्गर्भभेदादभिलापसम्भवः, नहि कालेश्वरादितः शशशृङ्गं नास्तीति नियन्तुं शक्यम्, यदि च कालादिना स्वतो जीवाद्यस्तित्वं परसमयविकल्पसिद्धमनूद्य तन्निषेधादुपदर्शितभेदसङ्ख्योपपाद्यते तदा नित्या-ऽनित्य-पदत्यागेऽपि किं बीजमित्यन्वेषणीयम्, नित्यत्वा( द्य )न्यतरोपरागेणापि विकल्पसिद्धस्यात्मादिपदार्थस्य निषेद्धुं सुशक्यत्वात्, क्षणिकविज्ञानाभिन्नरूपात्मादिपदार्थाभ्युपगन्तुरक्रियावादिनः सदृशक्षणपरम्परा-

---

आकस्मिकोत्पादेनापीति— अकस्मादेव जीवादयः पदार्था उत्पद्यन्त इत्येवं सम्भावनागोचरीकृतस्यापि जीवादेः पदार्थस्य नास्तित्वव्यवस्थितया कथमपि जीवादिपदार्थस्यास्तित्वं न सम्भवतीत्येवंस्वरूपस्य नास्तिकवादस्य साम्राज्यं भवतीत्येतदर्थं यदृच्छोपन्यासो युक्त इत्यर्थः । अक्रियावादिना चतुरशीतिर्भेदा इति यत् प्रविज्ञातं तदेव विकल्पाभिलापाना-मुपदर्शने निष्टङ्कयति— विकल्पाभिलाप इति । स्वत इत्यस्यापरित्यागेन षड् विकल्पा उपदर्श्यन्ते— नास्ति जीवः स्वतः कालत इत्येको विकल्प इति— कालनियम्यस्वासाधारणधर्मावच्छिन्नजीवनिष्ठप्रतियोगिताकोऽत्यन्ताभाव इति, कालनियम्यात्यन्ताभावनिरूपितस्वासाधारणधर्मावच्छिन्नप्रतियोगितावान् जीव इति वाऽर्थः, एवमग्रेऽपि । एवमिति— नास्ति जीवः स्वत ईश्वरत इति द्वितीयो विकल्पः, नास्ति जीवः स्वत आत्मत इति तृतीयो विकल्पः, नास्ति जीवः स्वतो नियतित इति तुरीयो विकल्पः, नास्ति जीवः स्वत· स्वभावत इति पञ्चमो विकल्पः, नास्ति जीवः स्वतो यदृच्छात इति षष्ठो विकल्प इत्येवं स्वत इत्यस्यापरित्यागेन षड् विकल्पाः । स्वत इत्यस्य परित्यागेन तत्स्थाने परत इत्यस्य न्यसनेन षड् विकल्पा इत्थमेवाभिलपनीया इत्याह— तथेति । स्वत इत्यस्यापरित्यागेन षण्णां विकल्पानां परत इत्यस्या-परित्यागेन षण्णां विकल्पानां च मेलनेन द्वादश विकल्पा जीवे निष्पद्यन्त इत्याह— एकत्र द्वादशेति— एकस्मिन् जीवे द्वादश विकल्पाः सम्भवन्तीत्यर्थः । प्रत्येकमुक्तप्रकारेणाजीवादिष्वपि षट्सु द्वादश विकल्पा भवन्तीत्यतिदिशति— एवमिति । द्वादश विकल्पा· सप्तगुणिता विकल्पानां चतुरशीतिर्निष्पद्यत इत्याह— सप्तेति । उक्तदिशाऽक्रियावादिनां चतुरशीतिसंख्यकान् विकल्पानसहमानः परः शङ्कते— नन्विति । निषेधे स्वतः परतो वा जीवस्य निषेधे । कालादीनामित्यत्रादिपदा-दीश्वरादीना पञ्चानामुपग्रहः । अनियामकत्वात् नियामकत्वासम्भवात् । तद्गर्भभेदात् कालेश्वरादीनां विकल्पाभिला-पान्तःप्रवेशभेदात् । कथं निषेधे कालादीनामनियामकत्वमित्यपेक्षायामाह— नहीति— अस्य शक्यमित्यनेनान्वयः, शशशृङ्गं यथाऽसत् तथाऽक्रियावादिना मते आत्माऽप्यसन्निति शशशृङ्गाभावस्येवात्मनोऽप्यभावस्य कालेश्वरादिनियम्यत्वं न सम्भवतीति भावः । ननु शशशृङ्गादिकं केनापि सत्त्वेन नाभ्युपगतमतस्तस्य निषेधः कालादिनियम्यो मा भूत्, आत्माद्यस्तित्वं पराभ्यु-पगतमिति परसमयसिद्ध तदनूद्य कालादिना निषेधो भविष्यत्यत उपदर्शितसङ्ख्योपपन्नेत्यत आह— यदि चेति । परसमय-विकल्पसिद्धं परकीयागमप्रभवविकल्पात्मकज्ञानसिद्धम् । यदि विकल्पसिद्धस्य कालादिना निषेधो भवदुपगमार्हस्तदा आत्मा-देरपि परागमप्रभवविकल्पसिद्धस्य नित्यत्वोपराग. सम्भवत्येवेति नित्यत्वाऽनित्यत्वोपरागेण तन्निषेधस्य सम्भवेन नित्या-नित्यपदप्रवेशोऽपि पूर्वोक्तन्यासे सम्भवतीति तत्परित्यागस्य निर्बीजत्व स्यादित्याह— तदा नित्याऽनित्यपदत्यागेऽपीति । अजीवादि बाह्यं तु स्वयमभ्युपगच्छत्येव क्षणिकविज्ञानाभिन्नात्मरूपाभ्युपगन्ताऽक्रियावादीत्यतस्तस्य मते बाह्यधर्मत्वाद् बाह्यं नित्यत्वमनित्यत्व च पारिभाषिक समस्तीति तदुपरागेण बाह्यजीवादिपदार्थनिषेधोऽपि सम्भवत्येवेत्याह— क्षणिकविज्ञाना-भिन्नेति । यदि नित्यत्वमनित्यत्वं च स्वाभ्युपगमादेवाक्रियावादिनः समस्ति तदा तदुपरागेण बाह्यनिषेधो न तन्मते घटेतेत्यत आह— तस्योत्कटत्वेनेति— नित्यत्वस्य यदुत्कटत्वमप्रच्युतानुत्पन्नस्थिरैकस्वभावत्वलक्षणम्, अनित्यत्वस्य यदुत्कटत्वं स्वप्रागभावध्वंसानधिकरणयावत्कालस्थायित्वम्, तद्रूपेण बाह्य नित्यत्वमनित्यत्व निषेद्धुं शक्यमित्यर्थः । परमेवं यथाश्रुतपाठानुसारिव्याख्यानं सन्दर्भविरुद्धत्वान्न सङ्गतम्, सन्दर्भविरोधश्च सन्दर्भमध्यपाति "चेत् ? तर्हि" इति प्रश्नप्रतिविधानावबोधकपदद्वयघटितत्वेनैतत्सन्दर्भस्य प्रश्न-प्रतिविधानरूपता प्रतीयते, तत्सङ्गमनाऽसम्भव एव, तत एवं

पतितत्वेन नित्यत्वं क्षणिकत्वेनानित्यत्वं च स्वाभ्युपगमादेव बाह्यं तस्योत्कटत्वेन निषेद्धुं न शक्यमिति चेत् ? तर्हि यादृशं परमतसिद्धं नित्यत्वमनित्यत्वं च तादृशमेव निषिध्यताम्, अन्यथा धर्मिणो निषेधेऽपि व्याघातापरिहारात्, अथात्मत्वं शरीरातिरिक्तावृत्तीत्यादिरेव निषेधार्थः बाध-सिद्धिसाधनादिभयानुपनिपातादिति चेत् ? तर्हि आत्मत्वं न नित्यात्मसमानाधिकरणम्, आत्मपदवाच्यं न नित्यपदवाच्यमित्यादिरीत्या नित्यानित्यभेदवादे प्रक्षेपेणापि कथं नाक्रियावादोक्तिः इति चेत् ? अत्रेदमाभाति– विकल्पसिद्धस्य निषेध्यत्वेऽपि स्वतः कालतः इत्यादिपदार्थस्य निषेधप्रतियोगिविशेषणविधयाऽन्वयसाकाङ्क्षत्वेन तदुपादानं, नित्यानित्यपदे तूद्देश्यधर्मिण्येव स्वार्थान्वयसाकाङ्क्षे इति तत्परित्यागः इति प्राचीनप्रणयानुरोधेन स्थितस्य गतिचिन्तनं चैतदिति नाधिकविकल्पकल्लोललोलं चेतो विधेयम् । अज्ञानिकानां सप्तषष्टिर्भेदाः, तत्र कुत्सितं ज्ञानमज्ञानं तदेषामस्तीत्यज्ञानिकाः, नन्वेवं लाघवात् प्रक्रमस्य बहुव्रीहिणा

व्याख्यानमत्रादरणीयम्– ननु नित्यत्वमनित्यत्वं चाभ्युपगच्छत्येवाक्रियावादी, यतः क्षणिकविज्ञानाभिन्नरूपात्मादिपदार्थस्तेनाभ्युपगतः, तत्र सदृशक्षणपरम्परापतितत्वलक्षणं नित्यत्वं क्षणिकत्वस्वरूपमनित्यत्व च स्वीकृतम्, ततः कथं नित्यत्वाऽनित्यत्वोपरागेणाऽऽत्मनो निषेधस्तन्मते ? इति नित्याऽनित्यपदत्यागेऽस्त्येव बीजमिति पराकूतमुपदर्श्य दूषयति– **क्षणिकविज्ञानाभिन्नेति** । "**बाह्यं तस्योत्कटत्वेन**" इत्यस्य स्थाने "सिद्धं तत्रोत्कटत्वेन" इति पाठो युक्तः, **तत्** स्वमतप्रसिद्ध नित्यत्वमनित्यत्व च, **उत्कटत्वेन** स्वसमये सुदृढानरूढत्वेन । **निषेद्धुं न शक्यमिति चेत् ?**, एवं यद्युपेयते, **तर्हि** तदा, **यादृशं** यादृग्भूतमप्रच्युतानुत्पन्नस्थिरैकस्वभावादिलक्षणं, **नित्यत्वं** प्रागभावप्रतियोगित्वे सति ध्वंसप्रतियोगित्वलक्षणं स्वप्रागभावध्वंसानधिकरणयावत्कालस्थायित्वलक्षण, **वाऽनित्यत्वं च परमतसिद्धं** नैयायिकादिमतसिद्धम्, **तादृशमेव** तादृग्स्वरूपमेव नित्यत्वं निषिध्यतामित्यर्थः, तथा च परमतसिद्धनित्यत्वाऽनित्यत्वोपरागेणात्मनो निषेधसम्भवादुक्तन्यासे नित्याऽनित्यपदप्रवेश एव युक्त इति नित्यानित्यपदपरित्यागे किं बीजमित्याशङ्का तदवस्थैवेत्याशयः । **अन्यथा** परमतसिद्धत्वस्यानादरे । **धर्मिणो निषेधेऽपि** आत्मनो निषेधेऽपि । **व्याघातापरिहारात्** यथाऽसतः शशशृङ्गादेर्निषेधो न कालेश्वरादितो नियन्तु शक्यस्तथाऽऽत्मनो निषेधोऽपीत्येवं व्याघातस्य परिहर्तुमशक्यत्वात् । शङ्कते– **अथेति** । उक्तनिषेधार्थाश्रयणे बाध-सिद्धिसाधनादिदोषोऽपि नास्तीत्याह– **बाधेति**– आत्मा शरीरातिरिक्तो न भवतीत्येव निषेधार्थाभ्युपगमे परमतसिद्धस्यात्मनो धर्मित्वे तत्र शरीरातिरिक्तत्वमेवेति बाध, शरीरमेवात्मेति मतसिद्धशरीररूपात्मनो धर्मित्वे शरीरे शरीरातिरिक्तत्व नास्तीति सर्वैरभ्युपेयत एवेति सिद्धसाधनं स्यादेवेति । समाधत्ते– **तर्हीति** । "**नित्यानित्यभेदवादे**" इत्यस्य स्थाने "नित्यानित्यपद" इति पाठो युक्तः, अर्थस्तु व्यक्त एव । 'ननु निषेधे' इत्यादिप्रश्ने ग्रन्थकृत् स्वमनीषोद्भासित प्रतिविधानमुपदर्शयति– **अत्रेति**– अनन्तरोपवर्णितप्रश्ने इत्यर्थः । इदं विकल्पसिद्धस्येत्यादिना वक्ष्यमाण प्रतिविधानम् । **आभाति** मम भासते । **विकल्पसिद्धस्य** परसमयप्रभवविकल्पात्मकज्ञानसिद्धस्याऽऽत्मनः । **निषेध्यत्वेऽपि** निषेधप्रतियोगित्वेऽपि । **तदुपादानं** स्वतः कालत इत्यादिपदस्योपादानम् । **उद्देश्यधर्मिण्येव** उद्देश्यं यदात्मस्वरूप धर्मि तस्मिन्नेव । **स्वार्थान्वयसाकाङ्क्षे** स्वार्थस्य नित्यत्वादिधर्मस्यान्वये साकाङ्क्षे स्वार्थान्वयबोधजनके । **इति** एवं स्वरूपविशेषात् । **तत्परित्यागः** निरुक्तन्यासे नित्यानित्यपदत्याग. । ईदृशप्रतिविधानादरे हेतुमुपदर्शयति– **प्राचीनेति** प्राचीनाना सिद्धान्तैकपरिशीलनस्वभावाना सूरीणां यः **प्रणयः** तन्मतश्रद्धालक्षणस्तदनुरोधेन । **स्थितस्य** तदुक्तौ स्थितस्य विदुषः । **गतिचिन्तनं** तदुपपादनप्रकारविचारणम् । **एतत्** अनन्तरोपवर्णितं प्रतिविधानम् । **इति** एतस्मात् कारणात् । अस्मिन् विषये अधिकाश्चतुरशीतिविकल्पभिन्ना ये नित्यानित्यपदप्रवेशेन विकल्पास्तदात्मका ये कल्लोलास्तरङ्गास्तैर्लोलं चञ्चलमस्थिरविचारं चेतो न विधेयमित्यर्थः । अज्ञानिकभेदान् प्ररूपयति– **अज्ञानिकानामिति** । अज्ञानिकशब्दव्युत्पत्त्युपदर्शनेनाज्ञानिकस्वरूपमावेदयति– **तत्रेति**– अज्ञानिकाना सप्तषष्टिसंख्यकभेदेषु निरूपणीयेषु ननु न विद्यते सम्यग्ज्ञानस्वरूपं ज्ञानं येषां ते अज्ञाना इति बहुव्रीहिसमासाश्रयणादज्ञानशब्दादेवाज्ञानिकरूपार्थलाभसंभवान् तत्र लाघवतर्कसहकारस्यापि भावात् तद्धिताणिनिप्रत्ययमज्ञानशब्दादानीयोक्तव्युत्पत्तिकाज्ञानिकशब्दस्वरूपशब्दनिष्पादन न सम्भवति

भवितव्यम्, ततश्चाज्ञाना इति स्यात्, नैष दोषः– ज्ञानान्तरमेवाज्ञानं मिथ्यादर्शनसहचरितत्वात्, ततश्च जातिशब्दत्वादज्ञानिका इति प्रयोगस्यैव युक्तत्वात्, अभ्युपगमस्याणिनिप्रत्ययार्थत्वेनाज्ञानाभ्युपगन्तार इति बोधस्य तत एव सम्भवाद्, बहुव्रीहौ सम्बधिमात्रस्यैव बोधापत्तेः; यद्वाऽज्ञानेनाचरन्ति तत्प्रयोजना वा अज्ञानिकाः, असञ्चिन्त्य कृतबन्धवैफल्यादिप्रतिपत्तिलक्षणा अमुनोपायेन सप्तषष्टिर्ज्ञातव्याः, तथाहि– जीवादीन् नवपदार्थान् पूर्ववदवस्थाप्य पर्यान्ते चोत्पत्तिमुपन्यस्याधः सप्त सदादय उपन्यसनीयाः, सत्त्वम् १, असत्त्वम् २, सदसत्त्वम् ३, अवाच्यत्वम् ४, सदवाच्यत्वम् ५, असदवाच्यत्वम् ६, सदसदवाच्यत्वम् ७ चेति सदादयः, तथा चैकैकस्य जीवादेः सप्त सप्त विकल्पा इत्येते नव सप्तकास्त्रिषष्टिः ६३; उत्पत्तेस्तु चत्वार एवाद्या विकल्पाः, तद्यथा– सत्त्वम् १, असत्त्वम् २, सदसत्त्वम् ३, अवाच्यत्वम् ४ चेति, ते त्रिषष्टिमध्ये प्रक्षिप्ताः सप्तषष्टिः ६७ भवन्ति, को जानाति जीवः सन् किं वा तेन ज्ञातेन प्रयोजनमित्येको विकल्पः, एवमसदादयोऽपि वाच्याः, उत्पत्तिरपि किं सतोऽसतः सदसतोऽवाच्यस्य वेति को जानात्येतत् किं वा तज्ज्ञानप्रयोजनमित्यादिप्रयोगः; ननूत्पत्तेः सत्त्वा-ऽसत्त्वादयः सप्त भेदाः कुतो नोपन्यस्यन्ते, उत्पत्तेः सर्वाश्रयत्वात्; देशविषयान्त्यभङ्गत्रयस्य

---

बहुव्रीहीतरवाक्यात् तद्धितप्रत्ययो न भवति, तद्धितप्रत्ययमन्तरेणैतद्वाक्यबहुव्रीहिस्तदर्थप्रतीतिं यदि जनयतीत्यर्थतात्पर्यकस्य लाघवमूलकस्य 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर' इत्यनुशासनस्योक्तार्थोपोद्बलकस्य सद्भावादित्याशयेन शङ्कते– नन्वेवमिति । ततश्च लाघवाद् बहुव्रीहिसमासस्यात्र प्राप्तत्वाच्च । अज्ञानशब्दोऽत्र न वाक्यरूपः किन्तु ज्ञानत्वावान्तरजातिविशेषावच्छिन्नशक्तत्वाज्जातिशब्दः पदरूप एव, एकपदे च न कस्यापि समासस्य सम्भव इति बहुव्रीहेरप्राप्तौ तद्धितप्रत्ययान्ताज्ञानिकशब्दः साधुरेवेत्यज्ञानिका इति प्रयोगस्य युक्तत्वादिति समाधत्ते– नैष दोष इति– अनन्तरोपदर्शितदोषो नात्र सम्भवतीत्यर्थः । तत्र हेतुमाह– ज्ञानान्तरमेवाज्ञानमिति । ननु एकज्ञानभिन्न द्वितीयं ज्ञान यथा ज्ञानमित्येवोच्यते तथाऽभिमतज्ञानविशेषोऽपि ज्ञानशब्दव्यपदेश्य एव स्यान्नाज्ञानशब्दव्यपदेश्य इत्यत आह– मिथ्यादर्शनेति । तत्किं निरुक्तो ज्ञानसम्बन्धी य. कश्चित् स सर्वोऽप्यज्ञानिकशब्दव्यपदेश्यः ? नैवम्– अज्ञानाभ्युपगन्तार एवाज्ञानिका इत्येवं व्यपदिश्यन्ते, अतोऽपि नात्र बहुव्रीहिः, ततोऽज्ञानसम्बन्धिनोऽखिलस्यैव प्रतीत्यापत्तेः, किन्त्वभ्युपगमार्थकतद्धितप्रत्ययान्त एवाज्ञानिकशब्दस्तेनाज्ञानिका इत्यनेनाज्ञानाभ्युपगन्तार इति बोधस्यैवोदयादित्याह– अभ्युपगमस्येति । तत एव तद्धितान्ताज्ञानिकशब्दादेव । अज्ञानिकशब्दवाच्या अज्ञानकरणकाचरणशीला अज्ञानप्रयोजना वेत्यर्थान्तरावेदक पक्षान्तरमुपदर्शयति– यद्वेति । असञ्चिन्त्येति अज्ञात्वाऽविचार्य वा कृतस्य पुण्य-पापलक्षणकर्मबन्धस्य वैफल्यमेवेत्याद्यभ्युपगमस्वरूपा अज्ञानिकाः, अमुनोपायेन– तथाहीत्यादिना वक्ष्यमाणप्रकारेण, सप्तषष्टिसंख्यका ज्ञातव्या इत्यर्थः । सदादयः के ? इत्यपेक्षायामाह– सत्त्वमित्यादि । एवं च सप्तषष्टिसङ्ख्या सम्पद्यन्त इति दर्शयति– तथा चेति– इत्थमुपन्यासे चेत्यर्थः । त्रिषष्टिश्चोत्पत्तिसम्बन्धिप्रकारचतुःसङ्ख्या मिलिता सप्तषष्टिसङ्ख्या सम्पद्यत इत्याह– उत्पत्तेस्त्विति– उत्पत्तिसम्बन्धिनश्चतुरः प्रकारानेव भावयति– तद्यथेति– एते च सप्तषष्टिसङ्ख्यका अज्ञानिकविकल्पाः सच्छब्दघटितप्रयोगेण तदतिदिष्टप्रयोगेण च भाव्यन्ते । को जानातीत्यादिना । तेन जीवसत्त्वेन । उत्पत्तेश्चत्वार एव विकल्पा इत्यसहमानः शङ्कते– नन्वित्यादिना । सप्तभेदोपन्यासे हेतुमाह– उत्पत्तेः सर्वाश्रयत्वादिति । अत्रोत्तरमाशङ्कते– देशेति– उत्पत्त्यात्मकवस्तुन एकस्मिन् देशे सत्त्वं विवक्षितमन्यस्मिंश्च देशेऽवाच्यत्वं विवक्षितमिति सदवाच्यत्वभङ्गो देशविषयः, वस्तुन एको देशोऽसत्तया विवक्षितोऽन्यश्चावक्तव्यतयेत्येवमसदवाच्यत्वभङ्गो देशविषयः, वस्तुन एको देशः सत्तया विवक्षितश्चैको देशोऽसत्तया विवक्षितः, ताभ्यामन्यश्च देशोऽवक्तव्यतया विवक्षित इत्येवं सदसदवाच्यत्वभङ्गो देशविषय इति भावनयाऽन्त्यभङ्गत्रयस्य देशविषयत्वेन सम्पूर्णोत्पत्तिस्वरूपाविषयत्वेन च त्यागार्हत्वादित्यर्थ । एवमाशङ्कितमुत्तरं दूषयति– तर्हीति– एकस्मिन् देशे सत्त्वं विवक्षितमपरस्मिंश्च देशेऽसत्त्वं विवक्षितमिति कृत्वा निष्पन्नस्वरूपस्तृतीयः सदसत्त्वभङ्गोऽपि देशविषयत्वात् त्याज्यः स्यादित्यर्थः । तृतीय-

त्यागार्हत्वादिति चेत् ? तर्हि देशविषयः सत्त्वासत्त्वभङ्गोऽपि त्याज्यः स्यात्; अवच्छेदकभेदेन सर्वाश्रय एवायमिति चेत् ? अन्त्यभङ्गत्रयेणापि किमपराद्धं यत् तस्यावच्छेदकभेदेन सर्वाश्रयत्वं न स्यादिति किं बहुना, यथा पदार्थानां ज्ञानं पर्यनुयोजनं तथा तदुत्पत्तिज्ञानं किमिति न पर्यनुयुज्यत इति ? सत्यम्— साङ्ख्यानां मते सतः उत्पत्तिः, शाक्यानां नैयायिकानां चासतः, जैनानां सदसतो, वेदान्तिनां चानिर्वाच्यस्येति दर्शनभेदेन चतुर्विधायाः प्रसिद्धत्वात्, भेदचतुष्टयोपन्यासे भेदान्तरस्यापि जिज्ञासितत्वेनानतिप्रयोजनत्वात्, येन रूपेण यज्ज्ञानमवश्यमिष्टसाधनत्वेनान्यैरभिमतं तेन रूपेण तज्ज्ञानवैकल्यस्यैवाज्ञानवादिनापादनीयत्वादिति दिक् । विनयेन चरन्ति विनयो वा प्रयोजनमेषां ते वैनयिकाः, तेषां द्वात्रिंशद्भेदाः, एते चानवधृतलिङ्गाचारशास्त्रा विनयप्रतिपत्तिलक्षणा अमुनोपायेन द्वात्रिंशदवगन्तव्याः, तथाहि— सुर-नृपति-यति-ज्ञाति-स्थविरा-ऽधम-मातृ-पितॄणां प्रत्येकं कायेन वाचा मनसा दानेन च

विकल्पस्य देशविषयत्वमसहमानः शङ्कते— **अवच्छेदकभेदेनेति**— सम्पूर्णस्वरूपाया एवोत्पत्तेः किञ्चिदवच्छेदेन सत्त्वं कश्चिदवच्छेदेन चासत्त्वं विवक्षयित्वा तृतीयभङ्गः प्रवर्तत इत्यस्य देशविषयत्वाभावान्न त्यागार्हत्वमित्यर्थः । उक्तदिशाऽवच्छेदकभेदेन संपूर्णे वस्तवपि सदवक्तव्यत्वा-ऽसदवक्तव्यत्व सदसदवक्तव्यत्वैतत्रितयालिङ्गितं विवक्षितं भवतीत्यन्त्यभङ्गत्रयस्यापि सर्वाश्रयत्वमेव न देशविषयत्वमिति न त्यागार्हत्वं भवेदित्यग्रेऽनानन्तरमाशङ्कितमुत्तरं कवलयति— **अन्त्यभङ्गत्रयेणापीति** । किञ्च, पर्यनुयोगसप्तकवशादेव सप्त भङ्गाः प्रवर्तन्ते, पर्यनुयोगसप्तक चोत्पत्तावप्यविशिष्टमिति सप्त विकल्पा अत्रापि किं न भवेयुरित्याह— **किं बहुनेति** । **पर्यनुयोज्यं** पर्यनुयोगस्य प्रश्नस्य विषयः । **तदुत्पत्तिज्ञानं** पदार्थोत्पत्तिज्ञानं **किमिति न पर्यनुयुज्यते** केन हेतुना पर्यनुयोगविषयो न भवेत्, अपि तु पर्यनुयोगविषयः स्यादेव । ननूत्पत्तेरित्याद्याशङ्कायाः प्रतिविधानमाह— **सत्यमिति**— यद्भवानाशङ्कते तत् सत्यमित्यर्थः । एवं सति पर्यवसितं विवादेन, तथा चाज्ञानिकानां सप्तषष्टिरिति सङ्ख्यानियमनमसङ्गतं स्यादित्यत आह— **साङ्ख्यानामिति**— " असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात् ॥ शक्तस्य शक्यकरणात् कारणभावाच्च सत् कार्यम् ॥ १ ॥ " इतीश्वरकृष्णकारिकया तन्मते सत्कार्यस्य व्यवस्थितेः । **शाक्यानां** बौद्धानाम्, मते इत्यनुवर्तते, एवमग्रेऽपि, बौद्धानां मते सर्वस्य क्षणिकत्वेनोत्पत्तितः प्राक्काले न कथञ्चिदपि सत्त्वमित्यसत एवोत्पत्तिः । **नैयायिकानामिति** वैशेषिकाणामप्युपलक्षणम्, तेषां मते अभूत्वा भवनलक्षणाया उत्पत्तेः प्राक्काले नास्त्येव कार्यस्य सत्त्वमिति, असत उत्पत्तिः, उत्पत्तिरिति च सर्वत्रानुवर्तते । **जैनानां** स्याद्वादिनाम्, तन्मते सर्वथा सति सर्वथाऽसति च कारकाणां व्यापारवैयर्थ्याद् द्रव्यरूपेण सतः पर्यायात्मना चासत इत्येव सदसत उत्पत्तिः । **वेदान्तिनां** ब्रह्माद्वैतवादिनां मते ब्रह्मातिरिक्तस्याशेषस्याविद्यकस्य न पारमार्थिकसत्त्वं ब्रह्मज्ञानेनाविद्यया सहितस्य कार्यमात्रस्य निवृत्तिलक्षणबाधविषयत्वात्, नापि तस्य क्वचिदप्यप्रतीयमानत्वलक्षणमसत्त्वं प्रतीयमानत्वादित्येवं सत्त्वाऽसत्त्वाभ्यां निर्वक्तुमशक्यत्वादनिर्वाच्यस्य कार्यस्योत्पत्तिरित्येव **दर्शनभेदेन** मतभेदेन, **चतुर्विधायाः** चतुःप्रकारायाः, उत्पत्तेः प्रसिद्धत्वाद्, **भेदचतुष्टयोपन्यासे** उत्पत्तेर्विकल्पचतुष्टयोपन्यासे व्यवस्थिते सति, **भेदान्तरस्यापि** निरुक्तभेदचतुष्टयभिन्नविकल्पस्यापि, **जिज्ञासितत्वेन** जिज्ञासितत्वमात्रेण, **अनतिप्रयोजनत्वात्** विशिष्टप्रयोजनाभावादित्यर्थः । **येनेति**— येन रूपेण सत्त्वादिना, **यज्ज्ञानम्** उत्पत्तिज्ञानम्, इष्टसाधनत्वेनाभिमतफलजनकत्वेन, **अन्यैः** साङ्ख्य-शाक्य-नैयायिक-जैन-वेदान्तिभिः, **अभिमतम्** उररीकृतम्, **तेन रूपेण** सत्त्वादिना " **तज्ज्ञानवैकल्य** " इत्यस्य स्थाने " तज्ज्ञानवैफल्य " इति पाठो युक्तः, अर्थस्तु व्यक्त एव । वैनयिकानां स्वरूपं तद्भेदांश्च निरूपयति— **विनयेनेति तेषां** वैनयिकानाम् । **एते च** वैनयिकाश्च । **अनवधृतेति**— अनवधृतानि लिङ्गाचारशास्त्राणि यैस्तेऽनवधृतलिङ्गाचारशास्त्राः, इदमेव लिङ्गमस्माकमयमेवाचारोऽस्माकमिदमेव शास्त्रं सिद्धान्तोऽस्माकमित्येवमवधृतलिङ्गाचारशास्त्रा ये न भवन्ति ते इति यावत् । किंस्वरूपास्ते ? इत्यपेक्षायामाह— **विनयप्रतिपत्तिलक्षणा** इति— गुर्वादीनां विनय एवास्माभिरनुष्ठेय इत्येव या विनयप्रतिपत्तिर्विनयस्वीकारस्तल्लक्षणा इत्यर्थः । **अमुनोपायेन** तथाहीत्यादिना अनन्तरवक्ष्यमाणेन प्रकारेण, **द्वात्रिंशद्** द्वात्रिंशत्सङ्ख्यकाः । **अवगन्तव्याः** ज्ञेयाः । वैनयिकानां द्वात्रिंशद्भेदावगमोपायमेव भावयति— **तथाहीति** । **इति** एवम् । **चत्वारः** चतुः

देश-कालोपपन्नेन विनयः कार्य इति चत्वारो भेदाः, अष्टसु स्थानेषु प्रत्येकं मिलिता द्वात्रिंशदिति; सर्वसङ्ख्यया पुनरेतेषां पाखण्डिनां त्रीणि शतानि त्रिषष्ट्यधिकानि सिद्धानि, अन्यत्राप्युक्तम्—

" आस्तिकमत आत्माद्या नित्याऽनित्यात्मका नव हि सन्ति।
काल-नियत-स्वभावेश्वरा-ऽऽत्मकृतितः स्व-परसंस्थाः ॥ १ ॥
काल-यदृच्छा-नियति-स्वभावेश्वरा-ऽऽत्मतश्चतुरशीतिः।
नास्तिकवादिगणमते न सन्ति भावाः स्व-परसंस्थाः ॥ २ ॥
अज्ञानिकवादिमतं नव जीवादीन् सदादिसप्तविधान्।
भावोत्पत्तिः सदसद्द्वैतावाच्याञ्च को वेत्ति ॥ ३ ॥
वैनयिकमतं विनयश्चेतोवाक्कायदानतः कार्यः।
सुर-नृपति-यति-ज्ञाति-स्थविरा-ऽधम-मातृ-पितृषु सदा ॥ ४ ॥ " [ ]

नन्वेवमास्तिकगणस्यापि पाखण्डपक्षनिक्षेपे स्वरूपेणात्माऽस्त्येवेत्यादिनयवादिनो जैना अपि पाखण्डिनः स्युः तद्वादस्य क्रियावादभेदस्वरूपत्वादिति चेद् ? एकान्ते न तथाश्रद्धा, अत एवैकान्तेन षट्कायादिश्रद्धानेऽपि तत्त्वतः सम्यक्त्वाभावः सम्मतौ प्रतिपादितः, तथाहि—

" णियमेण सद्दहन्तो छक्काए भावओ ण सद्दहइ। हंदी अपज्जवेसु वि सद्दहणा होइ अविभत्ता ॥ "

[ स० तृ० गा० २८ ]

सङ्ख्यका। भेदा. विकल्पाः, कायिकविनयः, वाचिकविनयः, मानसिकविनयः, दानविनयश्चेति चत्वारो भेदा इति यावत्, ते चत्वारो भेदाः **प्रत्येकमष्टसु स्थानेषु** सुरे कायिकविनयादयश्चत्वारः, नृपतौ निरुक्तचत्वारः, यतिषु ते चत्वारः, ज्ञातिषु ते चत्वारः, स्थविरेषु ते चत्वारः, अधमेषु ते चत्वारः, मातरि ते चत्वारः, पितरि ते चत्वार इत्येव प्रत्येकमष्टसु स्थानेषु चत्वारो मिलिताः सन्तो द्वात्रिंशद्भेदा भवन्तीत्यर्थः। **सर्वसङ्ख्येति**–क्रियावादिनामशीत्युत्तरं शतम्, अक्रियावादिनां चतुरशीतिः, अज्ञानिकाना सप्तषष्टिः, वैनयिकाना द्वात्रिंशत्, ताश्च सर्वा मिलिताः सर्वसङ्ख्या तयेत्यर्थः। **एतेषां** क्रियावाद्यादीनाम्। निरुक्तक्रियावाद्यादिसङ्ख्याभेदे ग्रन्थान्तरसंवादमुपदर्शयति– **अन्यत्राप्युक्तमिति**। **आस्तिकमते** क्रियावादिमते, अन्यत् स्पष्टम्, प्रथमपद्ये क्रियावादिनामशीत्युत्तरशतभेदाः कण्ठतोऽनुक्ता अप्युपायोपदर्शनेन सूचिताः।

कालेत्यादिद्वितीयपद्येनाक्रियावादिनां चतुरशीतिभेदा भाविताः, **नास्तिकवादिगणमते** अक्रियावादिबौद्धादिमते। **अज्ञानिकवादिमतमित्यादि**तृतीयपद्येनाज्ञानिकाना सप्तषष्टिर्भेदाः कण्ठतोऽनुक्ता अप्युपायोपदर्शनेन सूचिताः। एवं **वैनयिकमतमित्यादि**– तुरीयपद्ये कण्ठतोऽनुक्ता अप्युपायदर्शनेन द्वात्रिंशद्भेदाः सूचिताः, चतुर्णामपि पद्यानामर्थः पूर्वग्रन्थतः स्पष्टीकृत इति न तेषा व्याख्या आदृता। शङ्कते– **नन्विति**। **एवं** क्रियावादिनः पाखण्डिमध्ये परिगणनं कृत्वा तत्सङ्ख्याभिधानप्रकारेण। **अस्त्येवेत्यादी**त्यत्रादिपदेन पररूपेणात्मा नास्त्येवेत्यादीनामुपग्रहः। **तद्वादस्य** जैनाभिमतस्याद्वादात्मवादस्य। उत्तरयति– **एकान्त** इति। **न तथाश्रद्धा** यथाऽनेकान्तवादे जैनाना श्रद्धा तेषामेकान्तवादे तथा श्रद्धा न। **अत एव** यत एवैकान्तवादे श्रद्धा न तत एव। एकान्तेन षट्कायश्रद्धाने सम्यक्त्वाभावावेदिकां सम्मतिगाथामुल्लिखति– **णियमेण** इति– नियमेन श्रद्दधान. षट् कायान् भावतो न श्रद्धत्ते। हन्दि अपर्यायेष्वपि श्रद्दधाना भवन्ति अविभक्ता।" इति संस्कृतम्। उक्तगाथाया अर्थमुपदर्शयति– **अस्या अर्थ** इति। **नियमेनेत्य**स्य विवरणम्– **अवधारणेनेति**। अवधारणं कीदृशमित्यपेक्षायामाह– **षडेवैते जीवाः कायाश्चेत्येवमिति**– षट्कायानित्यस्य षट् जीवान् षट् कायाश्चेत्यर्थः। कथं भावतः षट् कायान्न श्रद्धत्ते? इत्यपेक्षायां तत्र हेतुमुपदर्शयति– **जीवराश्यपेक्षयेति**। **तेषां** जीवानाम्, जीवत्वसामान्यापेक्षया जीवानामेकत्वेन षट्त्वैकान्तस्य तत्राभावादित्यर्थः। कायेष्वपि

अस्या अर्थः—नियमेन—अवधारणेन षडेवैते जीवाः कायाश्चेत्येवं श्रद्दधानः षट् कायान् भावतो न श्रद्धत्ते जीवराश्यपेक्षया तेषामेकत्वात् कायानामपि पुद्गलतयैकत्वात्, जीवपुद्गलानामपि परस्पर-विनिर्भागवृत्तीनामेकरूपस्याविनिगम्यत्वात्, हन्दीत्युपदर्शने, एवम् अपर्यायेष्वविवक्षितभेदपर्यायेषु, अविभक्तश्रद्धा एकरूपश्रद्धापि या सापि भावतो न श्रद्धा भवतीत्यर्थः, तथा चात्र षट्त्वा-षट्त्वादिना सप्तभङ्गीपथेनानेकान्तव्यापकत्वाभ्युपगम एव श्रेयानित्यर्थः, "भावत इत्युक्तिः भङ्ग्या षडेव जीव-काया इति श्रद्दधतोऽपि भगवतैवमुक्तमिति जिनवचनरुचिस्वभावत्वात् द्रव्यसम्यग्दृष्टित्वं न विहन्यते" इति टीकाकृतः, तेषामयमाशयः—एकान्तश्रद्धानमात्रं न मिथ्यात्वलक्षणम्, अनेकान्तानेकान्तश्रद्धाने अतिव्याप्तेः, किन्तु शासनबाह्यैकान्तश्रद्धानम्, तत्त्वं च वृद्धपरम्पराप्राप्तसूत्रा(ता)त्पर्यताविषयत्वम्, तेनाभिनिवेशा-ऽभिग्रहयोर्द्वयोरपि सङ्ग्रहः, न चेदृशं मिथ्यात्वमनेकान्तव्यापकत्वव्युत्पत्तिरहिता-

नैकान्तेन षट्त्वमेकत्वस्यापि भावादित्याह—कायानामपीति । न केवलं जीवाना जीवत्वेनैकत्वं कायानां पुद्गलत्वेनैकत्व-मित्येव किन्तु जीव-पुद्गलानामपि परस्परमपि निर्भागवृत्तित्वेनैकत्वमित्याह—जीव-पुद्गलानामपीति । "परस्पर" इत्यस्य स्थाने "परस्परम्" इति पाठः समुचितः । हन्दीत्युपदर्शने हन्दीतिशब्द उपदर्शनरूपार्थे वर्तते, तयेत्यु-पदर्शनम् । अपर्यायेष्वित्यस्य विवरणम्—अविवक्षितभेदपर्यायेष्विति—अपर्यायेष्वित्यस्य यथाश्रुत पर्यायरहितेष्वित्यर्थो न सम्भवति पर्यायरहितस्य द्रव्यस्याभावादत इत्थं व्याख्यानमिति बोध्यम् । अविभक्तश्रद्धापि भवतीत्यस्योपदर्शनबलात् पर्यवसितमर्थमाविष्करोति—अविभक्तश्रद्धेत्यादिना । अस्यास्तात्पर्यार्थमाह—तथा चेति—अवधारणेन श्रद्धाया भावतोऽ-श्रद्धात्वव्यवस्थितौ चेत्यर्थः । अत्र षट्कायाभ्युपगमे । षट्त्वाषट्त्वादिना सप्तभङ्गीपथेन स्यात् षट् जीवाः, स्यादषट् जीवाः, स्यात् षट् स्यादषट् च जीवा., स्यादवक्तव्या जीवा', स्यात् षट् स्यादवक्तव्याश्च जीवाः, स्याद-षट् स्यादवक्तव्याश्च जीवाः, स्यात् षट् स्यादषट् स्यादवक्तव्याश्च जीवा इत्येव सप्तभङ्गीमार्गेण । "भावत इत्युक्तिः भङ्ग्या" इत्यस्य स्थाने "भावत इत्युक्तिभङ्ग्या" इति पाठो युक्तः, प्रकृतसम्मतिगाथाया भावत इति योक्तिः—कथनं तद्भङ्ग्या—तदुक्तिशैल्या, अस्य 'न विहन्यते' इत्यनेनान्वयः । षडेव जीवकाया इति श्रद्दधतोऽपि एकान्तेन षडेव जीवाः षडेव काया इत्येवं श्रद्दधतोऽपि पुरुषस्य, भगवता ऐश्वर्यशालिना केवलज्ञानवता महावीरेण । एवमुक्तं षट् जीवनिकाया इत्येवमुक्त—कथितम् । इति इत्याकारिका या जिनवचने रुचिः—श्रद्धा तत्स्वभावत्वाद् द्रव्यसम्यग्दृष्टित्वं न विहन्यते, षडेव जीवनिकाया इत्येकान्तेन श्रद्धावानपि पुरुषो जिनवचनरुचिमत्त्वाद् द्रव्यसम्यग्दृष्टिर्भवत्येव, न तु स द्रव्यतो मिथ्यादृष्टिः । इति एवमुक्तगाथाव्याख्यानम् । टीकाकृतः सम्मतिटीकाकाराः कुर्वन्ति । तेषां सम्मतिटीका-काराणाम् । अयम् एकान्तश्रद्धानमात्रमित्यादिनाऽनन्तरमेव प्रकटीक्रियमाणः । आशयोऽभिप्राय. । अनेकान्तानेकान्त-श्रद्धाने स्याद्वादिमते प्रमेयत्वव्यापकमनेकान्तत्वम्, यत्रानेकान्तत्वं नास्ति न तत्र प्रमेयत्वम्, इत्यनेकान्तो यद्यनेकान्त एव न त्वेकान्त इत्येवमेकान्त एव स्यात् तदाऽनेकान्तत्वस्य प्रमेयत्वव्यापकस्याभावात् प्रमेयत्वमपि तस्य न स्यादतोऽ-नेकान्तः कथञ्चिदनेकान्तः कथञ्चिदेकान्त इत्येवमनेकान्तानेकान्तश्रद्धाने । अतिव्याप्तेः अनेकान्तानेकान्तमनेकान्तमेकान्त-मित्युभयस्वरूपमिति तच्छ्रद्धानमेकान्तश्रद्धानमपि भवति, तच्च सम्यग्दृष्टेरेवेत्यलक्ष्यम्, तत्र मिथ्यात्वलक्षणस्यैकान्त-श्रद्धानस्य तादात्म्येन भावादतिव्याप्तेः । तर्हि किं मिथ्यात्वलक्षणमिति पृच्छति—किन्त्विति । उत्तरयति—शासन-बाह्यैकान्तश्रद्धानमिति—मिथ्यात्वलक्षणमित्यनुकर्षेण सम्बध्येत, शासनबाह्यस्य—जैनराद्धान्तबहिर्भूतस्यैकान्तस्य श्रद्धानं मिथ्यात्वलक्षणमित्यर्थ· । तत्त्वं च सिद्धान्तबाह्यत्वम् । वृद्धेति—'सूत्रा(ता)त्पर्यता" इत्यस्य स्थाने "सूत्रतात्पर्य" इति पाठो युक्तः । वृद्धश्चात्र ज्ञानवृद्धो ग्राह्यो न तु वयोवृद्धः, स चाप्त एव भवतीति आप्तपरम्परया प्राप्तं यत् सूत्रस्य—जैनागमलक्षणसूत्रस्य तात्पर्यं तदविषयत्वं शासनबाह्यत्वमित्यर्थः । तेन निरुक्तस्वरूपशासनबाह्यत्वेन, अस्य 'सङ्ग्रहः' इत्यनेनान्वयः । तथा च षडेव जीवकाया इत्यस्यैकान्तस्य निरुक्तशासनबाह्यत्वाभावात् तच्छ्रद्धान न मिथ्यात्वमित्याह—

नामपि प्राञ्जलबुद्धिनामेकान्ततः षट्कायादिश्रद्धानवताम्, तान् प्रति वृद्धैस्तमेव सत्यमित्यादिरीत्यैव सूत्रतात्पर्यविशदीकरणात्, यद्वा सूत्र परम्परोभयप्रामाण्यानुपजीव्यैकान्तश्रद्धानमेव मिथ्यात्वम्, तच्च न तेषाम्, सम्यक्त्वं चानभिगृहीतकुदृष्टित्वरूपसङ्क्षेपकविलक्षणमेव, तच्चानेकान्तव्यापकत्वव्युत्पत्तिजनित-श्रद्धानरूपविस्ताररुचिस्वरूपसम्यक्त्वापेक्षयाऽप्राधान्येन द्रव्यतया व्यपदिश्यते, तेन द्रव्य-भावाभ्यां सम्यक्त्व-मिथ्यात्वयोर्द्वयोरपि तुल्यव्यापारे न तज्जन्यक्रियाद्वययौगपद्यापत्तिरिति, युक्तं चैतत्, इत्थमेव तेषां मार्गानुसारिगुणप्रशंसया परपाखण्डप्रशंसारूपसम्यक्त्वातिचारानापत्तेः, तत्र हि पर-पाखण्डानां सर्वज्ञप्रणीतपाखण्डत्वव्यतिरिक्तानामिति व्याख्यातमाचार्यैः, तथा च परपाखण्डतावच्छेदक-धर्मप्रकारेणैव प्रशंसाया अतिचारत्वमित्यागतम्, स च धर्मस्तत्तद्व्यक्तित्वम्, अनाचारलिङ्गवेषादिक-मेरकाचारादिमत्त्वेऽप्यभिनिविष्टत्वादिकं वा यथास्थानं ग्राह्यम्, अत एवैतेषां प्रशंसा न कार्या पुण्यभाज एते सुलब्धमेभिर्जन्मेत्यादिलक्षणेति शृङ्गग्राहिकादिनोदाहृतम् । स्व-परविभागोऽपि नापेक्ष्यैव, परकीय-

---

न चेति । ईदृशं निरुक्तशासनबाह्यैकान्तश्रद्धानलक्षणम् । **अनेकान्तव्यापकत्वव्युत्पत्तिरहितानामपि** अनेकान्तं वस्तुमात्रवृत्तीत्येवंस्वरूपा व्युत्पत्तिर्मतिरनेकान्तव्यापकव्युत्पत्तिः, तद्रहितानामपि- तद्विकलानामपि । **प्राञ्जलबुद्धीनां** सरल-बुद्धीनाम् । **एकान्ततः** नियमेन । **षट्कायादिश्रद्धानवतां** कायाः षट् जीवाः षडित्यादिश्रद्धावताम्, ईदृश मिथ्यात्वं नैवेत्यर्थः । ननु वृद्धपरम्पराप्राप्तसूत्रतात्पर्यं 'स्यात् षट्कायाः, स्यात् षट् जीवाः' इत्याद्यनेकान्ते एव, न तु 'नियमेन षट्कायाः' इत्येकान्ते इति निरुक्ततात्पर्याविषयत्वात् प्रकृतैकान्तस्यापि शासनबाह्यत्वमेवेति तद्विषयश्रद्धानं कथं न मिथ्यात्वमित्यत आह- **तान् प्रती**ति- निरुक्तप्राञ्जलान् प्रतीत्यर्थः । "**तमेव**" इत्यस्य स्थाने "तदेव" इति पाठो युक्तः, यद्वा "**सत्यम्**" इत्यस्य स्थाने "सच्चं" इति पाठः, "तमेव सच्चं निस्संकं ज जिणेहिं पन्नत्तं" [ ] इत्यादिरीत्येत्यर्थः । प्रकारान्तरेण मिथ्यात्वं निरुच्य तदभावावेदकं कल्पान्तरमाह- **यद्वे**ति । **सूत्रे**ति- सूत्र च परम्परा च- वृद्धपरम्परा च सूत्रपरम्परे, तदुभयस्य- तदन्यतरस्य यत् प्रामाण्य तदनुपजीवि- तदनपेक्षं यदेकान्तश्रद्धानं तदेव मिथ्यात्वमित्यर्थः, अत्रोभयपदस्यान्यतरार्थकत्वकथनेन प्रकृतश्रद्धानसूत्रप्रामाण्यानुपजीवित्वेऽपि न क्षतिः । **तच्च** निरुक्तमिथ्यात्व च । **न तेषां** नैकान्तषट्कायादिश्रद्धावताम् । ननु तेषां मिथ्यात्वाभावे सम्यक्त्वं प्राप्तं तच्च कथ द्रव्यतो न भावत इत्यपेक्षायामाह- **सम्यक्त्वं चे**ति । **तच्च** निरुक्तसम्यक्त्वं च । **अनेकान्ते**ति- अनेकान्तं वस्तुमात्रगतमिति बुद्धिलक्षणा याऽनेकान्तव्यापकव्युत्पत्तिस्तज्जनितं यत् सर्ववस्तुव्यापकानेकान्तत्वविषयकं श्रद्धान तद्रूपा- तदात्मिका या विस्ताररुचिस्तत्स्वरूप यत् सम्यक्त्वं तदपेक्षयाऽप्राधान्येन द्रव्यतया निरुक्तसम्यक्त्वं व्यपदिश्यत इत्यर्थः । **तेन** निरुक्तविवेकेन, अस्य **न तज्जन्ये**त्यादिना सम्बन्धः, यत्र द्रव्यतः सम्यक्त्व तत्र भावतो मिथ्यात्वं यत्र भावतः सम्यक्त्वं तत्र द्रव्यतो मिथ्यात्वमिति कृत्वा द्वयोस्तुल्यव्यापारो बोध्यः, **तज्जन्ये**ति- सम्यक्त्व-मिथ्यात्वव्यापारद्वयजन्ये-त्यर्थः । अस्य विवेकस्य युक्तत्वमावेदयति- **युक्तं चैतद्**िति । **इत्थमेव** निरुक्तविवेचनप्रकारेणैव । **तेषां** षट्कायादि-श्रद्धावताम् । मार्गानुसारिणो यो गुणः "न्यायसम्पन्नविभवः०" इत्यादिरूपस्तत्प्रशंसया प्रशंसाकर्तुः परपाखण्डप्रशंसारूपो यः सम्यक्त्वातिचारस्तस्यानापत्तेरित्यर्थः । **तत्र** परपाखण्डप्रशंसारूपसम्यक्त्वातिचारे । **हि** यतः । परपाखण्डानां प्रशंसा परपाखण्डप्रशंसेति समासविग्रहे स्थित परपाखण्डानामिति वाक्यं सर्वज्ञप्रणीतपाखण्डत्वव्यतिरिक्तानामित्येव व्याख्यातमाचार्यै-रित्यर्थः । तथा च निरुक्तव्याख्याने च । **परे**ति- यद्रूपेण परपाखण्डत्व स धर्मः परपाखण्डतावच्छेदकस्तत्प्रकारेणैव परपाखण्डप्रशंसाया अतिचारत्व- सम्यक्त्वातिचारत्वमागतं- प्राप्तमित्यर्थ. । **स च धर्मः** परपाखण्डतावच्छेदकधर्मश्च । **तत्तद्व्यक्तित्वम्** यद्यद्व्यक्तौ पाखण्डत्वमभिमतं तत्तद्व्यक्तिनिष्ठतत्तद्व्यक्तित्वम्, अस्य **यथास्थानं ग्राह्य**मित्यनेन सम्बन्धः । **अनाचारे**ति- परपाखण्डतावच्छेदकधर्मोऽनाचारलिङ्गवेषादिकं यथास्थानं ग्राह्यमित्यन्वय. । **अत एव** उक्तरूप-परपाखण्डत्वाश्रयणादेव, अस्योदाहृतमित्यनेनान्वयः । **एतेषां** पुण्यभाज एते सुलब्धमेभिर्जन्मेत्यादिलक्षणा प्रशंसा, न

स्यापि सद्भावशोधितस्य स्वकीयत्वेन, स्वकीयस्यापि चासद्ग्रहादिना परकीयत्वेन विश्रामात्, अत एवाकरणनियमादिवचनानां परसमयस्थाना( म )नादरे तन्मूलदृष्टिवादस्याशातना दुष्करकारिणाम्, अपि च गुरुकुलवासत्यागिनां तपोव्रतादिगुणानुमोदने दीर्घसंसारिणा( ता ) तत्र तत्र प्रतिपादिता, इत्यधिकं धर्मपरीक्षायां ॥ १२८ ॥

क्रियानयः क्रियां ब्रूते, ज्ञानं ज्ञाननयः पुनः ।
मोक्षस्य कारणं तच्च, भूयस्यो युक्तयो द्वयोः ॥ १२९ ॥
क्रियैव फलदा पुंसां, न ज्ञानं फलदं मतम् ।
यतः स्त्रीभक्षभोगज्ञो, न ज्ञानात् सुखितो भवेत् ॥ १३० ॥
ज्ञानमेव शिवस्याध्वा, मिथ्यासंस्कारनाशनात् ।
क्रियामात्रं त्वभव्यानामपि नो दुर्लभं भवेत् ॥ १३१ ॥
तण्डुलस्य यथा चर्म, यथा ताम्रस्य कालिका ।
नश्यति क्रियया पुत्र !, पुरुषस्य तथा मलः ॥ १३२ ॥
बठरश्च तपस्वी च, शूरश्चाप्यकृतव्रणः ।
मद्यपा स्त्री सती चेति, राजन्! न श्रद्दधाम्यहम् ॥ १३३ ॥
ज्ञानवान् शीलहीनश्च, त्यागवान् धनसङ्ग्रही ।
गुणवान् भाग्यहीनश्च, राजन्! न श्रद्दधाम्यहम् ॥ १३४ ॥
इति युक्तिवशात् प्राहुरुभयोस्तुल्यकक्षताम् ।
मन्त्रेऽप्याह्वानं देवादेः, क्रियायुग्ज्ञानमिष्टकृत् ॥ १३५ ॥
ज्ञानं तुर्ये गुणस्थाने, क्षायोपशमिकं भवेत् ।
अपेक्षते फले षष्ठगुणस्थानजसंयमम् ॥ १३६ ॥

---

कार्येत्यन्वयः । शृङ्गग्राहिकादिनेति– शृङ्ग हस्तेन गृहीत्वेय गौर्ममेत्येवं यत् पर प्रति विशिष्योपदर्शन तत्र शृङ्गग्राहिकान्यायः प्रवर्तते । स्वपरेति– " नापेक्षयैव " इत्यस्य स्थाने " चापेक्षयैव " इति पाठो युक्तः । स्वकीयत्वनेत्यस्य विश्रामादित्यनेनान्वयः । अत एव अपेक्षाश्रयणस्यावश्यकत्वादेव । अनादरे अनाश्रयणे । तन्मूलेति– परसमयस्थाकरणनियमादिवचनमूलेत्यर्थः । दुष्करकारिणा तन्मूलदृष्टिवादस्याशातना तत्र तत्र प्रतिपादितेत्यन्वयः । " दीर्घसंसारिणा " इत्यस्य स्थाने " दीर्घससारिता " इति पाठो युक्त । तत्र तत्रेत्याम्रेडनेन वहुपु ग्रन्थेपु तथा प्रतिपादनं नोपेक्षणीयमिति व्यञ्जितम् । अत्र विशेषावगमेच्छुभिरस्मत्कृतधर्मपरीक्षाऽवलोकनीयेत्युपदेशाभिप्रायेणाह– इत्यधिकं धर्मपरीक्षायामिति ॥ १२८ ॥

प्रायः सम्भवतः सर्वगतिषु ज्ञानदर्शने ।
तत्प्रमादो न कर्तव्यो, ज्ञाने चारित्रवर्जिते ॥ १३७ ॥
क्षायिकं केवलज्ञानमपि मुक्तिं ददाति न ।
तावन्नाविर्भवेद् यावच्छैलेश्यां शुद्धसंयमः ॥ १३८ ॥
व्यवहारे तपो-ज्ञान-संयमा मुक्तिहेतवः ।
एकः शब्दर्जुसूत्रेषु, संयमो मोक्षकारणम् ॥ १३९ ॥
सङ्ग्रहस्तु नयः प्राह, जीवो मुक्तः सदाशिवः ।
अनवाप्तिभ्रमात् कण्ठस्वर्णन्यायात् क्रिया पुनः ॥ १४० ॥
अनन्तमर्जितं ज्ञानं, त्यक्ताश्चानन्तविभ्रमाः ।
न चित्रं कलयाप्यात्मा, हीनोऽभूदधिकोऽपि वा ॥ १४१ ॥
धावन्तोऽपि नयाः सर्वे, स्युर्भावे कृतविश्रमाः ।
चारित्रगुणलीनः स्यादिति सर्वनयाश्रितः ॥ १४२ ॥

सुनिपुणमतिगम्यं मन्दधीदुष्प्रवेशं, प्रवचनवचनं न क्वापि हीनं नयौघैः ।
गुरुचरणकृपातो योजयंस्तान् पदे यः, परिणमयति शिष्यांस्तं वृणीते यशःश्रीः ॥

गच्छे श्रीविजयादिदेवसुगुरोः स्वच्छे गुणानां गुणैः,
प्रौढिं प्रौढिमधाम्नि जीतविजयप्राज्ञाः परामैयरुः ।
तत्सातीर्थ्यभृतां नयादिविजयप्राज्ञोत्तमानां शिशु-
स्तत्त्वं किञ्चिदिदं यशोविजय इत्याख्याभृदाख्यातवान् ॥ १४४ ॥

नयामृत०—"क्रियानयः" क्रियानय इत्यादयः श्लोकाः प्रायः स्पष्टाः । अत्र ज्ञान-कर्मसमुच्चय-वादे स्व-परसमयविचारः कश्चिल्लिख्यते— तत्र मुमुक्षुकर्मव्यापारतन्त्रं तत्त्वज्ञानवृत्ति नवेति विप्रतिपत्तिः, विधिकोटिरुदयनाचार्याणां निपेधकोटिर्भास्करीयाणाम्, तत्र भास्करीयाणामयमाशयः— तीर्थविशेष-स्नान-महादान-यम-नियमादिकर्मणां निःश्रेयसकारणत्वं तावच्छब्दबलादेवावगम्यते, तत्त्वज्ञानव्यापार-

एकोनत्रिंशदुत्तरशततमात् "क्रियानयः" इत्यादि पद्यादारभ्य चतुश्चत्वारिंशदुत्तरशततमं— "गच्छे०" इत्याद्यन्तिम-श्लोक यावत् पोडशसङ्ख्यकपदकदम्बकं स्पष्टार्थत्वान्न व्याख्यानमपेक्षत इत्याह— **क्रियानयः इत्यादय** इति । **अत्र** अस्मिन् प्रकरणे । **स्व-परसमयविचारः** जैनसिद्धान्त-नैयायिकादिसिद्धान्तविचारः । **तत्र** स्व-परसमयविचारे । "**तन्त्रं**" इत्यस्य स्थाने "तत्त्वं" इति पाठो युक्त. । **विधिकोटिः** मुमुक्षुकर्मव्यापारत्वं तत्त्वज्ञानवृत्तीति विधिकोटिः ।

कत्वं तु तेषां निःश्रेयसे जनयितव्ये न तावच्छब्द एव बोधयति, तत्र तस्योदासीनत्वात् । न च साक्षात् साधनताव्या( वि )धेः साधनताऽप्रतीतेः परम्पराघटकव्यापारमविषयीकृत्य न घटत इत्यपूर्व-वाच्यतान्यायेन शब्द एव वस्तुतः तत्त्वज्ञानव्यापारकतां बोधयितुं प्रगल्भत इति शङ्कापदं हृदि निधेयम्, सामान्यशब्दोऽन्यतमविशेषबाधे तं त्यजति, न तु विशेषान्तरमुपादित्सितमपि विशिष्य बोधयतीति स्वभावात् दृष्टान्तस्यैवासम्प्रतिपत्तेः, न च कर्मणामाशुतरविनाशित्वेन व्यापारोऽवश्यं स्वीकरणीयस्तत्र दृष्टेन तत्त्वज्ञानेनैवोपपत्तावदृष्टकल्पनाया अन्याय्यत्वात्, लाघवसहकृतानुपपत्तिरेव तत्त्वज्ञानव्यापारकत्वे मानमिति वाच्यम्, तत्त्वज्ञानस्यापि व्यवहितत्वेन तत्रापि कर्मणोऽदृष्टद्वारावश्यकत्वाद् निःश्रेयसे द्वारद्वयकल्पने गौरवात्, निःश्रेयसे कर्मणामदृष्टद्वारा हेतुत्वे तत्त्वज्ञानोत्पत्त्यनन्तरमपि यम-नियमाद्यनुष्ठानं स्यादिति चेत् ? स्यादेव, तदानीमपि मुमुक्षाया अधिकारस्याक्षतेः, न च तत्त्वज्ञानत्वेनैव

---

**निषेधकोटिः** मुमुक्षुकर्मव्यापारत्वं तत्त्वज्ञानवृत्ति न भवतीति निषेधकोटिः । **तत्र** विप्रतिपत्तौ सत्या निषेधकोटिसाधने । **अयं** तीर्थविशेषस्नानेत्यादिना वक्ष्यमाणः । **तेषां** तीर्थविशेषस्नान-महादान-यम-नियमादिकर्मणाम् । **तत्र** तीर्थविशेषस्नानादिकर्मणां तत्त्वज्ञानव्यापारकत्वे । **तस्य** शब्दस्य । **न चे**त्यस्य **विधेय**मित्यनेनान्वयः । "**साक्षात् साधनताव्या(वि)धेः साधनताऽप्रतीतेः**" इत्यस्य स्थाने "साक्षात् साधनताबाधे विधेः साधनताप्रतीतिः" इति पाठो युक्तः, तथा च तीर्थविशेषस्नानादिकर्मणां मोक्षं प्रति कारणत्वं विधिवाक्यात् प्रतीयते, किन्तु तीर्थस्नानादिकर्मणां चिरविनष्टत्वेन मोक्षाव्यवहितपूर्वक्षणेऽभावात् साक्षान्मोक्षं प्रति कारणत्वं न सम्भवतीत्येव तेषां मोक्षं प्रति साक्षात् साधनताया बाधे सति विधेः-विधिवाक्यात् तेषां मोक्षं प्रति साधनताप्रतीतिः परम्परया कारणत्वविषयिणी, परम्पराकारणत्वं नाम स्वजनकव्यापारजनकत्वमिति **परम्पराघटकव्यापारमविषयीकृत्य न घटते** न सम्भवतीत्येवम्भूतार्थप्रतिपादनपरो **योऽपूर्ववाच्यतान्यायो** यथा स्वर्गकामो यजेतेत्यत्र विधेरिष्टसाधनत्वार्थकत्वपक्षे यागस्य चिरविनष्टस्य कालान्तरभाविस्वर्गरूपेष्टं प्रति साक्षात् साधनत्वं न सम्भवतीति स्वर्गजनकव्यापारजनकत्वलक्षणपरम्पराकारणत्वमभ्युपेयमिति तद्घटकतयाऽपूर्वस्यादृष्टात्मकव्यापारस्य विधिवाच्यतेति तेन न्यायेन, **शब्द एव** विधिस्वरूपशब्द एव, **वस्तुतः** परमार्थतः, तीर्थविशेषस्नानादिकर्मणां तत्त्वज्ञानव्यापारकतां **बोधयितुं**, ज्ञापयितुं **प्रगल्भते** समर्थो भवतीत्येवंस्वरूपं शङ्कापदं, **हृदि** मानसे, **न विधेयं** न कर्तव्यमित्यर्थः । निषेधहेतुमाह- **सामान्यशब्द** इति- सामान्यवाचकशब्द इत्यर्थः । **अन्यतमविशेषबाधे** सामान्यधर्माक्रान्तयत्किञ्चिद्विशेषस्य बाधे सति । **तं** विशेषम् । **त्यजति** तदसाधारणरूपेण तं न बोधयति । **न त्वि**त्यस्य **बोधयती**त्यनेनान्वयः । **विशेषान्तरं** बाधितविशेषभिन्नविशेषम् । तं विशिनष्टि- **उपादित्सितमपीति**- उपादातुमिष्टमपीत्यर्थः । **विशिष्य न तु बोधयति** तदसाधारणरूपेण न बोधयति । कथं न बोधयतीत्यपेक्षायामाह- **इति स्वभावादिति**- यस्य शब्दस्य यत्रार्थे येन रूपेण शक्तिः स शब्दस्तेनैव रूपेण तस्य बोधक इति सम्भवादित्यर्थः । **दृष्टान्तस्यैवासम्प्रतिपत्तेरिति**- स्वर्गकामो यजेतेत्यत्रापि यागस्य स्वर्गं प्रति साक्षाज्जनकत्वस्य बाधे साक्षाज्जनकत्वरूपेण तमेव विधिर्न बोधयति, न तु परम्पराजनकत्वरूपेण परम्पराजनकत्वं बोधयति, उक्तस्वभावादित्यपूर्ववाच्यतादृष्टान्तस्यानभ्युपगमादित्यर्थः । **न चे**त्यस्य **वाच्यमि**त्यनेनान्वयः । **कर्मणां** तीर्थविशेषस्नानादिकर्मणाम् । **व्यापारः** मोक्षरूपकार्यजनने व्यापारः । **तत्र** व्यापारस्यावश्यकत्वे । **लाघवेति**- उपस्थितिलाघवेत्यर्थः । निषेधे हेतुमाह- **तत्त्वज्ञानस्यापीति**- तत्त्वज्ञानान्तरमेव मुक्तिर्न भवति किन्तु तत्त्वज्ञानेन मिथ्याज्ञानस्य सञ्चितकर्मणां च क्षये सत्यपि भोगमात्रविनाश्यप्रारब्धकर्मणां भोगाद् विनाशे सति मुक्तिर्भवतीत्येवं तत्त्वज्ञानस्यापि व्यवहितत्वेनेत्यर्थः; अथवा तत्त्वज्ञानलक्षणव्यापारात्मककार्यस्यापि तीर्थविशेषस्नानादिकर्मणोऽनन्तरमेवानुत्पत्तेः, किन्तु कालान्तरमुत्पत्त्या तन्मध्यपतितकालप्रयुक्तव्यवधानाश्रयत्वेनेत्यर्थः, अयमेवार्थ उत्तरग्रन्थसङ्गत्याऽऽदरणीयः । **तत्रापि** तत्त्वज्ञानोत्पत्तावपि । **निःश्रेयसे** मोक्षरूपकार्ये । **द्वारद्वयकल्पने** तत्त्वज्ञानरूपव्यापार एकः, अपरश्च तत्त्वज्ञानार्थमदृष्टरूपव्यापार इत्येवं व्यापारद्वयकल्पने **गौरवात्**, अतोऽदृष्टद्वारैव कर्मणां मोक्षं प्रति कारणत्वमित्यर्थः । ननु तत्त्वज्ञानद्वारा मोक्षं प्रति कर्मणां कारणत्वे तत्त्वज्ञानान्तरं न कर्माण्यनुष्ठेयानि तत्त्वज्ञानपूर्ववर्तिकर्मभ्य एव तत्त्वज्ञानद्वारा मोक्षो-

मोक्षजनकत्वात् प्राथमिकतत्त्वज्ञानादेव मोक्षोपपत्तौ क्व कर्मानुष्ठानमिति शङ्कनीयम्—

" नित्यनैमित्तिकैरेव, कुर्वाणो दुरितक्षयम् । ज्ञानं च विमलीकुर्वन्नभ्यासेन तु पाचयेत् ॥ १ ॥

अभ्यासात् पक्वविज्ञानः कैवल्यं लभते नरः । " [ ]

इत्यादिपुराणेषु तदभ्यासश्रवणात्, श्रुतिरप्यत्र विपक्षबाधकतया प्रमाणमस्ति, तथाहि—" अन्धं तमः प्रविशन्ति ये अविद्यामुपासते ततो भूय इव ते तमो य उ विद्यायां रताः " [ ] अस्या अर्थः— अविद्या-कर्म, तदुपासते-ज्ञानत्यागेन तत्रासक्ता भवन्ति ये, ते अन्धं तमः प्रविशन्ति-संसारान्न मुच्यन्ते, तेन केवलकर्मोपासने न जन्मादिविच्छेदः, ये च विद्यायां रताः, विद्या तत्त्वज्ञानं तन्मात्रासक्ताः, " उ " इत्यव्ययं चकारार्थम्, ते भूयोऽतिशयेनान्धं तमः प्रविशन्ति, नित्याकरणे प्रत्यवायस्य बहुलत्वात्; ननु " मोक्षाश्रमश्चतुर्थो वै यो भिक्षोः परिकीर्तितः " [ ] इत्यागमाच्चतुर्थाश्रमिणामेव मोक्षे अधिकारः, तत्र च " संन्यस्य सर्वकर्माणि " [ ] इति स्मृतेः कर्ममात्रत्यागात् क्व समुच्चयः क्व वा अकरणे प्रत्यवाय इति चेत् ? न— यानि कर्माण्युपमीत-

---

पपत्तेः सम्भवात्, स्वातन्त्र्येण तत्त्वज्ञान-कर्मणोर्मोक्षं प्रति कारणत्वे तु तत्त्वज्ञानानन्तरमप्यनुष्ठितं कर्मादृष्टद्वारा मोक्षहेतुर्भविष्यतीति तत्त्वज्ञानोत्पत्त्यनन्तरमपि यम-नियमाद्यनुष्ठानं स्यादित्याशङ्कते— **निःश्रेयस** इति । अत्रेष्टापत्तिरेव समाधानमित्याह— **स्यादेवे**ति— तत्त्वज्ञानोत्पत्त्यनन्तरमपि यमनियमाद्यनुष्ठानमित्यनुवर्तते । मोक्षे कर्तव्ये मुमुक्षैवाधिकारः, तस्या यथा तत्त्वज्ञानोत्पत्तेः प्राग् भावस्तथा तत्त्वज्ञानोत्पत्त्यनन्तरमपि भाव इति तद्बलात् तत्त्वज्ञानोत्पत्त्यनन्तरं यम-नियमाद्यनुष्ठान युक्तमेवेत्याह— **तदानीमपी**ति— तत्त्वज्ञानोत्पत्त्यनन्तरमपीत्यर्थः । **न** चेत्यस्य **शङ्कनीयमि**त्यनेनान्वयः, **तत्त्वज्ञानत्वेनै**वेत्येवकारेणाभ्यस्ततत्त्वज्ञानत्वस्य मोक्षजनकतावच्छेदकत्वव्यवच्छेदः, तत्त्वज्ञानत्वं च प्राथमिकतत्त्वज्ञानेऽपि समस्तीति तावन्मात्रेणापि मोक्षरूपकार्यजननसम्भवात् कस्मिन् कार्ये कर्मानुष्ठानम् ? प्रयोजनाभावान्न तत्त्वज्ञानोत्पत्त्यनन्तरं यम-नियमाद्यनुष्ठानमिति नाशङ्कनीयमित्यर्थः । तत्र हेतुमाह— **नित्यनैमित्तिकैरेवे**ति— स्पष्टम् । **तदभ्यासश्रवणात्** तत्त्वज्ञानाभ्यासश्रवणात् । न केवलमुक्तार्थे पुराणवचनमेव प्रमाण किन्तु श्रुतिरपि तत्र प्रमाणमित्याह— **श्रुतिरपी**ति । **विपक्षबाधकतया** तत्त्वज्ञानाभ्यासाकारणरूपविपक्षबाधकतया । तामेव श्रुतिमुल्लिखति— **अन्धं तम** इति । **अस्याः** ' अन्धं तम ' इत्यादिश्रुतेः । **अविद्या-कर्म** कर्मैवात्राविद्याशब्देनोच्यते, **तत्** कर्म, **उपासते** इत्यस्य विवरणं— **ज्ञानत्यागेन तत्रासक्ता भवन्ती**ति, यत्तच्छब्दयोर्नित्यसम्बन्ध इति, **ये** इति शब्दोपादानसामर्थ्यात् **ते** इति शब्दोऽनुक्तोऽपि सन्निहितो भवति, **ते** ज्ञानत्यागेन कर्मोपासनपरा जनाः, **अन्धं तमः प्रविशन्ती**त्यस्य फलितार्थकथन— **संसारान्न मुच्यन्त** इति, एतेन किमुक्त भवतीत्यपेक्षायामाह— **तेने**ति— संसारान्मुक्तेरभावेनेत्यर्थः, **केवले**ति— ज्ञानासहितेत्यर्थः, **विद्यायां रता** इत्यस्य विवरणं— **विद्यातत्त्वज्ञानं तन्मात्रासक्ता** इति, ते तत्त्वज्ञानमात्रासक्ताः, **भूय** इत्यस्य विवरण**मतिशयेने**ति, कथ तत्त्वज्ञानमात्रासक्तानामन्धे तमसि प्रवेश इत्याकाङ्क्षायामाह— **नित्याकरण** इति— नित्यकर्मानुष्ठाने इत्यर्थः, **प्रत्यवायस्य** पापस्य । शङ्कते— **नन्वि**ति । **मोक्षाश्रम** इति— ब्रह्मचर्याश्रम-गृहस्थाश्रम-वानप्रस्थाश्रम-संन्यासाश्रमापरनाममोक्षाश्रमभेदेनाऽऽश्रमाश्चत्वार इति तेषां मध्ये चतुर्थो मोक्षाश्रमः, स एव **' वै '** इत्यस्यैवकारार्थकत्वात्, य आश्रमः, **भिक्षोः** सन्यासिनः, **परिकीर्तितः** शास्त्रे कथित इत्यर्थः, **इत्यागमादे**वंस्वरूपागमवचनात्, **चतुर्थाश्रमिणां** सन्यासिनाम्, एवेत्यवधारणेन ब्रह्मचर्य-गार्हस्थ्य-वानप्रस्थाश्रमिणां त्रयाणां मोक्षानधिकारत्वमावेदितम् । **तत्र च** सन्यासाश्रमं पुनः । **संन्यस्य सर्वकर्माणि** सर्वकर्माणि त्रीण्यपि नित्य-नैमित्तिक-काम्यकर्माणि त्यक्त्वा । **इति स्मृतेः** एवंस्वरूपस्मृतिवचनात् । **कर्ममात्रत्यागात्** संन्यासाश्रमे निखिलकर्मपरित्यागात् । **क्व समुच्चयः** मोक्षार्थं कर्मभिः समं ज्ञानस्य समुच्चयो दूरापेतः । यदा च संन्यासिनो निखिलकर्मस्वनधिकार एव तदा, **क्व वा अकरणे प्रत्यवायः** वा-अथवा, अकरणे— नित्यकर्माकरणे, प्रत्यवायः क्व— पापं न संभवति । समाधत्ते— **नेति** । **" ण्युपमीत "** इत्यस्य स्थाने " ण्युपनीत " इति पाठो युक्तः, उपनीतमात्रस्य ब्रह्म-क्षत्र-वैश्यजातीयाखिलोपनयन-

मात्रकर्तव्यत्वेन विहितानि तत्परित्यागस्यागस्याशास्त्रीयत्वात्, सङ्कोचे मानाभावात्, निषिद्धानि काम्यानि च बन्धहेतुत्वात्, धनमूलानि च धनत्यागादेव त्यज्यन्ते, इत्येतावदेव सन्न्यासपदार्थत्वात्, तथा, च गीतावचनम्—

"काम्यानां कर्मणां न्यासं, संन्यासं कवयो विदुः। नियतस्य तु संन्यासः, कर्मणो नोपपद्यते ॥ १ ॥
मोहात् तस्य परित्यागस्तामसः परिकीर्तितः" [ ] ॥ इति

साक्षात् समुच्चयप्रतिपादिकापि श्रुतिः–"विद्यां चाविद्यां च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" [ ]

अत्राविद्या कर्म, विद्या च तत्त्वज्ञानं तुल्यवद् यो वेद प्राप्नोतीति पूर्वार्द्धार्थः, वेदेति प्रयोगात् "विदॢ लाभे" इति धातोः छान्दसत्वेन भास्करीयैर्दर्शितत्वात्, "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" [ ] इति वाक्यं तु एवकारस्य विदित्वेत्यनन्तरं योजनात् तत्त्वज्ञानस्याप्यपवर्गसामग्रीनिवेशननियमपरम्, न तु वाक्यान्तरावधृतकारणताककर्मव्युदासनपरम्, समुच्चये चान्यान्यपि भूयांसि वचनानि सन्ति, तथा च गीतावचनम्—

---

सत्कारिणः कर्तव्यत्वेन - नित्यकर्मकर्तव्यत्वेन, **विहितानि** विध्यात्मकश्रुतिवचनप्राप्तानि। **तत्परित्यागस्य** तेषां कर्मणां सन्यासिना परित्यागस्य। **अशास्त्रीयत्वात्** शास्त्रप्रमाणकत्वाभावात्। ननु मोक्षाश्रमिणोऽपि कर्मापरित्यागित्वे कर्मसंन्यासाभावात् संन्यासित्वमेव न भवेत्, अखिलकर्मपरित्यागस्यैव संन्यासपदार्थत्वादित्याशङ्कां मनसि कृत्वा तत्प्रतिक्षेपायाह– **निषिद्धानी**ति– निषिद्धानि, **काम्यानि** च बन्धहेतुत्वात् त्यज्यन्ते इत्यन्वयः। **इत्येतावदेव** निषिद्ध-काम-धनाधीनकर्मणां त्यागमात्रस्यैव। काम्यकर्मन्यासस्य संन्यासपदार्थत्वे भगवद्गीतावचनं प्रमाणयति– **तथा च गीतावचनमि**ति। **कवयो** विद्वांसः। **विदुः** जानन्ति। **नियतस्य तु** अवश्यकर्तव्यस्य पुनः, अवश्यकर्तव्यं च नित्य नैमित्तिकं च, तस्य कर्मण.। **संन्यासः** त्यागो, **नोपपद्यते** न युज्यत इत्यर्थः। **मोहात्** सर्वकर्मन्यासः सन्यास इति भ्रमात्। **तस्य** नियतकर्मणः। श्रुतिरपि साक्षात् कर्म-ज्ञानसमुच्चय प्रतिपादयन्ती तत्र प्रमाणमित्याह– **साक्षादि**ति। तां श्रुतिमुल्लिखति– **विद्यां चे**ति। अस्या अर्थमुपदर्शयति– **अत्रे**ति - अस्मिन् श्रुतिवाक्य इत्यर्थः। **अविद्या कर्मे**ति– अविद्यापदवाच्यं कर्मेत्यर्थः। **विद्या च तत्त्वज्ञानमि**ति– विद्यापदवाच्यं तत्त्वज्ञानमित्यर्थ.। **वेदे**त्यस्य प्राप्नोतीत्यर्थः। कथमित्यपेक्षायामाह– **वेदेति प्रयोगादि**ति। नन्वेव तत्त्वज्ञानमात्रस्यैव मोक्षजनकत्वप्रनिपादिकाऽपि श्रुतिरस्ति तस्याः का गतिरित्यत आह– **तमेवे**ति– आत्मानमेवेत्यर्थ.। **विदित्वा** ज्ञात्वा। **अतिमृत्युं** मोक्षम्। **एति** प्राप्नोति। **अन्यः** तत्त्वज्ञानाद् भिन्नः। **अयनाय** पुनः संसारेऽनागमनाय, मोक्षप्राप्तये इति यावत्। **पन्थाः** मार्गः, उपाय इति यावत्। **न विद्यते** नैवास्ति। **इति वाक्यं तु** एवस्वरूप श्रुतिवचन पुनः, अस्य **नियमपरमि**त्यनेनान्वय.। **एवकारस्य** तमेवेत्यत्र स्थितस्यैवकारस्य। **विदित्वेत्यनन्तरं योजनात्** तथा योजने त विदित्वैवेत्येवस्वरूपं लभ्यते, यथा दण्डे सत्येव घट इति वाक्याद् दण्डमात्रेण घट इति बोधो न जायते किन्तु दण्डोऽपि घटकारणमिति बोध उपजायते, तेन घटजनकसामग्र्यां दण्डोऽपि निविशते इति लभ्यते, तथा तं विदित्वैवेत्यादिवाक्यादात्मानं ज्ञात्वैव मोक्षमासादयति न त्वात्मानमज्ञात्वेति बोध उपजायते, तेन अपवर्गजनकसामग्र्यामवश्यं तत्त्वज्ञान निविशतीति नियमपरमुक्तवाक्यमित्यर्थः। तर्हि किं परं नोक्तवाक्यमित्यपेक्षायामाह– **न त्विति**। **वाक्यान्तरे**ति– **विद्यां चाविद्यां** चेत्यादिवाक्येत्यर्थः, वाक्यान्तरेणावधृता– निर्णीता, मोक्षं प्रति कारणता यस्य तद्वाक्यान्तरावधृतकारणताकमेवम्भूतस्य कर्मणो व्युदसनपर– निरसनतात्पर्यक नोक्तवाक्यमित्यर्थः, "**व्युदासनपरं**" इत्यस्य स्थाने "व्युदसनपर" इति पाठो युक्त। **समुच्चये** तत्त्वज्ञानकर्मसमुच्चये। **तथा च** समुच्चयप्रतिपादकं च, **तमभ्यर्च्य** ईश्वरम् आत्मानं वा, तदर्चाऽत्र सम्यक् तज्ज्ञान-रूपैव। विष्णुपुराणवचनमपि समुच्चये प्रमाणमित्याह– **विष्णुपुराणेऽप्युक्तमि**ति। **तस्मात्** मोक्षस्य परमपुरुषार्थत्वात्।

"स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥"

विष्णुपुराणेऽप्युक्तम्— [ ]

"तस्मात् तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः। तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामते!॥"

हारीत— [ ]

"उभाभ्यामपि पक्षाभ्यां यथा खे पक्षिणां गतिः। तथैव ज्ञान-कर्मभ्यां प्राप्यते ब्रह्म शाश्वतम्॥"

[ ]

श्रुतिश्च—"सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण॥"

एतन्मूलकमेव— [ ] इति,

"परिज्ञानाद् भवेन्मुक्तिरेतदालक्षणं परम्। कार्य(य)क्लेशभयाच्चैव कर्म नेच्छन्ति पण्डिताः॥ १॥

ज्ञानं प्रधानं न तु कर्महीनं, कर्मप्रधानं न तु बुद्धिहीनम्।

तस्माद् द्वयोरेव भवेत् प्रसिद्धिर्नह्येकपक्षो विहगः प्रयाति॥२॥"[ ]इत्यादि॥

न च काम्य-निषिद्धनैमित्तकाभ्यां कर्मभ्यां न समुच्चयः तयोस्त्यागात्, न निमित्तिकनित्येन, एकैकशो व्यभिचारात्, साकल्येनासम्भवात्, नापि यत्याश्रमविहितेन।

"न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः। श्राद्धकृत् सत्यवादी च गृहस्थोऽपि विमुच्यते॥१॥"

[ ]

---

तत्प्राप्तये मोक्षप्राप्त्यर्थम्, मोक्षश्च परमानन्दस्वरूपं ब्रह्मैव, तस्य पूर्वमपि सत्त्वात् तदुत्पत्तये इत्यनुक्त्वा तत्प्राप्तये इत्युक्तम्। तत्प्राप्तिहेतुः मोक्षप्राप्तिसाधनम्। हारीतवचनमपि समुच्चये प्रमाणमित्याह— **हारीत** इति। **सत्येनेत्यादि** स्पष्टम्। **एतन्मूलकमेव** तत्त्वज्ञान-कर्मसमुच्चयमोक्षकारणत्वप्रतिपादकोपदर्शितप्रमाणमूलकमेव। **"रेतदालक्षणं"** इत्यस्य स्थाने "रेतदालस्यलक्षणं" इति पाठो भवितुमर्हति। **"कार्य"** इत्यस्य स्थाने "काय" इति पाठो युक्तः। **द्वयोरेव** ज्ञान-कर्मणोरुभयोरपि, एवकारस्याप्यर्थकत्वात्, अथवाऽस्तु व्यवच्छेदार्थक एवैवकारः, तेन ज्ञानमात्रस्य कर्ममात्रस्य च व्यवच्छेद। न चेत्यस्य **वाच्यमित्यनेनान्वयः**। **काम्येति**— काम्यं च निषिद्धनैमित्तिकं च काम्यनिषिद्धनैमित्तिके, ताभ्यां काम्यनिषिद्ध-नैमित्तिकाभ्यां कर्मभ्यां सह ज्ञानस्य न समुच्चय इत्यर्थः। तत्र हेतुः— **तयोस्त्यागादिति**— काम्य-निषिद्धनैमित्तिककर्मणो सन्यासिना परित्यागादित्यर्थ.। **"न निमित्तिकनित्येन"** अस्य स्थाने "न नैमित्तिकनित्ये" इति पाठो युक्त, नैमित्तिकं च तन्नित्यं च नैमित्तिकनित्यं तेन नैमित्तिकनित्येन सह तत्त्वज्ञानस्य समुच्चयोऽपि न युक्त इत्यर्थः। नैमित्तिकनित्यकर्मणामनेकविधत्वेन तन्नैकनैमित्तिकनित्यकर्मणो यत्याश्रमविहितस्य सहकारेऽपि तत्त्वज्ञानतो मुक्तेरनुद्येनान्वयव्यभिचारस्य यत्याश्रमविहितयत्किञ्चिन्नैमित्तिकनित्यसहकृततत्त्वज्ञानस्याप्यभावेऽपि तदन्ययत्किञ्चिन्नैमित्तिकनित्यसहकृततत्त्वज्ञानतो मुक्तेर्भावेन तत्तन्नैमित्तिकनित्यकर्मसहकृततत्त्वज्ञानस्य मुक्तिं प्रति कारणत्वे प्रत्येकं व्यतिरेकव्यभिचारस्य सद्भावादिति निषेधहेतुमुपन्यस्यति— **एकैकशो व्यभिचारादिति**। सकलनैमित्तिकनित्यकर्मसहकृततत्त्वज्ञानस्य मुक्तिं प्रति कारणत्वं तु सकलनैमित्तिककर्मणामेकदाऽसम्भवेन तत्सहकारस्यापि तत्त्वज्ञानेऽसम्भवादेव न सम्भवतीत्याह— **साकल्येनासम्भवादिति**। यत्याश्रमविहितेन कर्मणा समुच्चयोऽपि तत्त्वज्ञानस्य न सम्भवति गृहस्थस्यापि तत्त्वज्ञानतो मुक्तेः सम्भवस्यागमे प्रतिपादिततया गृहस्थनिष्ठतत्त्वज्ञानस्य यत्याश्रमविहितकर्मसहकृतत्वाभावादित्याह— **नापि यत्याश्रमविहितेनेति**। निषेधे हेतुमाह— **न्यायागतधन** इति— न्यायागतधन इत्यादि प्रथमान्तपञ्चकं गृहस्थोऽपीत्यस्य विशेषणम्, न्यायेनागत धन यस्य स न्यायागतधनो न्यायोपार्जितधनवानित्यर्थ, तत्त्वज्ञाने निष्ठा— श्रद्धा यस्य स तत्त्वज्ञाननिष्ठः, अतिथिः प्रियो यस्य सोऽतिथिप्रियः, यः कश्चिदतिथिः स्वगृहमागच्छति भक्त्या तस्मै यो भोज्यान्नपानाच्छादनवस्त्रादिदानेन स्वात्मान कृतार्थं मन्यमान इति यावत्, देवपितृश्राद्धकारी श्राद्धकृत्, सत्यं वदितुं शीलं यस्य स सत्यवादी, इति पञ्च-

इत्यागमेन गृहस्थस्यापि मोक्षश्रवणात्, इत्युपपत्तिविरोधादेव न समुच्चय इति वाच्यम्, यत्राश्रमे यानि मोक्षहेतुतया विहितानि तैरेव तदाश्रमित्वज्ञानस्य समुच्चयोपपत्तेः, न च कर्मणां परस्परव्यभिचारान्निःश्रेयसे च स्वर्गाद् वैचित्र्याभावान्न तत् प्रति कारणत्वमिति वाच्यम्, स्वाभाविकविशेषविरहेऽपि प्रतियोगिभेदेन विशेषस्य निःश्रेयसेऽप्यविरोधात्, तत्तत्पुरुषीयमुमुक्षुविहितकर्मत्वेन तत्तत्पुरुषीयविजातीयदुःखध्वंसे हेतुत्वसम्भवात्, अवश्यं चाभावरूपे कार्ये प्रतियोगिभेदेन विशेषोऽभ्युपेयः, कथमन्यथा आश्रयनाश-पाकयो रूपनाशकारणत्वमिति, न च ज्ञानस्य विहित्वाददृष्टजनकत्वेनादृष्टस्यैव प्राधान्यम्, न च रागाद्यभावाद् योगिनोऽदृष्टोत्पत्त्यसम्भवः, मुक्तिविरोध्यपूर्वोत्पत्तावेव रागादेः सहकारित्वात्, तावतैव मोक्षफलकविध्यनुपपत्तिपरिहारादिति वाच्यम्, शुकादितत्त्वज्ञानसाध्यतया क्लृप्तेन

---

विशेषणविशिष्टो गृहस्थो गृहस्थाश्रमे वर्तमानोऽपि विमुच्यते- मुक्तो भवति। **इत्यागमेन** एव- स्वरूपागमेन। इति एवं-प्रकारेण। **उपपत्तिविरोधादेव** असमुच्चयसाधकयुक्तिनतिविरोधादेव। निषेधे हेतुमुपदर्शयति- **यत्राश्रम** इति- "**तैरेव तदाश्रमित्वज्ञानस्य**" इत्यस्य स्थाने "तैरेव तदाश्रमितत्त्वज्ञानस्य" इति पाठो युक्तः, स्वस्वाश्रमविहितकर्मभिस्तत्तदाश्रमिणस्तत्त्वज्ञानस्य समुच्चयोपपत्तेरित्यर्थः। नन्वेकस्य कर्मणोऽभावेऽपि कर्मान्तरेण मोक्षस्योत्पत्तेर्व्यभिचारेण न कर्मणां मोक्ष प्रति कारणत्वं सम्भवति, यथा स्वर्गे वैजात्यं समस्तीति विजातीयस्वर्गं प्रति यागविशेषस्य कारणत्वम्, तदन्यविजातीयस्वर्गं प्रति तद्यागान्ययागविशेषस्य कारणत्वम्, एव तीर्थविशेषस्नानादेरपि तत्तद्विजातीयस्वर्गं प्रति कारणत्वमिति न तत्र व्यभिचारः, तथा मोक्षेऽपि यदि तत्तत्कर्मजन्ये वैजात्यं स्यात् तदा विजातीयमोक्षं प्रति तत्कर्मणः कारणत्व तदन्यकर्मणस्तु तन्मोक्षगतवैजात्यभिन्नवैजात्याकलितमोक्ष प्रति कारणत्वमित्युपगमे व्यभिचारो न भवेत्, न चैवम्, मोक्षे दुःखध्वंसात्मकत्वेनाभावस्वरूपे वैजात्याभावादित्याशङ्क्य प्रतिक्षिपति- **न चेति**- अस्य **वाच्यमि**त्यनेनान्वयः। **तत् प्रति** निःश्रेयसं प्रति। निषेधहेतुमुपदर्शयति- **स्वाभाविकविशेषविरहेऽपी**ति- अभावात्मके मोक्षे अवान्तरजात्यात्मकस्वाभाविकविशेषस्याभावेऽपीत्यर्थः। दुःखध्वंसलक्षणस्य मोक्षस्य प्रतियोगिनो दुःखस्य वैजात्यसम्भवाद् विजातीयदुःखप्रतियोगिकत्वलक्षणविशेषस्य निःश्रेयसेऽप्यविशेष इत्याह- **प्रतियोगिभेदेने**ति। प्रतियोगिभेदेन निःश्रेयसे विशेषस्य सम्भवे विशिष्य कार्यकारणभावो यथा सम्भवति तथोपदर्शयति- **तत्तत्पुरुषीये**ति। कार्यकारणभावोपपादनाय प्रतियोगिभेदप्रयुक्तस्याभाव विशेषस्यावश्याभ्युपगन्तव्यत्वं दर्शयति- **अवश्यं चेति**- अस्या**भ्युपगन्तव्यं** इत्यनेनान्वयः। **कथमि**त्यस्य रूपनाशकारणत्वमित्यनेनान्वयः। **अन्यथा** अभावे विशेषानभ्युपगमे, आश्रयनाशादपि रूपस्य नाशः, पाकादपि रूपस्य नाशः, तथा चाश्रयनाशाभावेऽपि रूपनाशस्य भावेन व्यभिचारेण रूपनाशस्य कारणत्वं न भवेत्, एव पाकाभावेऽपि रूपनाश आश्रयनाशाद् भवतीति व्यभिचारेण पाकस्य कारणत्वं न स्यात्, अभावे विशेषाभ्युपगमे तु विलक्षणरूपनाशं प्रति आश्रयनाशत्वेन कारणत्वम्, तद्विलक्षणरूपनाश प्रति पाकत्वेन कारणत्वमित्येवं कार्यकारणभाव. सम्भवतीत्यर्थ.। **न चे**त्यस्य **वाच्यमि**त्यनेनान्वयः, यद् विहित तददृष्टद्वारा कार्यजनकं यथा दर्शपूर्णमासादिकं विहितमतस्तदप्यदृष्टद्वारैव मोक्षजनकमिति तत्त्वज्ञानस्य विहितमदृष्टद्वारा स्वर्गात्मककार्यजनकं, तत्त्वज्ञानं च विहितत्वाद् द्वारीभूतादृष्टजनकत्वेनादृष्टस्यैव प्राधान्यं स्यादित्यर्थः। उक्ताशङ्कायाः प्रतिविधानमाशङ्क्य प्रतिक्षिपति- **न चेति**- तत्त्वज्ञानं योगिन एव भवति, तत्र च रागादिकं नास्ति, रागादिकं चादृष्टस्य कारणमिति रागादिरूपकारणाभावान्न तत्रादृष्टमुत्पद्यते, ततश्च विहितत्वमप्रयोजकत्वान्न तत्त्वज्ञानस्यादृष्टजनकत्वसाधनायालमित्यदृष्टस्याभावान्न तस्य मोक्षजनकत्वमिति न तस्य प्राधान्यमिति **न चे**त्यर्थः। तत्र हेतुमाह- **मुक्ती**ति- मुक्तिविरोधि यदपूर्वमदृष्ट तदुत्पत्तावेव रागादे. सहकारिविधया कारणत्वात् तत्त्वज्ञानाद् यददृष्टं भवति तन्मोक्षानुकूलमेव न तु मोक्षविरोधीति तदुत्पत्तौ न रागादिकं कारणमिति तदभावेऽपि योगिन्यदृष्टोत्पत्तिः सम्भवतीत्यदृष्टस्य प्राधान्यं स्यादेवेत्यर्थः। **तावतैव** अदृष्टस्य कारणत्वेनैव मोक्षफलकतत्त्वज्ञानविधेरनुपपत्तिविरहादित्यर्थः। उक्ताशङ्काप्रतिक्षेपहेतुमुपदर्शयति- **शुकादी**ति- शुको व्यासपुत्रस्तस्य तत्त्वज्ञानान्मिथ्याध्वसादेव मुक्तिरिति

मिथ्याज्ञानध्वंसेन दृष्टेनैवोपपत्तावदृष्टकल्पनाऽयोगात्, अन्यथा भेषजादिष्वपि तत्कल्पनापत्तेः, एवं च विहितत्वं तत्रैव व्यभिचारीति द्रष्टव्यम्, न चावघातवन्नियमादृष्टकल्पना, तत्र वैतुष्यस्यान्यथापि सम्भवेन सा, अत्र तु मिथ्याज्ञानस्य निवृत्तेरन्यथाऽसम्भव इति विशेषात्, नन्वत्रापि विरोधिगुणान्तरोत्पत्तेरपि मिथ्याज्ञानध्वंसः सम्भवति, न च मिथ्याज्ञानपदं तद्वासनापरम्, तत्त्वज्ञानात् तद्ध्वंसस्यैवाङ्गीकारात्, तस्य चान्यथा असम्भव एवेति वाच्यम्, अचिकित्स्यरोगादितापस्यापि सम्भवात्, न चेतरवासनानाशेऽपि ततः संसारवासनाया अनाश इति वाच्यम्, सामान्यावच्छेदेन पाक्षिकप्राप्तेरेव नियममूलत्वात्, अन्यथा

---

तत्र तत्त्वज्ञानस्य व्यापारतया क्लृप्तो यो मिथ्याज्ञानध्वंसस्तेन दृष्टेनान्यत्रापि मोक्षरूपफलस्योपपत्तावदृष्टस्य व्यापारतया कल्पनाया अयोगादित्यर्थः। **अन्यथा** दृष्टेन कार्योपपत्तावप्यदृष्टस्य कल्पने। **तत्कल्पनापत्तेः** अदृष्टकल्पनापत्तेः, भेषजादीनामपि विहितत्वेनादृष्टजनकत्वसाधनस्य कर्तुं शक्यत्वादिति तत्राप्यदृष्टस्य प्राधान्य प्रसज्येतेत्यर्थ.। **एवं च** भेषजादीना दृष्टद्वारेणैव फलजनकत्वव्यवस्थितौ च, भेषजादीनां विहितत्वमस्ति, अदृष्टजनकत्व च नास्य दृष्टजनकत्वरूपसाध्याभाववति भेषजादौ वृत्तित्वाद् विहितत्व व्यभिचारीति न तेन तत्त्वज्ञानस्यादृष्टजनकत्वं सिध्यतीति नादृष्टस्य प्राधान्यमित्यर्थः। ननु व्रीहीनवहन्तीत्यत्र व्रीहीनवहन्यादेवेति नियमविध्याश्रयणाद् वैतुष्यलक्षणदृष्टव्यापारस्य सम्भवेऽपि नियमान्यथाऽनुपपत्त्याऽवघातजन्यादृष्टं व्यापारतया कल्प्यते, तथा प्रकृतेऽपि आत्मा ज्ञातव्य एवेति नियमविध्याश्रयणात् तदन्यथानुपपत्त्या नियमादृष्टं कल्पनीयमित्यदृष्टस्य प्राधान्य स्यादेवेत्याशङ्क्य प्रतिक्षिपति– **न चेति**। प्रतिक्षेपहेतुमुपदर्शयति– **तत्रेति**– व्रीहीनवहन्तीत्यत्र वैतुष्यकरणार्थक एव यद्यवघातस्तदा वैतुष्यरूपकार्यस्यावघातमन्तरेणापि नखविदारणादिना सम्भवेनावघातस्य वैयर्थ्यं स्यादतोऽदृष्टद्वारा व्रीहिकरणकयाग एवावघातस्य हेतुत्वमिति कल्पनाऽऽवश्यकी, प्रकृते तु तत्त्वज्ञानतो मुक्तिर्मिथ्याज्ञाननिवृत्तिमन्तरेण न सम्भवति, मिथ्याज्ञाननिवृत्तिश्चात्मज्ञानमन्तरा न सम्भव इति मिथ्याज्ञाननिवृत्तेस्तत्त्वज्ञानजन्यत्वमावश्यकमिति न प्रयोजनं नियमादृष्टकल्पनाया इत्येवं विशेषादित्यर्थः। शङ्कते– **नन्विति**। **अत्रापि** तत्त्वज्ञानविधिस्थलेऽपि। **विरोधीति**– यथा ज्ञानान्तरं स्वरोधीच्छादिना नश्यति योग्यविभुविशेषगुणाना स्वाव्यवहितोत्तरवृत्तिविशेषगुणनाश्यत्वमिति नियमात्, तथा मिथ्याज्ञानमपि स्वविरोधिगुणान् नश्यतीति मिथ्याज्ञानध्वंसस्यान्यथैवोपपत्तेरदृष्टमेव तत्त्वज्ञानजन्यमभ्युपेयमिति तस्य प्राधान्यं स्यादेवेत्यर्थः। अत्र समाधानमाशङ्क्य प्रतिक्षिपति– **न चेति**– अस्य **वाच्यमि**त्यनेन सम्बन्धः। **तद्वासनापरं** मिथ्याज्ञानजन्यवासनारूपार्थतात्पर्यकम्, तथा च वासनाया भावनाख्यसंस्काररूपाया अतीन्द्रियत्वेन योग्यविभुविशेषगुणत्वाभावान्न स्वविरोधिगुणत्वाभावान्न स्वविरोधिगुणान्तरोत्पत्तितो नाश इति तत्त्वज्ञाननाश्यत्वमेव तस्या अभ्युपेयमित्याह– **तत्त्वज्ञानादिति**। **तद्ध्वंसस्यैव** मिथ्याज्ञानजन्यवासनाध्वसस्यैव। **तस्य च** मिथ्याज्ञानवासनाध्वंसस्य तु। **अन्यथा** तत्त्वज्ञानमन्तरेण। निषेधहेतुमाह– **अचिकित्स्येति** " **अचिकित्स्यरोगादितापस्यापि सम्भवात्** " इत्यस्य स्थाने " अचिकित्स्यरोगादिनाशवत् तस्यान्यन्यथासम्भवात् " इति पाठो युक्तः, अचिकित्स्यः– चिकित्सया निवर्तयितुमशक्यो यो रोगस्तदादेर्यथा चिकित्साद्यतिरिक्तकारणान्तरादेव नाशस्य सम्भवस्तथा मिथ्याज्ञानजन्यवासनानाशस्यापि तत्त्वज्ञानातिरिक्तकालादिकारणादेव सम्भवादित्यर्थः। ननु कालस्मृत्यादिरूपकारणान्तरादन्यवासनानाशस्य सम्भवेऽपि मिथ्याज्ञानजन्यससारवासनाया न तत्त्वज्ञानातिरिक्तकारणतः सम्भव इति तत्त्वज्ञानादेव मिथ्याज्ञानजन्यवासनानाश इत्याशङ्क्य प्रतिक्षिपति– **न चेति**– अस्य **वाच्यमि**त्यनेनान्वयः। **इतरवासनानाशेऽपि** तत्त्वज्ञानभिन्नकालस्मृत्यादिकारणबलान्मिथ्याज्ञानवासनाभिन्नवासनानाशेऽपि। **ततः** तत्त्वज्ञानभिन्नकारणतः। निषेधे हेतुमाह– **सामान्यावच्छेदेनेति**– " विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते॥ " इति वचनाद् यत्सामान्यावच्छेदेन यस्य पाक्षिकप्राप्तिः– कारणान्तरेण सम्भवालोचनायामप्राप्तिस्तदनालोचने प्राप्तिः, तस्यां सत्यां नियमविधिर्भवतीत्यतः सामान्यावच्छेदेन पाक्षिकप्राप्तेरेव नियममूलत्वात्, यथा ऋतौ भार्यामुपेयादित्यत्र नियमविधिवादिमते ऋतावेव भार्यामेव उपेयादेवेति, तत्र ऋतुकाले तद्भिन्नकाले च रागतो भार्यायां गमनं प्राप्तम्, तत्र यदा ऋतुभिन्नकाले गमनं तदा ऋतुकाले गमनं न प्राप्तम्, यदा च ऋतुकाले गमनं तदानीं प्राप्तमित्येवं पाक्षिकप्राप्तौ नियमः– ऋतावेवेति, एतावता ऋतावेव गमनस्य नियमः, स च भार्यां त्यक्त्वाऽन्यावलायामृतुमत्या गमनेऽपि निर्वहतीत्यतो भार्यामेवेति नियमः, तत्रापि भार्याभिन्ना

अपूर्वीयव्रीहिविशेषे नखनिर्भेदाप्राप्तेः, तत्रापि नियमादृष्टानुपपत्तिरिति चेत् ? न- शक्यपरिवर्जनपाक्षिकप्राप्तेरेव नियममूलत्वात्, यथा "व्रीहीनवहन्ति" इत्यत्र पक्षे प्राप्तस्य नखनिर्भेदादेः शक्येन परिवर्जनेनाभिघातो नियम्यते- 'अवहन्तव्या एव न नखैर्निर्भेत्तव्याः' इति, नैवमत्र, तत्त्वज्ञानेनैव मिथ्याज्ञानं निवर्तयेन्न विरोधिगुणरोगादिनेति शक्यं प्रतिज्ञातुं तस्यापुरुषतन्त्रत्वात् । अत एव प्रोक्षि-(त)व्रीह्यवघातत्वेनै(ने)व श्रवणजन्यतत्त्वज्ञानत्वेन नियमादृष्टहेतुत्वध्रौव्यमिति निरस्तम्, प्रोक्षणादेः प्रधानाङ्गत्वेन प्रधानापूर्वफलकादृष्टजनकत्वात् तत्र तथोक्तिसम्भवेऽप्यत्र प्रधानस्यैव दृष्टफलत्वेन तथा वक्तुमशक्यत्वात् । किञ्च, अत्र विजातीयतत्त्वज्ञानत्वेनैव दृष्टद्वारा मुक्तिहेतुत्वान्न श्रेयसी अदृष्टकल्पना, तत्र वैजात्येनैव हेतुत्वे तदवच्छिन्ने प्रोक्षणहेतुत्वोक्तौ कृष्णले प्रोक्षणबाधापत्तेः, न चावहन्तव्यप्रोक्षणत्वेनाप्यदृष्टहेतुत्वात् तत्रापि नियमादृष्टं कल्पनीयम्, दृष्टार्थस्यैव नियमादृष्टार्थस्य सिद्धान्तितत्वादित्य-

---

स्त्रियं यदा गन्तुमिच्छति तदा भार्यागमनं न प्राप्तम्, यदा भार्यां गन्तुमिच्छति तदा भार्यागमन प्राप्तमित्येवं पाक्षिकप्राप्तौ भार्यामिवेति नियमः, एवमपि ऋतावेव भार्यामेव कदाचिद् गन्तुमिच्छति तदानीं गमनं प्राप्तम्, यदा च गमनं नेच्छति तदानीं न गमनं प्राप्तमित्येवं पाक्षिकप्राप्तौ उपेयादेवेति नियमः, तथा च ऋतौ भार्यायामगमने प्रत्यवायः, अनृतावपि भार्यायां गमने प्रत्यवायः, ऋतावेव भार्याभिन्नावलायां गमने प्रत्यवाय इति लभ्यते, एवमृतुकाले नियमतो भार्यागमने पुण्यमिति । सामान्यावच्छेदेन पाक्षिकप्राप्तेर्नियममूलत्वावेदनाय दृष्टान्तमुपदर्शयति- **यथेति**- व्रीहीनवन्तीत्यत्र यदा तुषविमोकार्थं नखनिर्भेदादिक कर्तुमिच्छति तदानीमवघातो न प्राप्तः किन्तु नखनिर्भेदादिकमेव प्राप्तमित्येवं पक्षे प्राप्तस्य नखनिर्भेदादे. परिवर्जनं कर्तुं शक्यत इति शक्येन परिवर्जनेनाभिघातो नियम्यते इत्यर्थः । तन्नियमस्वरूपमुल्लिखति- **अवहन्तव्या एवेति**- तथा च तुषो नखनिर्भेदादितोऽपि भवतीति तत्रान्यथासिद्धस्य नियमितावघातस्य दृष्टमेव बलमित्यर्थः । "**नैवमत्र, तत्त्व**" इत्यस्य स्थाने "नैवमत्र तत्त्व" इत्येवमुल्लेखो युक्तः, अत्र तत्त्वज्ञानेनैव मिथ्याज्ञान निवर्तयेन्न विरोधिगुणादिनेत्येवं प्रतिज्ञातुं न शक्यमित्यन्वयः । **प्रतिज्ञातुमित्यस्य** "प्रतिज्ञातुं,' इत्युल्लेखो विधेयः । तत्र हेतुमाह- **तस्येति**- मिथ्याज्ञाननिवर्तनस्य पुरुषप्रयत्नानधीनत्वात्, तत्त्वज्ञानेनापि तन्निवर्तयितुं शक्यं कारणान्तरेणापीत्यर्थः । **अत एवेत्यस्य निरस्तमित्यनेना**न्वयः । **प्रोक्षितेति**- व्रीहीन् प्रोक्षतीत्यपि नियमविधिरेव, प्रोक्षिता एव व्रीहयोऽवघाताय कल्पन्त इत्यप्रोक्षितव्रीहीणामवघातस्य सम्भवेऽपि न तैरवघातितैर्यागोपकार इति तुषविमोकलक्षण कार्यमकिञ्चित्करं तत्र, किन्तु प्रोक्षितव्रीह्यवघातेन नियमादृष्टमुत्पद्यते तद्द्वारा प्रोक्षण यागाङ्गमतो यथा प्रोक्षितव्रीह्यवघातत्वेन नियमादृष्टं प्रति कारणत्व तथा श्रवणजन्यतत्त्वज्ञानत्वेन नियमादृष्ट प्रति कारणत्वमित्यप्यत एव निरस्तमित्यर्थः । अत एवेत्यनेनोक्तमेव निरासहेतुं स्पष्टयति- **प्रोक्षणादेरिति** । **प्रधानाङ्गत्वेन** प्रधानीभूतयागाङ्गत्वेन, प्रधानेनाऽपूर्वे जनयितव्ये सहकारितया प्रोक्षणादिकमपेक्षितम्, प्रोक्षणं च क्रियारूपत्वाच्चिरविनष्टत्वेन न साक्षात्प्रधानापूर्वजनकमतोऽदृष्टद्वारा जनकत्वमिति प्रधानापूर्वफलकादृष्टजनकत्वात् प्रोक्षणस्थले प्रोक्षितव्रीह्यवघातत्वेन नियमादृष्टहेतुत्वोक्तिसम्भवेऽपि तत्त्वज्ञानस्थले प्रधानस्य तत्त्वज्ञानस्यैवाज्ञाननिवृत्तिलक्षणदृष्टफलकत्वेन श्रवणजन्यतत्त्वज्ञानत्वेन नियमादृष्टहेतुत्वस्य वक्तुमशक्यत्वादित्यर्थः, तत्त्वज्ञानस्थले नियमादृष्टाभावे युक्त्यन्तरमुपदर्शयति- **किञ्चेति** । **अत्र** तत्त्वज्ञानस्थले । **दृष्टद्वारा** अज्ञाननिवृत्तिलक्षणदृष्टद्वारा । **तत्र** अवघातस्थले । **वैजात्येनैवेति** अवघाते वैजात्यं कल्पयित्वा कल्पितेन वैजात्येनैवावघातस्य प्रधानसहकारित्वेन प्रधानजन्यापूर्वं प्रति हेतुत्वे विजातीयावघातत्वावच्छिन्ने प्रोक्षणस्य हेतुत्वे कृष्णले अवघातस्यैवाभावेन विजातीयावघातस्याप्यभावाद् विजातीयावघातकारणत्वेन विहिततयाऽभिमतस्य प्रोक्षणस्य बाधापत्तेरित्यर्थः । ननु व्रीहीन् प्रोक्षतीति विनाऽवहन्तव्यप्रोक्षणत्वेनापि प्रधानाङ्गत्वं विधीयते, कृष्णलश्चावहन्तव्यो न भवतीति तत्प्रोक्षणस्य प्रोक्षणत्वेन हेतुत्वमिति न कृष्णले प्रोक्षणबाध इत्याशङ्क्य प्रतिक्षिपति- **न चेति** । **अदृष्टहेतुत्वात्** प्रधानापूर्वहेतुत्वात् । **तत्रापि** अवघातस्थलेऽपि । "**नियमादृष्टं कल्पनीयं**" इत्यस्य स्थाने "नियमादृष्टं न कल्पनीयं" इति पाठो युक्तः । निषेधे हेतुमाह- **दृष्टेति** । "**दृष्टार्थस्यैव**" इत्यस्य स्थाने "दृष्टार्थस्येव" इति पाठो युक्तः, अवघातादेस्तुषविमोकलक्षणदृष्टार्थस्येव नियमादृष्टरूपप्रयोजनस्य

न्यत्र विस्तरः । उदयनानुसारिणस्तु– " अनुत्पन्नतत्त्वज्ञानस्य ज्ञानार्थिनस्तत्प्रतिबन्धकदुरितनिवृत्तिद्वारा प्रायश्चित्तवदाराडुपकारकं कर्म स नित्योपकारकं च तत्त्वज्ञाने, उत्पन्नतत्त्वज्ञानस्य त्वन्तरलब्धदृष्टेः कारीरिसमाप्तिवदारब्धाग्निसंपालनं लोकसङ्ग्रहार्थम्, यद्यपि लोकसङ्ग्रहे न प्रयोजनम्, सुखदुःखभाव-तत्साधनेतरत्वात्, तथापि लोकानां नित्यत्वेन यज्ज्ञानं तत्परित्यागार्थं ( तत्परिपालनार्थं ) तत्तद्दुःख-

जैमिनीयैः सिद्धान्तितत्वादित्यर्थः । ग्रन्थान्तरेऽप्ययं विशेषेण विचारितोऽस्ति, विशेषावगमेच्छुभिरवलोकनीयं तदेत्युपदेशाभिप्रायेणाह– इत्यन्यत्र विस्तर इति । एतावता प्रबन्धेन मुमुक्षुकर्मव्यापारत्वं तत्त्वज्ञानवृत्ति न भवतीत्युपगन्तॄणां भास्करीयाणामाशयो दर्शितः, इदानीं मुमुक्षुकर्मव्यापारत्वं तत्त्वज्ञानवृत्तीत्युपगन्तॄणामुदयनाचार्याणां मतमुपदर्शयति– उदयनानुसारिणस्त्विति– अस्य आहुरित्यनेनान्वयः । किमाहुरित्यपेक्षायामाह– अनुत्पन्नतत्त्वज्ञानस्येति– न उत्पन्नमनुत्पन्नमनुत्पन्नं तत्त्वज्ञानं यस्य सोऽनुत्पन्नतत्त्वज्ञानस्तस्येत्यर्थः । कथम्भूतस्य तस्य ज्ञानार्थिनः ज्ञानेच्छोः, अस्याऽऽराडुपकारकं कर्मेत्यनेनान्वयः । तत्प्रतिबन्धकेति– ज्ञानप्रतिबन्धकेत्यर्थः । प्रायश्चित्तवदिति– प्रायश्चित्तं यथा पापनिवृत्तिद्वारा पुरुषस्याऽऽराडुपकारकं– साक्षादुपकारकं तथा नित्यनैमित्तिकादिकर्मापि ज्ञानप्रतिबन्धकपापनिवृत्तिद्वारा अनुत्पन्नतत्त्वज्ञानस्य पुंस आराडुपकारकं– साक्षादुपकारकमित्यर्थः । " स नित्यो " इत्यस्य स्थाने " सन्निपत्यो " इति पाठो युक्तः, सन्निपत्योपकारकं परम्परयोपकारकम्, ज्ञानार्थिनः पुरुषस्य तत्प्रतिपन्थकदुरितनिवृत्तिरेवोपकारः, स साक्षादेव भवतीत्येतावता तस्य साक्षादुपकारकं कर्माराडुपकारकमित्यभिधीयते, तत्त्वज्ञानस्य तु पूर्वमसत्त्वादात्मलाभ एवोत्पत्तिस्वरूप उपकारः, स च न साक्षात् कर्मणो भवति, किन्तु प्रतिबन्धकनिवृत्तिजननद्वारैवेति तत्त्वज्ञाने परम्परयोपकारकं कर्म सन्निपत्योपकारकमिति कथ्यत इति बोध्यम् । यस्य तत्त्वज्ञानमुत्पन्नं तस्य कर्म नाऽऽराडुपकारकं नवा सन्निपत्योपकारकमित्यनुपकारकस्य कर्मणस्तदानीं करणं किमर्थमित्यपेक्षायामाह– उत्पन्नतत्त्वज्ञानस्येति– उत्पन्नं तत्त्वज्ञानं यस्य स उत्पन्नतत्त्वज्ञानस्तस्येत्यर्थः । " लब्धदृष्टेः " इत्यस्य स्थाने " लब्धवृष्टेः " इति पाठो युक्तः, अन्तरं– कारीरीयागारम्भ-तत्समाप्त्योर्मध्यकाले, लब्धा– प्राप्ता, वृष्टिर्येन सोऽन्तरलब्धवृष्टिस्तस्य कारीरीयागकर्तुः पुंसः कारीरीसमाप्तिर्निष्फलाऽप्यनुष्ठिता भवति, वृष्ट्यर्थं हि कारीरीयागः क्रियते, वृष्टिश्च कारीरीयागसमाप्तेः प्रागेव जातेति निष्फलत्वं तस्याः, तथा यावज्जीवमग्निहोत्रं जुहोतीति विधिप्राप्तस्वर्गादिफलकयावज्जीवनकालीनाग्निहोत्रोपकारस्याग्नेः संपालनं तत्त्वज्ञानिनो निष्फलमपि तत्त्वज्ञानिनाऽप्यग्निसंपालनं क्रियतेऽतोऽस्माभिरप्याग्निसंपालनं कर्तव्यमेवेत्येवमुपात्तबुद्धयो लोका अग्निसंपालने प्रवर्तन्त इत्येवं लोकसङ्ग्रहार्थमित्यर्थः, अत्र–

" न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन । नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ यदि, ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ । सर्वशः ॥ उत्सीदेयुरिमे लोकाः न कुर्यां कर्म चेदहम् " [ गीता, अ० ३ श्लो० २२ ] इत्यादि गीतावचनमपि प्रमाणं बोध्यम् । ननु लोकसङ्ग्रहस्य सुखदुःखाभाव-तत्साधनभिन्नत्वेन पुरुषार्थत्वाभावात् तदर्थं तत्त्वज्ञानिनोऽग्निपालनादौ प्रवृत्तिर्न युक्तेत्यत आह– यद्यपीति । " लोकसङ्ग्रहे " इत्यस्य स्थाने " लोकसङ्ग्रहो " इति पाठो युक्तः । कथं न लोकसङ्ग्रहः प्रयोजनमित्यपेक्षयामाह– सुख-दुःखाभावतत्साधनेतरत्वादिति– सुख दुःखाभाव-सुखसाधन-दुःखाभाव-साधनान्यतमभिन्नत्वादित्यर्थः, तत्र सुख-दुःखाभावयोरन्येच्छानधीनेच्छाविषयत्वलक्षणं परमप्रयोजनत्वम्, तत्साधनयोश्च सुख-दुःखाभावान्यतरेच्छाधीनेच्छाविषयत्वलक्षणं गौणप्रयोजनत्वम्, लोकसङ्ग्रहश्च तदन्यतराभावान्न प्रयोजनमित्याशयः । तथापि लोकसङ्ग्रहस्य प्रयोजनत्वाभावेऽपि, लोकानां विहिताचरण-निषिद्धाचरणप्रवृत्तानां जनानाम्, नित्यत्वेन यज्ज्ञानं अग्निपालनं नित्यं-सर्वदा कर्तव्यमित्याकारकम्, तत्परिपालनार्थं तद्रक्षणार्थम्, यदि तत्त्वज्ञानी नाग्निसंपालनं विदध्यात् तदाग्निपालनं न नित्यं तत्त्वज्ञानिनाऽनाचरितत्वादित्यनुमानेनाग्निपालनस्य नित्यत्वाभावज्ञानेन प्रतिरुद्धत्वात् तन्नित्यत्वज्ञानं नोदियादिति अगत्यामरणं यद् द्विजैरग्निपालनं क्रियते तदुत्सादो भवेत्, तत्त्वज्ञानिनाऽग्निसंपालने आचर्यमाणे तु प्रतिबन्धकनित्यत्वाभावज्ञानाभावान्नित्यत्वज्ञानमविच्छेदेन समुदियादेवेति भवति तत्सुरक्षितम्, ततश्च लोकाना तदाचरणतोऽग्निहोत्रादिकर्मफलमपि शास्त्रोक्तं भवत्येवेत्येव परम्परया परगतसुखदुःखाभावसाधनत्वात् तत्त्वज्ञान्याचर्यमाणस्याग्निसंपालनस्य सफलत्वमित्यर्थः । अथवा तत्त्वज्ञानिनः सञ्चितकर्मणां

योगेन कर्मनाशार्थं वा तत्, इदमेव च द्वारि-द्वारयोः कर्म-तत्त्वज्ञानयोः कारणत्वं तुल्यकक्षतया समुच्चयो नेष्ट इत्यनेन विवक्ष्यते, यद्यपि च तीर्थविशेषस्नानादीनां तत्त्वज्ञानव्यापारकत्वं न शाब्दम्, तथापि 'तीर्थविशेषस्नानादीनि तत्त्वज्ञानद्वारकाणि मोक्षजनककर्मत्वात् यमादिवत्' इत्यनुमानात् तथात्वसिद्धिः, न च योगत्वमुपाधिः "कथयति भगवानिहान्तकाले भवभयकातरतारकं प्रबोधम्" [ ] इत्यादिपुराणात् "रुद्रस्तारकं ब्रह्म व्याचष्टे" [ ] इति श्रुतेश्च काशीप्रायागादेस्तत्त्वज्ञानव्यापारकत्वसिद्धौ तत्र साध्याव्यापकत्वाद् इत्याहुः । स्वतन्त्रास्तु- "तत्त्वज्ञानं प्रत्यङ्गत्वपक्षे कर्मणामपूर्वद्वारा जनकत्वं दुरितध्वंसकल्पनातो लघुत्वात्, वस्तुतः कर्मणां निःश्रेयसहेतुत्वे तज्जन्यनिःश्रेयसजनकतया तत्त्वज्ञानस्य कर्मव्यापारत्वं वाच्यम्, तदेव तु न युक्तं "कर्मणा न प्रजया धनेन" [ ] "नान्यः पन्था विद्यतेऽयनाय" [श्वेता० ३. ८६. १५.] "नास्त्यकृतः कृतेन"

---

नाशेऽपि प्रारब्धकर्मणा भोगादेव क्षयो 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।" [ ] इति वचनात् तत्र कर्मपदस्य प्रारब्धकर्मपरत्वात्, एवं च तत्त्वज्ञानिनो यद् दुःखजनक प्रारब्धं कर्म तद् दुःखमदत्वा न नश्यति, यावच्च तन्नाशस्तावन्न तन्मुक्तिरित्यग्निसंपालनप्रयासोत्पन्नदुःखोपभोगेन कर्मनाशार्थमग्निसपालन कर्तव्यकक्षामास्कन्दतीति कल्पान्तरमाह- **तत्तद्दुःखयोगेनेति** । **तत्** आरब्धाग्निसपालनम् । तथा चोक्तदिशा तत्त्वज्ञानद्वारा कर्म मुक्तिं जनयतीति मुमुक्षुकर्मव्यापारत्वं तत्त्वज्ञानवृत्ति भवत्येवेत्याशयेनाह- **इदमेव चेति**- अनन्तरोपदर्शितस्वरूपमेवेत्यर्थः । **तुल्यकक्षतया** समप्रधानतया मुक्तिं प्रति कारणत्वेन । **समुच्चयः** तत्त्वज्ञान-कर्मणोः समुच्चयः । **नेष्टः** नाभिमतः । **न शाब्दं** न शब्दप्रमाणगम्यम् । **तथाऽपि** तीर्थविशेषस्नानादीनां तत्त्वज्ञानव्यापारकत्वस्य शब्दप्रमाणागम्यत्वेऽपि । **तथात्वसिद्धिः** तीर्थविशेषस्नानादीनां तत्त्वज्ञानव्यापारकत्वसिद्धिः । ननु यत्र यत्र तत्त्वज्ञानव्यापारकत्वं तत्र तत्र योगत्वमित्येव तत्त्वज्ञानव्यापारकत्वलक्षणसाध्यव्यापकत्वाद् यत्र यत्र मोक्षजनककर्मत्व तत्र तत्र योगत्वमिति नास्ति तीर्थविशेषस्नानादीना मोक्षजनककर्मत्वेऽपि योगत्वाभावादित्येवं मोक्षजनककर्मत्वलक्षणसाधनाव्यापकत्वाद् योगत्वमुपाधिरिति सोपाधिकत्वाद् व्याप्यत्वासिद्धिदोषग्रस्तो मोक्षजनककर्मत्वलक्षणहेतुर्न तीर्थविशेषस्नानादीनां तत्र ज्ञानद्वारकत्वलक्षणसाध्यसाधनाय प्रभुरित्याशङ्क्य प्रतिक्षिपति- **न चेति** । काशीमरणादेस्तत्त्वज्ञानद्वारा मोक्षजनकत्वस्य शास्त्रसिद्धत्वेन तत्र तत्त्वज्ञानव्यापारकत्वलक्षणं साध्यमस्ति, योगत्वं च तत्र नास्तीत्येवं साध्यव्यापकत्वाभावेन योगत्वस्योपाधित्वासम्भवादिति निषेधहेतुमुपदर्शयति- **कथयतीति** । **भगवान्** सदाशिवः । **इह** काश्याम् । **अन्तकाले** मरणाव्यवहितपूर्वकाले । **भवभयकातरतारकं** भवः- संसारः, तस्माद् यज्जरकादिदुःखप्राप्तिभयं तेन कातरा ये जनास्तेषां तारकं-संसारसमुद्रोत्तारं पुनः संसारागमननिवन्धनम् । **प्रबोधं** तत्त्वज्ञानक तारकमन्त्रं कर्णे **कथयति** उपदिशतीत्यर्थः । **रुद्र** इति- सदाशिव., **तारकं ब्रह्म** ब्रह्मज्ञानजनक मन्त्रं कथयतीत्यर्थ. । **"काशीप्रायागादे"** इत्यस्य स्थाने "काशीमरणादे" इति "काशीप्रमापणादे" इति वा पाठो युक्त, प्रमापणं मृत्युः । **तत्र** काशीमरणादौ । **साध्याव्यापकत्वात्** साध्य तत्त्वज्ञानद्वारकत्वं तत्रास्ति योगत्वं च नास्तीत्येवं साध्याव्यापकत्वात् । **इति** एवम् । **आहु.** उदयनानुसारिणो वदन्ति । स्वतन्त्राणा मतमुपदर्शयति- **स्वतन्त्रास्त्विति**- अस्य 'आहुः' इत्यनेनान्वय. । **तत्त्वज्ञानं प्रत्यङ्गत्वपक्षे** कर्म तत्त्वज्ञानस्याङ्गं- कारणमिति पक्षे । **कर्मणामपूर्वद्वारा जनकत्वं** नित्य नैमित्तिककर्मणामदृष्टद्वारा तत्त्वज्ञानजनकत्वम् । **लघुत्वात्** लाघवात्, तत्त्वज्ञान प्रति तत्त्वज्ञानप्रतिवन्धकदुरितनिवृत्तिद्वारा कर्मणां जनकत्वे तत्त्वज्ञानप्रतिबन्धक दुरितं कल्पनीयं तन्नाशश्च कल्पनीय इत्येवं द्वितयकल्पनापेक्षयैकापूर्वकल्पने लाघवादित्यर्थः । यच्चोदयनाचार्यानुसारिभिस्तत्त्वज्ञानद्वारा कर्मणा निःश्रेयस प्रति हेतुत्वमित्युच्यते तस्यायुक्तत्वमावेदयति- **वस्तुत** इति । **तज्जन्येति**- कर्मजन्येत्यर्थः । कर्मजन्यत्वं यदि नि.श्रेयसे भवेत् तदा कर्मजन्यनि.श्रेयसजनकत्वात् तत्त्वज्ञानव्यापारकत्वं कर्मणा युज्येतापि, न चैवमित्याह- **तदेव त्विति**- नि श्रेयसे कर्मजन्यत्वमेव त्वित्यर्थः । युक्तत्वाभावे हेतुमुपदर्शयति- **न कर्मणेति**- "न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः" इत्येक श्रुतिवचनं कर्मणो मोक्षजनकत्वनिषेधोपदर्शकम्, "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति द्वितीय श्रुतिवचनं

[मुण्ड० १. २. १२.] " कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः " ॥ [१ सं० सो० २८] इत्यादि श्रुतिस्मृतिशतेन निषेधात् कर्मजन्यत्वाभावाच्च " तपसा कल्मषं हन्ति अविद्यया मृत्युं तीर्त्वा ततस्तु तं पश्यति निष्कलं ध्यायमानः कषायपङ्क्तिः कर्मभ्यः " इत्यादिभिस्तत्त्वज्ञानोत्पत्तिप्रतिबन्धदुरितनिवृत्त्यैवान्यथासिद्धेः प्रदर्शनाद् न च " विविदिषन्ति यज्ञेन " [ ] " सर्वं कर्माखिलं पार्थ ! ज्ञाने परिसमाप्यते " [भ० गी० ४. २३] इत्यादिभिः कर्मजन्यताऽपि प्रतीयत इति वाच्यम्, सा हि न अपूर्वद्वारा प्रतिबन्धकदुरितानुच्छेदे अपूर्वसहस्रस्यापि अकिञ्चित्करत्वात्, तदुच्छेदेन तज्जनने तु प्रमान्तराधृतकारणभावेन प्रतिबन्धकाभावेनैवान्यथासिद्धेः । न चैवं यागादेरप्यपूर्वेणान्यथासिद्धिः स्यात्, तस्य यागकारणताग्रहोत्तरकल्प्यत्वेनोपजीव्यापरिपन्थित्वात्, इह तु प्रतिबन्धकाभावस्य कार्यमात्रे कार[ण]तायाः प्रागेवावधारणादिति विशेषात् । अत एव मङ्गल-कारीर्य्योः प्रतिबन्धकदुरितनिवृत्तिमात्रफलकत्वम्, वृष्टि-समाप्ती तु स्वकारणादेवेति सिद्धान्तः ।

---

निरुक्तनिषेधावबोधकम्, " नास्त्यकृतः कृतेन " इत्यादितृतीयश्रुतिवचनं तदावेदकम्, " **कर्मणा बध्यते जन्तुः** " इत्यादिवचनं तु स्मृतिः । **निषेधात्** मुक्तिं प्रति कर्मणां जनकत्वस्य निराकरणात् । तज्जन्यत्वे सति तज्जन्यजनकत्वं तद्व्यापारत्वम्, तत्त्वज्ञानस्य तु कर्मजन्यत्वमेव नास्तीत्येतावताऽपि तत्त्वज्ञानस्य कर्मव्यापारत्वं न सम्भवतीत्याह– **कर्मजन्यत्वाभावाच्चेति**– तत्त्वज्ञानस्य कर्मजन्यत्वाभावाच्चेत्यर्थः । तत्त्वज्ञानस्य कर्मजन्यत्वमेव कुतो नेत्याकाङ्क्षायामाह– **तपसेति** । **इत्यादिभिरि**त्यस्यानन्तरं श्रुतिभिरिति दृश्यम्, अस्य **प्रदर्शनादि**त्यनेनान्वयः । ननु तत्त्वज्ञानोत्पत्तिप्रतिबन्धकदुरितनिवृत्तिस्तत्त्वज्ञाने जननीये कर्मणां व्यापार इति व्यापारेण व्यापारिणां कर्मणां नान्यथासिद्धिरिति चेत् ? न– यत्र व्यापारस्य व्यापारिनिष्ठप्रमाणान्तरसिद्धकारणत्वान्यथानुपपत्त्यैव कारणतया कल्पनं तत्र व्यापारेण व्यापारिणोऽन्यथासिद्ध्यभावेऽपि यत्र व्यापारस्य प्रमाणान्तरत एव कारणत्वं क्लृप्तं तत्र व्यापारेण व्यापारिणोऽन्यासिद्धेरङ्गीकारात्, प्रकृतेऽपि तत्त्वज्ञानोत्पत्तिप्रतिबन्धकदुरितनिवृत्तेः प्रतिबन्धकाभावविधया तत्त्वज्ञानं प्रति कारणत्वस्य क्लृप्तत्वेन तया कर्मणामन्यथासिद्धेरवश्यम्भावादिति । **न चे**त्यस्य **वाच्यमि**त्यनेनान्वयः । निषेधे हेतुमाह– **सा हीति**– **हि**– यतः, सा– तत्त्वज्ञाने कर्मता । **न अपूर्वद्वारा** अदृष्टद्वारा न सम्भवति । तत्र हेतुः– **प्रतिबन्धकेति**– तत्त्वज्ञानोत्पत्तिप्रतिबन्धकदुरितानुच्छेदे प्रतिबन्धकाभावरूपकारणाभावात् तत्त्वज्ञानोत्पत्तिर्न स्यादेवेत्यदृष्टसहस्रस्याप्यकिञ्चित्करत्वात् तत्त्वज्ञानानुत्पादकत्वादित्यर्थः । **तदुच्छेदेन** तत्त्वज्ञानोत्पत्तिप्रतिबन्धकदुरितोच्छेदेन । **तज्जनने तु** तत्त्वज्ञानजनते तु । " **प्रमान्तरा** " इत्यस्य स्थाने " प्रमाणान्तरा " इति पाठो युक्तः, प्रमाणान्तरेण– कर्मकारणत्वान्यथानुपपत्तिव्यतिरिक्तप्रमाणेन, अवधृतः– निश्चितः, प्रमाणान्तरावधृत., कारणभावः– कारणत्वं यस्य स प्रमाणान्तरावधृतकारणभावस्तेन प्रतिबन्धकाभावेनैव तत्त्वज्ञानं प्रति कर्मणोऽन्यथासिद्धेरित्यर्थः । यदि व्यापारेण व्यापारिणोऽन्यथासिद्धिस्तदाऽपूर्वेण यागस्यान्यथासिद्धिः स्यादित्याशङ्क्य प्रतिक्षिपति– **न चेति** । **एवं** व्यापारेण व्यापारिणोऽन्यथासिद्धेरुपगमे । निषेधहेतुमाह– **तस्येति**– अपूर्वस्येत्यर्थः । **यागेति**– दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति श्रुत्या यो दर्शपूर्णमासादियागस्य स्वर्गं प्रति कारणत्वग्रहस्तदुत्तरकाले अपूर्वमन्तरेण यागस्य चिरध्वस्तस्य स्वर्गं प्रति कारणत्वमनुपपन्नमित्यनुपपत्तिप्रतिसन्धानतः कल्प्यत्वेनोपजीव्य यद् यागस्य स्वर्गं प्रति कारणत्वं तस्याविरोधित्वादित्यर्थः । **इह तु** तत्त्वज्ञानस्थले तु । **प्रागेव** कर्मकारणत्वग्रहत. पूर्वमेव । **अवधारणात्** निश्चयात् । **इति विशेषात्** एवम्भूतविशेषस्य सद्भावादपूर्वेण यागादेर्नान्यथासिद्धिः दुरितनिवृत्त्या च कर्मणोऽन्यथासिद्धिः स्यादेवेत्यर्थः । **अत एवे**त्यस्येति **सिद्धान्त** इत्यनेनान्वयः, अत एव– सिद्धकारणभावेन व्यापारेण व्यापारिणोऽन्यथासिद्धत्वादेव । **मङ्गलेति**– मङ्गलस्य समाप्तिप्रतिबन्धकदुरितनिवृत्तिमात्रफलकत्वं कारीरीयागस्य वृष्टिप्रतिबन्धकदुरितनिवृत्तिमात्रफलकत्वम्, मात्रपदेन समाप्तिफलकत्व-वृष्टिफलकत्वयोर्व्यवच्छेदः । यदि मङ्गलात् समाप्तिर्न भवति कारीरीयागाद् वृष्टिश्च न भवति तर्हि समाप्तिवृष्टी कुतो भवत इत्यपेक्षायामाह– **वृष्टि-समाप्ती त्विति** । तत्त्वज्ञानमेव मोक्षसाधनं कर्माणि तु तत्रान्यथा-

किञ्च, कर्मकारणताग्रहानुपजीवनेन लौकिकान्वय-व्यतिरेकावधृतमिथ्याज्ञाननिवर्त[न]भावसम्भावितस्य मोक्षसाधनत्वस्य "ज्ञानादेव तु कैवल्यम्" [ ] "तरति शोकमात्मवित्" [छां० ७. १. ३.] "ब्रह्मविदाप्नोति परं" [तैत्ति० २. १. १ + भस्मजा २. ७.] "ब्रह्मविद् ब्रह्मैव भवति" [ ] इत्यादि श्रुति-स्मृतिशतेन तत्त्वज्ञानस्येष्टतया ग्रहणात् तदेव मोक्षसाधनम्, कर्माणि तु तत्रैवान्यथासिद्धानीत्युक्तम्, यथा च न तत्रापि व्यापारस्तथोक्तमेव, अत एवार्थावबोधपर्यन्तताऽध्ययनविधेः, न तु तेन क्रत्वनुष्ठानेन स्वर्गादिफलकत्वमिति सम्प्रदायः। न च तत्त्वज्ञानस्य कर्मणां निःश्रेसप्रागभावव्याप्यप्रागभावप्रतियोगित्वरूपतदनुकूलताबोधने एव तात्पर्यात्, श्रुत्यन्तरसिद्धेऽन्यथासिद्धत्वे तदनन्यथासिद्धताया बोधयितुमशक्यत्वात्, तावतैव श्रुतेः 'कर्मप्रवृत्तिपरतानिर्वाहाद्' इत्याहुः। अत्र वयं वदामः– मोक्षस्तावत् पुरुषार्थत्वाद् दुःखसाधनध्वंस एव, न तु दुःखध्वंसः, उत्पन्ना-ऽनुत्पन्नविवेकेन तद्ध्वंसस्यासाध्यत्वात्, तत्र च ज्ञान-कर्मणोर्वैजात्येन मुमुक्षुविहितत्वादिना वा हेतुत्वं तुल्यमेवे·

---

सिद्धानीत्युपपादकं प्रकारान्तरं दर्शयति– किञ्चेति । कर्मेति– मोक्षं प्रति कर्मणां कारणत्वं नोपजीवति तत्त्वज्ञानस्य मोक्षं प्रति कारणत्वमिति कर्मकारणतानुपजीवनेन, अस्य मोक्षसाधनत्वस्येत्यनेनान्वय. । लौकिकेति– लौकिकौ– लौकिकप्रत्यक्षादिप्रमाणसिद्धौ, यावन्वय-व्यतिरेकौ ताभ्यामवधृतं– निश्चितं यत् तत्त्वज्ञानेन मिथ्याज्ञानस्य निवर्तनम्, यथा शुक्तित्वरूपशुक्तितत्त्वज्ञानेन शुक्तौ रजतत्वज्ञानलक्षणमिथ्याज्ञानस्य निवर्तनम्, तद्भावसम्भावितस्य मोक्षसाधनत्वस्य, तत्त्वज्ञानेन मिथ्याज्ञाननिवृत्तिरन्यत्र दृष्टेति प्रकृतेऽप्यात्मतत्त्वज्ञानेन मिथ्याज्ञाननिवृत्तिस्ततश्च मोक्षः सम्भवतीत्येवं सम्भावितस्य मिथ्याज्ञाननिवृत्तिद्वारा तत्त्वज्ञाने मोक्षसाधनत्वस्येत्यर्थः। इत्थं सम्भावनात्मकं तत्त्वज्ञाने इष्टसाधनत्वस्य ग्रहणमुपदर्श्य स्पष्टमपि तद्ग्रहणं श्रुति-स्मृतिप्रभवमुपदर्शयति– ज्ञानादेवेति । "तत्त्वज्ञानस्येष्टतया" इत्यस्य स्थाने "तत्त्वज्ञाने स्पष्टतया" इति पाठो युक्तः, मोक्षसाधनत्वस्य तत्त्वज्ञाने स्पष्टतया ग्रहणादित्येवमन्वयो बोध्यः, अर्थस्तु स्पष्टः । तदेव मोक्षसाधनं तत्त्वज्ञानमेव मोक्षसाधनम्, एवकारेण कर्मणा मोक्षसाधनत्वस्य व्यवच्छेदः । तत्रैव तत्त्वज्ञान एव । तत्रापि तत्त्वज्ञानेऽपि । यथा च येन प्रकारेण । न व्यापारः कर्मणो न व्यापार. । तथोक्तमेव तथापूर्वमभिहितमेव । उक्तार्थे संप्रदायसंवादमुपदर्शयति– अत एवेति –अन्यथासिद्धत्वादेवेत्यर्थः। अर्थावबोधपर्यन्तता अर्थावबोधमात्रफलकता । अध्ययनविधेः स्वाध्यायोऽध्येतव्य इति विधेः । न त्विति– अध्ययनविधितोऽर्थान्वयबोधस्तेन क्रत्वनुष्ठानं तेन चादृष्टद्वारा स्वर्गादिफलमित्येवं स्वर्गादिफलकत्वं नाध्ययनविधेरन्यथासिद्धत्वात् । इति एव स्वरूपः । सम्प्रदायः सङ्गच्छते इत्यर्थः । "न च तत्त्वज्ञानस्य" इत्यस्य स्थाने "न च श्रुतिस्तत्त्वज्ञानस्येव कर्मणामपि मोक्षजनकत्वं बोधयतीति वाच्यम्, श्रुते." इति पाठो भवितुमर्हति, यथा श्रुतिस्तत्त्वज्ञानस्य मोक्षजनकत्वप्रतिपादिका समस्ति तथा कर्मणामपि मोक्षजनकत्वप्रतिपादिका श्रुतिः समस्ति, एवं च श्रुतिस्तत्त्वज्ञानस्य यथा मोक्षजनकत्वं बोधयति तथा कर्मणामपि मोक्षजनकत्वं बोधयतीति श्रुतिसिद्धं कर्मणा मोक्षजनकत्वमिति न च वाच्यम्, कर्मणां मोक्षजनकत्वप्रतिपादकतयाऽभिमतायाः श्रुतेर्मोक्षप्रागभावव्याप्यप्रागभावप्रतियोगित्वरूपमोक्षानुकूलत्वबोधन एव तात्पर्यात्, एवकारेण अनन्यथासिद्धत्वे सति निःश्रेयसप्रागभावव्याप्यप्रागभावप्रतियोगित्वलक्षणनिःश्रेयसजनकत्वबोधने तात्पर्यस्य व्यवच्छेदः, अनन्यथासिद्धत्वोक्तस्वरूपकारणत्वावबोधने कुतो न तात्पर्यमित्यपेक्षायामाह– श्रुत्यन्तरसिद्ध इति । तावतैव कर्मणामुक्तस्वरूपानुकूलत्वबोधनेनैव । ज्ञान-कर्मणोर्द्वयोरेव समकक्षतया मोक्षजनकत्वस्वीकर्तॄणां जैनानां मतमुपदर्शयति– अत्रेति– निरुक्तविचार इत्यर्थः । वयं स्याद्वादिनः । वदामः कथयामः । कथं दु.खध्वंसो न मोक्षस्तस्यापि पुरुषार्थत्वादित्याकाङ्क्षायामाह– उत्पन्नेति– उत्पन्नदुःखध्वंसो मोक्षोऽनुत्पन्नदुःखध्वंसो वा, तत्र दु.खस्य साक्षात्कारनियमादुत्पन्नदुःखस्यस्वोत्तरोत्पन्नस्वसाक्षात्कारेणैव निवृत्तेस्तदात्मकस्य मोक्षस्य पुरुषप्रयत्नासाध्यत्वान्न पुरुषार्थत्वम्, प्रतियोगितासम्बन्धेन ध्वंसं प्रति तदात्मसम्बन्धेन प्रतियोगिनोऽपि कारणत्वमित्यनुत्पन्नदुःखरूपप्रतियोगिनः पूर्वमभावेन तद्रूपकारणाभावादनुत्पन्न-

त्येकतरपक्षपातो न श्रेयान्, ज्ञाने केवलज्ञानस्वरूपस्य कर्मणि च यथाख्यातचारित्रस्वरूपस्य वैजात्यस्य कल्पनायाः क्षायिकस्थले क्षायोपशमिकस्थले च तदनुकूलतामात्रस्य द्वयोस्तुल्ययोगक्षेमत्वादिति, एतेन कारणोच्छेदक्रमेण कार्योच्छेदान्मुक्तिरिति ज्ञानं कर्मसहिकारित्वं मिथ्याज्ञानोन्मूलने, कर्मविनाकृतस्यैव तस्य दिग्मोहादौ हेतुत्वावधारणादिति निरस्तम्, मिथ्याज्ञाननाशेऽपि विरोधिगुणमात्रस्य हेतुत्वान्मिथ्याज्ञानप्रागभावाऽसहवृत्तिमिथ्याज्ञानध्वंसे च हेतुताया लोकप्रमाणाविषयत्वेन ज्ञान-कर्मणोर्द्वयोरेव कल्पनौचित्यात्, वस्तुत अर्थसमाजसिद्धत्वात् तद्रूपावच्छिन्नेऽपि न हेतुता, किन्तु सामान्यावच्छिन्नध्वंसनये कर्मत्वावच्छिन्नध्वंसे तत्समयावत्कर्मक्षयसमनियतक्षायिकसुखत्वावच्छिन्ने वेति न

---

दुःखध्वसः सम्भवत्येव नेत्यसम्भवितस्य तस्य सुतरामेवासाध्यत्वादतः पुरुषार्थत्वाभावान्न दुःखध्वसो मोक्ष इत्यर्थः । **तत्र च** दुःखसाधनध्वंसरूपमोक्षे च । **वैजात्येने**त्यस्य **हेतुत्वमि**त्यनेनान्वयः , विजातीयज्ञानत्वेन विजातीयकर्मत्वेन कारणत्वम् । **वा** अथवा । **मुमुक्षुविहितत्वादिना** मुमुक्षुविहितज्ञानत्वेन मुमुक्षुविहितकर्मत्वेन कारणत्वम्, **तुल्यमेव** समानमेव । **इति** एतस्मात् कारणात् । **एकतरपक्षपातः** ज्ञानमेव कारणं न कर्मेति, कर्मैव कारणं न ज्ञानमित्येवमेकतरपक्षपातः । **न श्रेयान्** नातीवरमणीयः । **ज्ञान** इति- क्षायिकस्थले ज्ञाने केवलज्ञानत्वरूपस्य वैजात्यस्य कर्मणि यथाख्यातचारित्रस्वरूपस्य वैजात्यस्य च कल्पनायाः, क्षायोपशमिकस्थले तु **तदनुकूलतामात्रस्य** मोक्षानुकूलतामात्रस्य, **द्वयोः** ज्ञानकर्मणोः कल्पनायास्तुल्ययोगक्षेमत्वादित्यन्वयः, अर्थस्तु व्यक्तः । **एतेने**त्यस्य **निरस्तमि**त्यनेनान्वयः । **कारणोच्छेदक्रमेणे**ति- "दुःख-जन्म-प्रवृत्ति दोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायान्मोक्षः" इति गौतमसूत्रम्, तत्र मिथ्याज्ञानं रागद्वेषलक्षणदोषस्य कारणमिति मिथ्याज्ञानरूपकारणोच्छेदाद् दोषरूपकार्यस्योच्छेदः, रागद्वेषलक्षणदोषश्च प्रवृत्तेः कारणमिति दोषरूपकारणोच्छेदात् प्रवृत्तिरूपकार्यस्योच्छेदः, प्रवृत्तिश्च विहितनिषिद्धकर्मविषयिणी अदृष्टद्वारा जन्मनः कारणमिति प्रवृत्तिरूपकारणोच्छेदाज्जन्मलक्षणकार्यस्योच्छेदः, जन्म च दुःखस्य कारणमिति जन्मलक्षणकारणोच्छेदाद् दुःखध्वंसो भवति, स एव मोक्ष इत्येवं कारणोच्छेदक्रमेण कार्योच्छेदान्मुक्तिरित्यर्थः । **इति** एतस्मात् कारणात् । "**ज्ञानं कर्मसहकारित्वं मिथ्याज्ञानोन्मूलने**" इत्यस्य स्थाने "ज्ञाने कर्मसहकारित्व न ज्ञानोन्मूलने" इति पाठो युक्तः । कथं न ज्ञाने कर्मसहकारित्वमित्यपेक्षायामाह- **कर्मविनाकृतस्यैवे**ति- कर्मरहितस्यैवेत्यर्थः । **तस्य** ज्ञानस्य । **हेतुत्वावधारणात्** निवृत्तिहेतुत्वनिर्णयात् । **एतेने**त्यदिष्टमेव निरासहेतुं प्रकटयति- **मिथ्याज्ञाननाशेऽपी**ति । **मिथ्याज्ञानप्रागभावासहवृत्ती**ति- यन्मिथ्याज्ञानध्वंसानन्तरं मिथ्याज्ञानं तत् पुरुषस्य न भविष्यति, स एव मिथ्याज्ञानध्वसः स्वसमानाधिकरणमिथ्याज्ञानप्रागभावासहवृत्तिः, स्वसमानाधिकरणत्व च मिथ्याज्ञानप्रागभावविशेषणमवश्यमुपादेयम्, अन्यथेदानीं मुक्तस्य कस्यचित् पुंसो दुःखध्वंसोऽपि बद्धपुरुषीयदुःखप्रागभावसमानकालीन एवेति दुःखप्रागभावासहवृत्तित्वेन तच्चरमदुःखध्वंसस्यापि मुक्तित्वं न स्यादिति बोध्यम् । **हेतुतायाः** तत्त्वज्ञानस्य हेतुतायाः । **लोकप्रमाणाविषयत्वेने**ति- नहि लौकिकप्रमाणानि प्रत्यक्षानुमानादीनि चरमदुःखध्वंसं प्रति तत्त्वज्ञान कारणमित्येवं विषयीकुर्वन्तीत्यतश्चरमदुःखध्वंस प्रति तत्त्वज्ञानस्य कारणताया लोकप्रमाणाविषयत्वेनेत्यर्थः, तथा चालौकिकागमप्रमाणेन तन्मूलकसामान्यतो दृष्टानुमानेन च चरमदुःखध्वंसं प्रति तत्त्वज्ञानस्य कारणत्वं कल्पनीयमिति तदलौकिकप्रमाणस्य ज्ञान-कर्मणोर्द्वयोरपि चरमदुःखध्वसं प्रति कारणत्वे प्रवृत्तेरिति द्वयोरपि चरमदुःखध्वंसं प्रति हेतुत्वकल्पनमुचितमित्यर्थः । किञ्च, स्वसामानाधिकरण्यमिथ्याज्ञानप्रागभावासहवृत्तित्व-मिथ्याज्ञानध्वंसत्वरूपविभिन्नसामग्रीप्रयोज्यानेकधर्मघटितत्वेन स्वसमानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसत्वस्यानेकसामग्रीनियम्यत्वलक्षणार्थसमाजसिद्धत्वान्न किञ्चिन्निरूपितकार्यतावच्छेदकत्वमिति न तदवच्छिन्ने तत्त्वज्ञानस्य हेतुता सम्भवतीत्याह- **वस्तुत** इति । **तद्रूपावच्छिन्ने**ति- स्वसमानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वसत्वावच्छिन्नेऽपि । **न हेतुता** न तत्त्वज्ञानस्य कारणता । तर्हि कस्मिन् कार्ये तत्त्वज्ञानस्य कारणतेति पृच्छति- **किन्त्वि**ति । उत्तरयति- **सामान्यावच्छिन्नध्वंसनय** इति- सामान्यधर्मावच्छिन्नप्रतियोगिताकध्वसस्वीकारपक्षे इत्यर्थः, घटवत्ताबुद्धिं प्रति घटाभाववत्तानिश्चयस्य प्रतिबन्धकत्वम्, तत्र यदि घटत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वाद्यवच्छिन्नविशेष्यताकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितघटनिष्ठप्रतियोगिताकात्य-

**कस्यापि न्यूनत्वं पराभिमतद्वारस्थाने एव फलाभिषेकात्, एकपुरस्कारेणान्यनिराकरणवचनं च तत्तदर्थवाद एवेति न कर्मकारणताबोधकवचनेऽनुकूलत्वमात्रमर्थः, कारणताशक्तपदस्यानुकूलत्वे लक्षणायां**

---

न्ताभावत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वाद्यवच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्नप्रतिबन्धकतेत्येवं प्रतिबध्य-प्रतिबन्धकभाव उपेयते तदा घटवद्भूतलमिति बुद्धिं प्रति तद्घटाभाववद्भूतलमिति निश्चयस्यापि प्रतिबन्धकत्वं स्यात्, तद्घटाभावस्यापि घटनिष्ठप्रतियोगिताकत्वेन तद्वत्तानिश्चयस्यापि निरुक्तप्रतिबन्धकतावच्छेदकधर्माक्रान्तत्वादतो घटत्वावच्छिन्नप्रकारतानिरूपित-भूतलत्वाद्यवच्छिन्नविशेष्यताकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितघटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वावच्छिन्नप्रकारता-निरूपितभूतलत्वाद्यवच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्नप्रतिबन्धकतेत्येवमेव प्रतिबध्य-प्रतिबन्धकभाव इति तद्घटात्यन्ताभावस्य घटत्वावच्छिन्नप्रतियोगिताकत्वाभावेन निरुक्तप्रतिबन्धकत्वस्य तद्घटाभाववत्तानिश्चये वारणं सम्भवतीत्येवं प्रतिबध्य-प्रतिबन्धक-भावानुरोधेनात्यन्ताभावस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं स्वीक्रियते; तथा घटत्ववत्ताबुद्धिं प्रति घटभेदवत्तानिश्चयस्य प्रतिबन्धकत्वम् तत्रापि घटत्वत्वेतरधर्मानवच्छिन्नघटत्वनिष्ठप्रकारतानिरूपितेदन्त्वाद्यवच्छिन्नविशेष्यताकबुद्धित्वावच्छिन्न-प्रतिबध्यतानिरूपितघटनिष्ठप्रतियोगिकभेदत्वावच्छिन्नप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्नप्रतिबन्धकतेत्येवं प्रतिबध्य-प्रतिबन्धकभावो यद्युपेयते तदाऽयं घट इति बुद्धिं प्रति नायं तद्घट इति निश्चयस्यापि प्रतिबन्धकत्वं स्यात् तद्घटभेदस्यापि घटनिष्ठप्रतियोगिताकत्वेन तद्वत्तानिश्चयस्यापि निरुक्तप्रतिबन्धकतावच्छेदकधर्माक्रान्तत्वादतो घटत्वेतरधर्मानव-च्छिन्नघटत्वनिष्ठप्रकारतानिरूपितेदन्त्वाद्यवच्छिन्नविशेष्यताकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितघटत्वावच्छिन्नप्रतियोगिताकभेद-त्वावच्छिन्नप्रकारतानिरूपितेदन्त्वाद्यवच्छिन्नविशेष्यताकनिश्चयत्वाद्यवच्छिन्नप्रतिबन्धकतेत्येव प्रतिबध्य-प्रतिबन्धकभावो वाच्यः, तद्घटभेदस्य घटत्वावच्छिन्नप्रतियोगिताकत्वाभावाच्च तद्वत्तानिश्चयस्य प्रतिबन्धकत्वापत्तिः, घटत्वनिष्ठप्रकारताया घटत्वत्वेतर-धर्मानवच्छिन्नत्वेन निवेशादयं घट इति घटत्ववानिति च बुद्ध्योः प्रतिबध्यत्वोपपत्तिः, सामान्यवानयमिति बुद्धेश्च नायं घट इति निश्चयप्रतिबध्यत्वानापत्तिश्चेत्येवं प्रतिबध्यप्रतिबन्धकभावानुरोधेन भेदस्यापि सामान्यधर्मावच्छिन्नप्रतियोगिताकत्व-मुपेयते; ध्वंस-प्रागभावौ चैकैकप्रतियोगिकावेव, न त्वेकघटध्वंसप्रागभावावन्यघटप्रतियोगिकौ स्तः, तौ च स्वप्रतियोगि-समवायिवर्तिनाविति यत्रैव कपाले तद्घटो वर्तते तत्रैवैतद्घटोत्पत्तितः प्राक्काले एतद्घटप्रागभावो वर्तते, एतद्घटाधिकरणचरम-समयानन्तरसमये चैतद्घटध्वंसो वर्तत इत्येवस्वरूपतः स्वप्रागभाव-ध्वंसाभ्यां समं नास्त्येतद्घटस्य विरोधः, किन्तु यथो-त्तरसमयावच्छेदेनैतद्घटध्वंस प्रागभावौ तत्तत्समयावच्छेदेन तदधिकरणीभूतकपाले नैतद्घट इति पूर्वोत्तरसमयाद्युपादायैव विरोध इति तत्समयावच्छिन्नसमवायेन तद्घटवत्ताबुद्धिं प्रति तत्समयावच्छिन्नस्वरूपेण तद्घटप्रागभाववत्तानिश्चयस्य तत्समयावच्छिन्न-स्वरूपेण तद्घटध्वंसवत्तानिश्चयस्य च प्रतिबन्धकत्वमिति तत्र तत्तद्घटनिष्ठप्रतियोगिताकत्वेन प्रागभाव-ध्वंसयोः प्रवेशेऽपि घटान्तरध्वंस घटान्तरप्रागभावयोस्तद्घटनिष्ठप्रतियोगिताकत्वाभावादेव न तद्वत्तानिश्चयस्य प्रतिबन्धकत्वापत्तिरिति प्रतिबध्य-प्रतिबन्धकभावस्य ध्वंस-प्रागभावयोः किञ्चिद्धर्मावच्छिन्नप्रतियोगिताकत्वस्वीकारमन्तरेणाप्युपपत्तेः किञ्चिद्धर्मावच्छिन्नप्रतियोगि-ताकत्व एव तयोर्मानं नास्ति, किमु वक्तव्यं तयोः सामान्यधर्मावच्छिन्नकत्वे इति विवादसूचनायोक्तं **सामान्यावच्छिन्न-ध्वंसनये** इति– घट-घटप्रागभावानधिकरणसमयवृत्तित्वावच्छेदेन तद्घटध्वंसे घटत्वावच्छिन्नप्रतियोगिताकत्वं घट घटप्राग-भावाधिकरणसमयवृत्तित्वावच्छेदेन घटत्वावच्छिन्नप्रतियोगिताकत्वभाव इत्येवमव्याप्यवृत्तिघटत्वावच्छिन्नप्रतियोगिताकत्वं ध्वंसे, यथा विशेषाभावकूटातिरिक्तसामान्याभावानभ्युपगन्तृनये विशेषाभावकूटत्वावच्छेन सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं तत्तद्विशेषाभावत्वावच्छेदेन सामान्यधर्मावच्छिन्नप्रतियोगिकत्वाभाव इति ध्वंसे सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वाभ्युप-गन्तुरभिप्रायः । **कर्मत्वावच्छिन्नध्वंसे** कर्मत्वावच्छिन्नप्रतियोगिताकध्वंसे तत्पुरुषीयकर्मतत्प्रागभावानधिकरणसमयवृत्ति-त्वोपलक्षिते कर्मत्वावच्छिन्नप्रतियोगिताकध्वंस इति यावत्, ज्ञानस्य हेतुतेति प्रकरणाल्लभ्यते । **वा** अथवा । "**तत्समया-वत्**" इत्यस्य स्थाने "तत्समययावत्" इति पाठो युक्तः, तत्समयः– क्षायिकसुखत्वावच्छिन्नसमयवृत्तिः केवलज्ञान-समयवृत्तिर्वा यो यावत्कर्मक्षयस्तत्समनियतं यत् सुखत्वावच्छिन्नं तत्र ज्ञानस्य हेतुतेत्यर्थः । इति एवं स्वीकारे । **न कस्यापि न्यूनत्वं** न किञ्चिदपि हीयते, यज्ज्ञानकर्मणोर्द्वारतयाऽभिमतं ज्ञाननैर्मल्याद्यपूर्वं वा तत्स्थान एव फलस्य क्षायिकस्य सुखस्याभिषेकात्– स्थापनादित्यर्थः । यच्च ज्ञानमेव कारणं न कर्मेति कर्मैव कारणं न ज्ञानमिति वचनं तज्ज्ञानस्य

गौरवात्, अन्यथासिद्धिचतुष्टयराहित्यगर्भत्वेन तत्र लाघवमिति दृष्टिदाने च विधिप्रत्य[य]मात्रार्थोऽपीष्टानुकूलत्वमात्रमेव स्यादिति यागादेरप्यपूर्वेणान्यथासिद्धिः कर्मणां न तत्त्वज्ञाने नवा तद्द्वारा मुक्तौ हेतुत्वमित्युक्तम्, तदपि न युक्तम्, प्रतिबन्धकत्वस्य विशिष्य विश्रामेण तदभावत्वेन कार्यमात्रेऽनुगतहेतुताया अयोगात्, प्रतिबन्धकविशेषनिवृत्तिहेतुतायाश्च कर्मकारणताग्रहोत्तरकल्पनीयत्वेन तदन्यथासिध्यनापादकत्वात्, किञ्च, प्रतिबन्धकनिवृत्त्यान्यथासिद्धत्वेन कर्मणोऽहेतुत्वोक्तौ तत्त्वज्ञानस्य सुतरां तथात्वं स्यात्, नह्युत्पन्नकेवलज्ञाना अपि भवोपग्राहिकर्मचतुष्टयं प्रतिबन्धकनिवर्तयित्वा सद्य एव मुक्तिमासादयन्ति इति मुक्तिप्रबन्धककर्मनिवर्तकत्वेन तत्त्वज्ञानस्य कुतो नान्यथासिद्धिः। अथ कर्मणो

---

कर्मणो वा प्रशसापरं न त्वेकमेव कारणमन्यन्न कारणमित्येतत् परमित्याह- **एकपुरस्कारेणे**ति। **इति** एवं व्यवस्थितौ। नेत्यस्य **अर्थ** इत्यनेनान्वयः। **कर्मकारणताबोधकवचने** कर्मणो मुक्तिं प्रति कारणत्वबोधकं यद् वचनं तस्मिन्। **अनुकूलत्वमात्रं** निःश्रेयसप्रागभावव्याप्यप्रागभावप्रतियोगित्वरूपमोक्षानुकूलत्वमात्रम्, अत्र मात्रपदे नान्यथासिद्धिशून्यत्वे सति मोक्षप्रागभावव्याप्यप्रागभावप्रतियोगित्वरूपमोक्षकारणत्वस्य व्यवच्छेदः। निषेधे हेतुमाह- **कारणताशक्तपदस्ये**ति। ननु यत् कार्यं प्रति यस्य येन धर्मेण कारणत्व स धर्मः प्रथमोऽन्यथासिद्धः, यस्य यत् कार्यं प्रति स्वातन्त्र्येणान्वय-व्यतिरेकौ न गृह्येते किन्तु तत्कार्यकारणमादायैवान्वय-व्यतिरेकौ गृह्येते स तत् कार्यं प्रति द्वितीयोऽन्यथासिद्धः, यस्य यत्कार्यकारणभिन्नं प्रति पूर्ववर्तित्व गृहीत्वैव यत् कार्यं प्रति पूर्ववर्तित्व गृह्यते स तत् कार्यं प्रति तृतीयोऽन्यथासिद्धः, यस्य यत्कार्यकारण प्रति पूर्ववर्तित्वं गृहीत्वैव यत् कार्यं प्रति पूर्ववर्तित्वं गृह्यते स तत् कार्यं प्रति चतुर्थोऽन्यथासिद्धः, अवश्यक्लृप्तनियतपूर्ववर्तिभिन्नश्च पञ्चमोऽन्यथासिद्ध इत्येवंलक्षणलक्षिताऽन्यथासिद्धपञ्चकभिन्नत्वे सति नियतपूर्ववर्तित्वरूपकारणत्वापेक्षया पञ्चमान्यथासिद्धभिन्नत्वत्वाघटितमन्यथासिद्धचतुष्टयभिन्नत्वे सति नियतपूर्ववर्तित्वरूपानुकूलत्वं लघुभूतमिति तत्परत्वमेव कर्मकारणतावोधकवचने युक्तमित्यत आह- **अन्यथासिद्धिचतुष्टयराहित्यगर्भत्वेने**ति। **तत्र** अनुकूलत्वे। **लाघवं** कारणत्वापेक्षया लाघवम्। **इति दृष्टिदाने** च एव पर्यालोचने च। स्वर्गकामो दर्श-पूर्णमासाभ्यां यजेतेत्यादिवचनेऽपि विध्यर्थत्वमिष्टसाधनत्वापेक्षया लघुभूते इष्टानुकूलत्वे एव भवेदिति यागादेरप्यपूर्वेणान्यथासिद्धिः स्यादतो लघुभूतमप्यनुकूलत्वं परित्यज्य कारणत्वमेवार्थ इति कर्मणो नि.श्रेयसकारणत्व तत्प्रतिपादकागमवचनात् सिद्ध्यतीत्याह- **विधिप्रत्ययेति**- यथा च कार्यमात्र प्रति प्रतिवन्धकाभावत्वेन प्रतिवन्धकाभावस्य कारणत्वमिति प्रतिबन्धकाभावविधया क्लृप्तकारणताकेन निःश्रेयस प्रतिवन्धकदुरितध्वंसेन कर्मणोऽसिद्धिस्तथा कार्यमात्र प्रत्यदृष्टत्वेनादृष्टस्य कारणत्वमिति क्लृप्तकारणताकेनापूर्वेण यागादिकारणतानुपजीवनेनैव कल्पितेन यागादेरन्यथासिद्धिरित्यस्य वक्तु शक्यत्वादित्यर्थ.। अन्यदपि तत्त्वज्ञानं प्रति तद्द्वारा मुक्तिं प्रति च कर्मणा कारणत्वाभावावेदकं वचनं पूर्वमुक्त तदपि न युक्तमित्याह- **यदपी**ति- कर्मणां न तत्त्वज्ञाने हेतुत्व तद्द्वारा मुक्तौ न हेतुत्वमित्यर्थ.। **तद्द्वारा** तत्त्वज्ञानद्वारा। युक्तत्वाभावे हेतुमाह- **प्रतिबन्धकत्वस्ये**ति- एतत्कार्यं प्रतीदं प्रतिवन्धकमेतच्चामुक्त प्रति प्रतिवन्धकमित्थं विशेषरूपण प्रतिवध्य-प्रतिवन्धकभावस्य विश्रामेण कार्यत्वावच्छिन्नं प्रति सामान्यतः प्रतिवन्धकाभावत्वेन कारणत्वस्याभावादित्यर्थः। प्रतिवन्धकविशेषनिवृत्त्यैव तन्निवृत्तित्वलक्षणविशेषधर्मेण मुक्तिं प्रति कारणतया क्लृप्तया कर्मणामन्यथासिद्धिरस्त्वित्यत आह- **प्रतिबन्धकविशेषे**ति- कर्मणा मुक्ति प्रति कारणत्वस्य ग्रहे कर्मकारणत्वप्रतिपादकवचनेन जाते सति चिरध्वस्ताना कर्मणा स्वतो मुक्त्यव्यवहितपूर्ववर्तित्वस्याभावे स्वव्यापारवत्त्वसम्बन्धेन मुक्त्यव्यवहितपूर्ववर्तित्वादेव कारणत्व भवेन्नान्यथेत्येव मुक्तिं प्रति कारणत्वान्यथानुपपत्त्यां कर्मकारणत्वग्रहोत्तरकालं प्रतिवन्धकविशेषनिवृत्तेर्मुक्तिं प्रति कारणत्वस्य कल्पनीयत्वेन तस्य कर्मान्यथासिद्ध्यनापादकत्वादित्यर्थः। अपि च प्रतिवन्धकनिवृत्त्याऽन्यथासिद्धत्वेन कर्मणां मुक्तिं प्रति कारणत्वाभावे तत्त्वज्ञानस्यापि प्रतिबन्धकनिवृत्त्याऽन्यथासिद्धत्वेन मुक्तिं प्रति कारणत्वं न स्यादित्याह- **किञ्चे**ति। **तथात्वं स्यात्** मुक्तिं प्रत्यकारणत्व भवेत्। तत्त्वज्ञानस्यापि प्रवन्धकनिवृत्तिद्वारैव मुक्तिं प्रति कारणत्व नान्यथेत्यतः प्रतिबन्धकनिवृत्त्या तस्याप्यन्यथासिद्धत्व वक्तु शक्यमेवेत्याह- **नही**ति- अस्य 'आसादयन्ति' इत्यनेनान्वयः। ननु तत्त्वज्ञानस्य कर्मनिवृत्तिद्वारा मोक्षं प्रति कारणत्वेऽभ्युपगम्यमाने सत्येव कर्मनिवृत्त्या

भोगनाश्यत्वेन ज्ञानस्य तदनाशकत्वान्नान्यथासिद्धिः, नहि भोगस्तत्त्वज्ञानव्यापारः, तथाऽश्रवणात्, तेन विनापि कर्मण एव तदुत्पत्तेश्च, न च वासुदेवादीनां कायव्यूहश्रवणात् तत्त्वज्ञानेन कायव्यूहमुत्पाद्य भोगद्वारा कर्मक्षय इत्यपि साम्प्रतम्, तपःप्रभावादेव तत्त्वज्ञानानुत्पादेऽपि कायव्यूहसम्भवात्, भोगजननार्थं कर्मभिरवश्यं तत्सकार्यनिष्पादनमिति न तत्र तत्त्वज्ञानोपयोगः. यौगपद्यं च कायानां तज्जनककर्मस्वभावात् तपःप्रभावाद् इति, न च "तावदेवास्य चिरं यावन्न विमोक्षोऽथ सम्पत्स्यते कैवल्येन" [ ] इति श्रुतौ तावदेवास्य- उत्पन्नतत्त्वज्ञानस्य, चिरं विलम्बो, यावन्नोत्पन्नकर्मणो विमोक्षः, अथ सम्पत्स्यते कैवल्येन भोगेना( न ) क्षपयित्वेति शेषः, इति व्याख्यानाद् भोगस्य तत्त्वज्ञानव्यापारत्वं युक्तमेव, न च शेषदाने मानाभावः सत्यपि ज्ञाने कर्मावस्थाने क्लृप्तसामान्यस्य भोगस्यैव नाशकत्वेनाक्षेपादिति वाच्यम्, तत्त्वज्ञाने सति तत्त्वज्ञानदशायां न मोक्षः किन्तु तदपि म्रक्षण इत्यर्थेनाप्युपपत्तेरिति चेत् ? मैवम्, कर्मणो भोगनाश्यत्वेऽपि ज्ञानस्य कर्मनाशकत्वम्, भोगस्य तत्त्वज्ञाना( न )व्यापारत्वात्, न च तत्त्वज्ञानं विनापि भोगेन कर्मनाशे व्यभिचारः, कर्मप्रागभावासहवृत्तिकर्मनाशे युगपद्भोगे वा व्यभिचाराभावादिति मणिकृतैवोक्तत्वात्, अस्मत्सिद्धा-

---

तत्त्वज्ञानस्याप्यन्यथासिद्धत्वमापादयितुं शक्यम्, न चैवम्, कर्मणो भोगनिवर्त्यत्वेन तत्त्वज्ञाननिवर्त्यत्वाभावे तत्त्वज्ञानाजन्यायाः प्रतिबन्धककर्मनिर्वृत्तेस्तत्त्वज्ञानव्यापारत्वाभावादित्याशङ्कते- **अथेति**। **तदनाशकत्वात्** कर्मनाशकत्वाभावात्। ननु भोगद्वारैव मोक्षं प्रति तत्त्वज्ञानं कारणमिति भोगेनैव तत्त्वज्ञानस्यान्यथासिद्धत्वमापादनीयमित्यत आह- **नहीति**। तत्र हेतुः- **तथाऽश्रवणादिति**- तत्त्वज्ञानव्यापारतया भोगस्यागमवचनाप्रतिपाद्यत्वादित्यर्थ.। भोगस्य तत्त्वज्ञानजन्यत्वे सति तत्त्वज्ञानव्यापारत्वं कल्पयितुं शक्यम्, न च भोगस्य तत्त्वज्ञानजन्यत्वं कर्मण एव भोगोत्पत्तेरित्याह- **तेन विनाऽपीति**- तत्त्वज्ञानमन्तरेणाऽपीत्यर्थः। **तदुत्पत्तेः** भोगोत्पत्तेः। **न चेत्यस्य साम्प्रतमित्यनेनान्वयः**। "तत्कार्यनिष्पादन" इत्यस्य स्थाने "तत्कायनिष्पादन" इति पाठो युक्तः, **तत्कायनिष्पादनं** भोगजनककायसम्पादनम्। तत्र भोगजनककायनिष्पादने। नन्वेवं कर्मभिस्तत्तद्भोगजनककायाना क्रमेण भवन भवेत् न यौगपद्येन, युगपदुत्पद्यमानानामेव कायाना कायव्यूहशब्दव्यपदेश्यत्वम्, न क्रमोत्पन्नानामिति युगपत्कायसमूहलक्षणकायव्यूहस्तत्त्वज्ञानादेव, तत्र तत्त्वज्ञानोपयोग इत्यत आह- **यौगपद्यं चेति**- युगपत्कायजनकेत्यर्थः। अचिन्त्यशक्तिश्च तपसामिति तत्प्रभावात् तत्सामर्थ्याद्युगपदनेककायोत्पत्तिरित्येतावता तत्त्वज्ञानमन्तरेणापि कायव्यूहः सम्भवतीत्याह- **तपःप्रभावाद् वेति**। भोगस्य तत्त्वज्ञानव्यापारत्वमाशङ्क्य प्रतिक्षिपति- **न चेति**- अस्य **वाच्यमित्युत्तरेण** सम्बन्धः। **तावदेवेति** श्रुतेस्तत्त्वज्ञाने भोगव्यापारकत्ववेदकत्वस्पष्टप्रतिपत्तये तद्व्याख्यानमाह- **तावदेवेति**- यावदित्युत्तरापेक्ष तावदिति। **अस्येत्यस्य** विवरणमुत्पन्नतत्त्वज्ञानस्येति। **चिरमित्यस्य** विवरण- **विलम्ब** इति। **न विमोक्ष** इत्यस्य विवरण- **नोत्पन्नकर्मणो विमोक्ष** इति। **अथ सम्पत्स्यते** इत्यत्र केन सम्पत्स्यते ? कथं सम्पत्स्यते ? इति प्रकारकर्तव्यताकाङ्क्षयोर्निवृत्त्यर्थमाह- **कैवल्येन भोगेन क्षपयित्वेति शेष** इति- भोगेन प्रारब्धकर्म क्षपयित्वा कैवल्येन स्वस्वरूपमात्रावस्थानलक्षणमोक्षेण सम्पत्स्यते मुक्तो भवतीति यावत्। **इति व्याख्यानात्** एवस्वरूपव्याख्यानात्। शेषकरणे मानाभावमाशङ्क्य प्रतिक्षिपति- **न चेति**। **शेषदाने** शेषकरणे। प्रतिक्षेपहेतुमाह- **सत्यपीति**। भोगस्य तत्त्वज्ञानव्यापारत्वाशङ्काप्रतिक्षेपहेतुमुपदर्शयति- **तत्त्वज्ञाने सतीति**। "**तदपि म्रक्षणे**" इत्यस्य स्थाने "तदपगमक्षणे" इति पाठो युक्तः, तस्य तत्त्वज्ञानविनाशक्षणे इत्यर्थ। अथ कर्मणो भोगनाश्यत्वेनेत्याद्याशङ्का प्रतिक्षिपति- **मैवमिति**। "**ज्ञानस्य कर्मनाशकत्वं, भोगस्य**" इत्यस्य स्थाने "ज्ञानस्य कर्मनाशकत्वे भोगस्य" इति पाठो युक्तः, यथा कर्मणो भोगनाश्यत्वं श्रुत्या प्रतिपादित तथा तत्त्वज्ञानस्य कर्मनाशकत्वमपि श्रुत्या प्रतिपादितम्, तत्र श्रुतिप्रतिपादिते ज्ञानस्य कर्मनाशकत्वे भोगस्य तत्त्वज्ञानव्यापारत्वाभावाद् भोगमद्वारीकृत्यैव तत्त्वज्ञानेन कर्मणो नाशसम्भवादित्यर्थ.। ननु तत्त्वज्ञानत्वेन कर्मनाशत्वेन च कार्यकारणभावो न भवति, तत्त्वज्ञानाभावेऽपि भोगात् कर्मनाशस्य सम्भवेन तत्र व्यतिरेकव्यभिचारादित्याशङ्क्य प्रतिक्षिपति- **न चेति**।

न्तेऽपि नाशार्थिप्रवृत्तौ नाश्यनिश्चयविधयैव केवलज्ञानस्य कर्महेतुत्वमनपायम्, तदुक्तं निर्युक्तौ समुद्घाताधिकारे—

" णाऊण वेयणिज्जं अइबहुअं आऊयं च थोवागं। कम्मं पडिलेहेउं वचंति जिणा समुग्घायं "॥

[ ]

अत्र त्त्वाप्रत्ययबलादेव नियतपौर्वापर्यस्यार्थाच्चानन्यसिद्धत्वस्य प्रतीतेः कारणत्वलाभः। अन्यदप्याभोगवीर्यस्यैव केवलिनः कर्मक्षयहेतुत्वादाभोगान्वितवीर्यत्वेन वीर्यान्विताभोगत्वेनापि हेतुत्वादुक्तार्थसिद्धिः, यत् पुनः—

" दोषपक्तिर्मतिज्ञाना अकिञ्चिदपि केवलात्। तमःप्रचयनिःशेषविशुद्धिफलमेव तत् ॥ १ ॥ "

[ ]

इत्यनेन केवलज्ञानस्याकिञ्चित्करत्वमुच्यते तद्दोषपक्तिरूपकार्यापेक्षया, न तु पक्वानां भवोपग्राहिणां क्षपणरूपकार्यमाश्रित्य, तत्तद्व्यापारस्य तदा जागरूकत्वात्, यदि च स्वरूपशुद्धिग्राहकनयेन केवलज्ञानस्य निर्व्यापारत्वं स्वीक्रियते तदा यथाख्यातचारित्रात्मकक्रियाया अपि तथात्वमेवाभ्युपगन्तुं युक्तम्, समुद्घातादिना कर्मक्षपणव्यापारस्य योगविशेषेणैव वक्तुं शक्यत्वात् ॥ १ ॥ मुक्तिबन्धहेतुविवेकेन फलशुद्धिग्राहकनयेन तत्र चारित्रहेतुत्वाभ्युपगम्यमानो ज्ञानहेतुतामपि न व्याहन्ति ॥ २ ॥

---

प्रतिक्षेपहेतुमाह- **कर्मप्रागभावासहवृत्तीति**- स्वसमानाधिकरणकर्मप्रागभावाधिकरणकालावृत्तीत्यर्थः, न तु स्वसमानाधिकरणकर्मप्रागभावाधिकरणकालवृत्तीत्यर्थः, तथा सति संसारदशाकालीनकर्मनाशस्यापि स्वसमानाधिकरणकर्मप्रागभावानधिकरणमुक्तिकालवृत्तित्वेन निरुक्तकार्यतावच्छेदकाऽऽक्रान्ततया तस्य तत्त्वज्ञानं विनैव व्यतिरेकव्यभिचारस्तदवस्थः स्यादिति बोध्यम्, कायव्यूहद्वारा युगपद्भोगस्तत्त्वज्ञानादेव भवति, तत्र तत्त्वज्ञानस्य कारणत्वे व्यतिरेकव्यभिचाराभावादित्यर्थः। **अस्मत्सिद्धान्तेऽपि** जैनसिद्धान्तेऽपि। " **कर्महेतुत्व** " इत्यस्य स्थाने " कर्मनाशहेतुत्व " इति पाठो युक्तः। **अनपायं** निर्विघ्नम्। उक्तार्थे निर्युक्तिवचनं प्रमाणयति- **तदुक्तमिति**। **णाउण०** इति- " ज्ञात्वा वेदनीयमतिबहुकमायुष्कं च स्तोकम्। कर्म प्रतिलेखितु व्रजन्ति जिना. समुद्घातम् ॥ " इति संस्कृतम्। **अत्र** उक्तनिरुक्तिवचने। **त्त्वाप्रत्ययबलात्** णाउण- ज्ञात्वेति त्त्वाप्रत्ययबलात्, अस्य **प्रतीतेरि**त्यनेनान्वयः, एवं **नियतपौर्वापर्यस्ये**त्यस्यापि तेनैवान्वयः। " **नन्यसिद्धत्वस्य** " इत्यस्य स्थाने " नन्यथासिद्धत्वस्य " इति पाठो युक्तः। **कारणत्वलाभः**। अनन्यथासिद्धत्वे सति नियतपूर्ववर्तित्वस्वरूपं कारणत्वं तस्य घटकयोरनन्यथासिद्धत्व-नियतपूर्ववर्तित्वयोः प्रतीत्या लाभः। **अन्यदपीति**- युक्त्यन्तरमपि तत्र प्रमाणमित्यर्थः। युक्त्यन्तरमेव दर्शयति- **आभोगवीर्यस्यैवेति**- आभोगः- उपयोगात्मकज्ञानस्वरूपः, तद्वीर्यस्य कर्मक्षयं प्रति कारणत्वे ज्ञानस्य कर्मक्षय प्रति कारणत्वमायातमेवेत्याशयः। **यत्पुनरि**त्यस्य ' अकिञ्चित्करत्वमुच्यते ' इत्यनेन सम्बन्धः। " **ज्ञाना अ** " इत्यस्य स्थाने " ज्ञानाद " इति पाठो युक्तः। **तमःप्रचये**त्यत्र तमःपदमज्ञानार्थकम्। **तत्** केवलज्ञानम्। **तत्** केवलज्ञानस्याकिञ्चित्करत्ववचनम्। " **तत्तद्व्यापारस्य** " इत्यस्य स्थाने " तत्र तद्व्यापारस्य " इति पाठो युक्त.। **तत्र** पक्वभवोपग्राहिकर्मक्षये। **तद्व्यापारस्य** तत्त्वज्ञानव्यापारस्य। **तदा** भवोपग्राहिकर्मणां पक्वतादशायाम्। **जागरूकत्वात्** अवश्यम्भावात्, यो हि स्वकार्यमवश्यमेव सम्पादयति स तत्र समर्थस्तस्मिन् कार्ये जागरूको न तु तत्र सुप्तः, एवं तद्व्यापारोऽपि तथा, जागर-स्वापादीनां ज्ञानाज्ञानाद्यवस्थाविशेषाणां वस्तुगत्या चेतनधर्माणा व्यापारे वस्तुतोऽभावादुपचारादेव तत्तत्कार्येऽवश्यम्भावमुपादाय तथा व्यपदेश इति बोध्यम्। **स्वरूपशुद्धिग्राहकनयेनेति**- केवलज्ञानं स्वरूपत. शुद्धमेव न तु किञ्चिद्धर्मकलङ्कितमित्येवस्वरूपशुद्धकेवलग्राहिनयेनेत्यर्थः। **तथात्वमेव** निर्व्यापारत्वमेव। ननु यदि यथाख्यातचारित्रात्मिका क्रिया निर्व्यापारा तदा समुद्घातादिना कर्मक्षपणव्यापारः केन भवेदित्यपेक्षायामाह- **समुद्घातादिनेति**। **मुक्ति-बन्धहेतुविवेकेनेति**- अयं मुक्तिहेतुरयं च बन्धहेतुरित्येवं

अनन्त[ र ]कारणग्राहकनयेन तत्र चारित्रमेव हेतुरिति चेत् ? न– उत्पत्तावनन्तरत्वस्य यथाख्यातचारित्रापेक्षया केवलज्ञान एव सम्भवात्, व्यापारानन्तर्यस्य च कल्प्यमानस्योभयत्राप्यविनिगमात् ॥ ३ ॥ एतेनाक्षेपककारणग्राहकनयेन " जम्हा दंसण-नाणा " [ ] इत्यादिवचनाच्चारित्रमेव मुक्तिहेतुरित्यपि निरस्तम्, आक्षेपकत्वं हि स्वेतरसकलकारणसमवधाननियतसमवधानकत्वम्, तच्च यथाख्यात इव केवलज्ञानेऽपीत्यविशेषात्, क्षयोपशमदशायामप्यपुनर्बन्धकादिचारित्रव्यावृत्तजातिविशेषवतश्चारित्रस्येव विपयप्रतिभासात्मपरिणामज्ञानोद्र्ध्वभाविततत्त्वज्ञानस्याप्येक्षकत्वाविशेषात् ॥ ४ ॥ मुख्यैकशेषनयेन चारित्रमेवोत्कृष्यत इति चेत् ? न– तत्र मुख्यत्वस्यैव विनिगन्तुमशक्यत्वात् ॥ ५ ॥ पुमर्थग्राहकनयेन क्रियायामेव मुख्यत्वं विनिगम्यत इति चेत् ? न– परमभावग्राहकनयेन ज्ञान एव तद्विनिगमनायाः सुवचत्वात् " जं सम्मंति पासहा तं मोणंति पासहा " [ ] इत्यादिवचनात् ॥ ६ ॥ ७ ॥ कारकसम्यक्शरीरनिर्वाहकत्वनयेन चारित्रमेवोत्कृष्यत इति चेत् ? न– " जं अन्नाणी कम्मं खवई " [ ] इत्यादिवचनात् सम्यक्क्रियाशरीरनिर्वाहकत्वनयेन ज्ञानेऽप्युत्कर्षस्य वक्तुं शक्यत्वात् ॥ ८ ॥ ९ ॥ एतेन " णिच्छयणयस्स चरणस्सवघाएण नाण-दंसणवहो वि " [ ] इत्यादिवचनाद् ज्ञाननाशव्याप्यनाशप्रतियोगित्वग्राहकशुद्धनयेन ज्ञानातिशयस्याप्यदुर्वचत्वात् ॥ १० ॥ व्यापारप्राधान्यग्राहकक्रियानयेन चारित्रोत्कर्ष इत्युक्तावपि दर्शन-

विभागेन फलबुद्धिग्राहको यो नयस्तेनेत्यर्थः । तत्र मुक्तौ । " **चारित्रहेतुत्वाभ्युपगम्यमानो** " इत्यस्य स्थाने " चारित्रहेतुताऽभ्युपगम्यमाना " इति पाठो युक्तः, चारित्रस्य कारणता स्वीक्रियमाणा **ज्ञानहेतुतामपि** मुक्तौ ज्ञानस्य कारणतामपि **न व्याहन्ति** नैवापाकरोति । शङ्कते– **अनन्तरेति**– कार्यस्य यदव्यवहितपूर्ववर्ति तदेव कारणमित्यभ्युपगन्तृनयेनेत्यर्थः । **तत्र** मुक्तौ । प्रतिक्षिपति– **नेति** । **उत्पत्तौ** मुक्त्युत्पत्तौ । **उभयत्रापि** ज्ञाने चारित्रे च । **एतेनेत्य**स्य **निरस्तमित्य**नेनान्वयः । **आक्षेपककारणग्राहकनयेन** यत् स्वेतरसकलकारणाक्षेपकं तत् कारणमित्यभ्युपगन्तृनयेन । एतेनेत्यतिदिष्ट निरासहेतुमुपदर्शयति– **आक्षेपकत्वं हीति** । **तच्च** निरुक्तस्वरूपमाक्षेपकत्वं च । निरुक्तस्वरूपमाक्षेपकत्व क्षयोपशमदशायामपि चारित्रविशेषस्येव तत्त्वज्ञानविशेपस्याप्यस्त्येव सम्भव इत्याह– **क्षयोपशमदशायामपीति** । शङ्कते– **मुख्यैकशेषनयेनेति**- यत्कार्ये ययोर्द्वयोर्मध्ये यदेव मुख्यं तदेव कारणमित्यभ्युपगन्तृनयेनेत्यर्थः । समाधत्ते– **नेति** । **तत्र** मुक्तौ ज्ञान-चारित्रयोर्मध्ये । शङ्कते– **पुमर्थग्राहकनयेनेति**– ययोर्द्वयोर्मध्ये यः पुमर्थः पुरुषप्रयत्नसाध्यस्तमेव गृह्णातीति तद्ग्राहको नयस्तेनेत्यर्थः । **क्रियायामेवेति**– क्रियायाः पुरुषप्रयत्नसाध्यत्वेन तस्यामेवेत्यर्थ । समाधत्ते **नेति** । **परमभावग्राहकनयेनेति**– यो यस्य परमो भावः स एव तस्य स्वभाव इति ग्राहकनयेनेत्यर्थः । **तद्विनिगमनायाः** मुख्यत्वसाधकयुक्तेः । अत्रागमवचनं प्रमाणयति– **जं ति**– शङ्कते– **कारकेति**– न केवल निर्विशेषित ज्ञानं मोक्षकारक किन्तु सम्यग्ज्ञानमिति कारकं यत् सम्यग्ज्ञान नस्य यत् सम्यक्त्वं तच्चारित्रसहचरितत्वादेवेति तच्छरीरनिर्वाहकत्वं चारित्रस्यैवं ग्राहकनयेनेत्यर्थः । समाधत्ते– **नेति** । **सम्यक्त्वेति**– सम्यक्क्रिया सैव या ज्ञानसहचरितेति सम्यक्क्रियाशरीरनिर्वाहकत्व ज्ञाने इत्येवंग्राहिनयेनेत्यर्थ. । **एतेनेत्य**स्या**दुर्वचत्वा**दित्यनेन **सुवच एवे**त्यनेन चान्वय. । **णिच्छयणयस्स** इति " निश्चयनयस्य चरणस्यावघातेन ज्ञान दर्शनवधोऽपि " इति संस्कृतम् । **ज्ञानेति**– ज्ञाननाशव्याप्यो यो नाशस्तत्प्रतियोगित्व चरणस्येत्येवं ग्राहको य शुद्धनयो निश्चयनयस्तेनेत्यर्थः । **अदुर्वचत्वात्** सुवचत्वात् । **व्यापारेति**– व्यापार व्यापारिणोर्मध्ये व्यापारस्य प्राधान्यमित्येव ग्राहको य. क्रियानयस्तेनेत्यर्थ । **दर्शनेति**– क्रियादर्शनयोर्मध्ये दर्शनं प्रधानमित्येवं ग्राहकज्ञाननयेनेत्यर्थः, तथा च केनचिन्नयेन ज्ञानस्य प्राधान्य केनचिन्नयेन चरणस्य प्राधान्यमित्येकस्यैव प्राधान्यमित्यस्य नियन्तुमशक्यत्वेन तयोः समुच्चय एव इति भाव. । ज्ञानस्य प्राधान्ये पङ्गुदृष्टान्त-

प्रधानग्राहकज्ञाननयेन ज्ञानोत्कर्षः सुवच एव ॥ ११ ॥ १२ ॥ दृष्टान्तौ चात्र पङ्ग्वन्धौ, तयोरन्यतरस्याकिञ्चित्करत्वेन संयोगपक्ष एव श्रेयान्, न च कुर्वद्रूपत्वनये शैलेश्यन्तक्षणभाविचारित्रमेव मुक्तिरूपफलोपधायकत्वेन विशिष्यत इत्यपि शङ्कनीयम्, कुर्वद्रूपलक्षणस्य सहकारिसमवधाननियतत्वेन तत्कालीनज्ञानक्षणस्यापि मुक्तिहेतुत्वात् । पुञ्जात् पुञ्जोत्पत्तिपक्षे बीजपाथःपवनादीनामेकत्रोपादानत्वेनान्यत्र च निमित्तत्वेन हेतुत्वमिति चारित्रक्षणस्य मुक्तावुपादानत्वेन हेतुत्वाद् विशेष इत्यप्यसाम्प्रतम्, ज्ञानादिसंवलितमुक्तिक्षणे संवलितक्षणस्यैव हेतुत्वात् तच्चातद्व्यावृत्त्या शक्तिविशेषादिना वेत्यन्यदेतत्, कथं तर्हि " सद्दुज्जुसुआणं पुण निव्वाणं संजमो चेव " [ ] इति निर्युक्तिवचनश्रद्धानवतां तेषां कुर्वद्रूपक्षणावगाहित्वात् तत्र चैकान्तस्यानुपदमेव निरस्तत्वादित्याशङ्कनीयम्, एकैकस्य शतभेदत्वेना-

---

चरणस्य प्राधान्येऽन्धो दृष्टान्त इत्याह- **दृष्टान्तौ चात्र पङ्ग्वन्धाविति** । ज्ञानवानपि पङ्गुर्गन्तव्यग्राममार्गं पश्यन्नप्येको गन्तव्यग्रामं नासादयति, क्रियावानपि अन्धो गन्तव्यग्राममार्गादर्शनादभीष्टं ग्रामं न शक्नोति प्राप्तुं किन्तु मिलितौ तावभीष्टदेशं प्राप्नुत एवेत्येवं संयुक्ते ज्ञानचरणे मोक्षं जनयत इति समुच्चयवाद एवादरणीय इत्याह- **तयोरिति**- पङ्ग्वन्धयोरित्यर्थः । **न चेत्यस्य शङ्कनीयमित्यनेनान्वयः** । **कुर्वद्रूपत्वनय** इति- अङ्कुरादिकं प्रति बीजादीनां बीजत्वादिना न कारणत्वं किन्त्वङ्कुरकुर्वद्रूपत्वेन बीजादीनामङ्कुरादिकं प्रति कारणत्वम्, धूमकुर्वद्रूपत्वेन वह्न्यादीनां धूमं प्रति कारणत्वमित्येवं तत् तत् कार्यं प्रति तत्तत्कार्यकुर्वद्रूपत्वेन तत्तत्कार्यकारणानां कारणत्वमित्यभ्युपगन्तृनय इत्यर्थः । निषेधे हेतुमाह- **कुर्वद्रूपक्षणस्येति** । **तत्कालीनेति**- शैलेश्यन्त्यक्षणभाविचारित्रकालीनेत्यर्थः । चारित्रस्य प्रकारान्तरेण ज्ञानाद् विशेषस्योपदर्शनपुरस्सरमयुक्तत्वमावेदयति- **पुञ्जात् पुञ्जोत्पत्तिपक्ष** इति- पूर्वक्षणवर्तिरूप-रस गन्ध-स्पर्शाणुपुञ्जादुत्तरक्षणे रूप-रस-गन्ध-स्पर्शाणुपुञ्जमुत्पद्यते, तत्र पूर्वक्षणवर्तिरूपाणोरुत्तरक्षणवर्तिरूपाणु प्रत्युपादानविधया कारणत्वम्, रसाण्वादीनां तत्र सहकारिविधया कारणत्वम्, एव पूर्ववर्तिरसाद्यणूनामुत्तरक्षणवर्तिरसाद्यणून् प्रत्युपादानविधया कारणत्वं रूपादीनां च तत्र सहकारिविधया कारणत्वमित्यभ्युपगन्तृमते इत्यर्थः । **बीजेति**- शाल्यङ्कुरान् प्रति शालिबीजादय उपादानविधया कारण पाथः-पवनादयश्च तत्र सहकारिविधया कारणम्, एवं पाथः-पवनादीन् प्रति पाथ.पवनादय उपादानविधया कारणं बीजादयश्च सहकारिविधया निमित्तत्वेन कारणमित्येवं बीज-पाथः-पवनादीनामेकत्रोपादानत्वेनान्यत्र च निमित्तत्वेन कारणत्वमिति बोध्यम् । **इति** कार्यविशेषापेक्षयोपादानत्व-निमित्तत्वव्यवस्थितौ । **विशेष.** निमित्तत्वेन मोक्षं प्रति कारणात् तत्त्वज्ञानाच्चारित्रक्षणस्य वैलक्षण्यम् । **असाम्प्रतम्** अयुक्तम् । तत्र हेतुमाह- **ज्ञानादीति**- मुक्तिक्षणे ज्ञानादिकमपि विद्यत इति पुञ्जात् पुञ्जोत्पत्तिपक्षे ज्ञानादिसंवलितमुक्तिक्षणात्मकपुञ्जे ज्ञान-दर्शन-चारित्रपुञ्जस्यैव कारणत्वात् तत्रोक्तविशेषस्य विनिगन्तुमशक्यत्वाच्चारित्रस्यैव हेतुत्वमित्येतन्नोपपद्यत इत्यर्थः । ननु ज्ञान-चारित्रादिसमुच्चयवृत्त्येकधर्माभावात् कथं संवलितस्यैव कारणत्वमित्यत आह- **तच्चेति**- संवलितक्षणस्य कारणत्व चेत्यर्थः । **अतद्व्यावृत्त्या** ज्ञानभिन्नत्वे सति दर्शनभिन्नत्वे सति चारित्रभिन्नो यस्तद्भिन्नत्वेन । **शक्तिविशेषादिना** ज्ञान-दर्शन-चारित्रेषु संवलितेष्वेव मोक्षानुकूलैकशक्तिविशेषः कल्प्यते, धर्मान्तरमेव वा किञ्चित् कल्प्यते, तद्रूपेण एवं चातद्व्यावृत्तेरन्यतमत्वस्वरूपायाः प्रत्येकमपि ज्ञानादौ सत्त्वेनैकैकस्मादपि ज्ञानादितो न मुक्तिप्रसङ्गः । **अन्यदेतत्** वादान्तरम् । "**कथं तर्हि**" इत्यस्य स्थाने "न चैवं कथं तर्हि" इति पाठो युक्त., "**निर्युक्तिवचनश्रद्धावतां**" इत्यस्य स्थाने च "निर्युक्तिवचनं, तच्छ्रद्धानवतां" इति पाठो युक्तः । न **चेत्यस्याशङ्कनीयमित्यनेनान्वयः** । **कथं तर्हीत्यस्य निर्युक्तिवचनमित्यनेनान्वयः** । **सद्दुज्जु०** इति-" शब्दर्जुसूत्राणां पुन. निर्वाणं संयमादेव " इति संस्कृतम्, एतद्वचनं पुञ्जात् पुञ्जोत्पत्तिरित्यभ्युपगन्तृऋजुसूत्रनये मुक्तिं प्रत्येकान्तेन संयमस्यैव कारणत्वमवबोधयति, तत् कथं सङ्गतमित्याक्षेपः । तत्र हेतुमाह- **तच्छ्रद्धानवतामिति**- उक्तनिर्युक्तिवचनश्रद्धानवतामित्यर्थ । **तेषाम्** ऋजुसूत्रनयानुसारिणाम् । **कुर्वद्रूपक्षणावगाहित्वात्** उत्तरोत्तरक्षणं प्रति पूर्वपूर्वक्षणस्य तत्तत्क्षणकुर्वद्रूपक्षणत्वत्वेन कारणत्वस्याभ्युपगन्तृत्वात् । **तत्र च** निरुक्तपक्षे च । **एकान्तस्य** मुक्तिं प्रति संयमस्यैव कारणत्वमित्येकान्तस्य । **अनुपदमेव** अनन्तरमेव । **निरस्तत्वात्** 'ज्ञानादि-

क्षेपककारणत्वरूपस्थूलापेक्षयैव तदेकान्ताभिधानोपपत्तेः, अत एव शैलेश्यन्तक्षणभाविधर्महेतुत्वमिति विशुद्धैवम्भूताभिप्रायेणैवास्माभिस्तत्र तत्र समर्थितम् । यत् तु मिथ्यादृशो मिथ्याज्ञानोन्मूलनद्वारा तत्त्वज्ञानमेव मुक्तिहेतुरिति मन्यन्ते ते मिथ्याज्ञानोन्मूलनेऽपि तत्तन्मनःप्रणिधानरूपायाः क्रियाया हेतुत्वं कथं न पश्यन्ति, मिथ्याज्ञानवासनोन्मूलनत एव कर्मनिरपेक्षं तत्त्वज्ञानं हेतुरिति चेत् ? तर्ह्यदृष्टपरिकल्पनमेतत् मिथ्याज्ञानवासनायाः स्मृत्येकनाश्यत्वात् तत्त्वज्ञानस्य तन्नाशकताया लोकेऽदृष्टत्वात्, अदृष्टकल्पने वाऽऽगमानुसारेण ज्ञानवत् कर्मणोऽपि मलक्षयद्वारा मुक्तिहेतुत्वकल्पनमेव न्यायः, तथा चाभ्यधादासुरोऽपि वासिष्ठे—

" तन्दुलस्य यथा चर्म यथा ताम्रस्य कालिका । नश्यति क्रियया पुत्र ! पुरुषस्य तथा मलम् ॥१॥ "

[ ] इत्यादि ।

किञ्च, विहितत्वेन पुण्यपापक्षयान्यतरहेतुत्वव्याप्तेस्तत्त्वज्ञानस्य कर्मतुल्यत्वम्, न च चिकित्सादावेव व्यभिचारः, मुमुक्षुविहितत्वेन व्याप्तौ व्यभिचाराभावादिति पुष्टिशुद्ध्यनुबन्धद्वारा ज्ञान-कर्मणोर्मुक्तौ तुल्यवदेव हेतुतया समुच्चयपक्ष एव अनाविल इति सिद्धम् ॥ * ॥

संवलितमुक्तिक्षणे ' इत्यादिना खण्डितत्वात् । निरासे हेतुमाह- **एकैकस्येति**- ऋजुसूत्रादेकैकनयस्येत्यर्थ. । **तदेकान्ताभिधानेति**- सद्दुज्जुसुआणमित्येकान्तसंयमकारणत्वप्रतिपादकवचनेत्यर्थः । **अत एवेत्यस्य समर्थितमित्यनेनान्वयः**, शैलेश्यन्तक्षणभावी यो धर्मस्तस्यैव मुक्तिं प्रति कारणत्वमित्यर्थः । **अस्माभिः** यशोविजयोपाध्यायै. । **तत्र तत्र** स्वनिर्मितानेकग्रन्थेषु । मिथ्याज्ञानोन्मूलनद्वारा तत्त्वज्ञानमेवैकं मोक्षजनकमित्येकान्तवादिना केषाञ्चिन्मतमुपन्यस्य दूषयति- **ये त्विति** । " **यत् तु** " इत्यस्य स्थाने " ये तु " इति पाठो युक्तः, अस्य **मन्यन्त** इत्यनेनान्वय. । भवतु मिथ्याज्ञानोन्मूलनद्वारा तत्त्वज्ञानं मोक्षहेतुः किन्तु मिथ्याज्ञानोन्मूलने यथा तत्त्वज्ञान हेतुस्तथा तत्तन्मनःप्रणिधानरूपा क्रियाऽपि हेतुरिति तत्तन्मनःप्रणिधानक्रियाऽपि मिथ्याज्ञानोन्मूलनद्वारा मोक्षहेतुर्भवदिति तदनालोचन तेषामज्ञानविजृम्भितमेवेति तन्मतदूषणमुपदर्शयति- **ते** इति- अस्य **कथं न पश्यन्तीत्यनेनान्वयः** । ननु मिथ्याज्ञानोन्मूलनद्वारा तत्त्वज्ञान मोक्षहेतुरित्येव नेष्यते, किन्तु मिथ्याज्ञानजन्यवासनोन्मूलनद्वारा तत्त्वज्ञान मोक्षहेतुरिति तत्र नोक्तदोष इति पराकूत मुद्भाव्य दूषयति- **मिथ्याज्ञानवासनोन्मूलनत एवेति** मिथ्याज्ञानजन्यवासनाया भावनाख्यसंस्काररूपायास्तत्त्वज्ञानाजन्यत्वाद् भावनात्वावच्छिन्नप्रतियोगिताकध्वंसत्वावच्छिन्नं प्रति स्मृतित्वावच्छिन्नस्यैव कारणत्वस्य दर्शनबलाद् व्यवस्थिते., तत्त्वज्ञानस्य तु मिथ्याज्ञानजन्यवासनाध्वंसजनकत्व लोके न दृष्टमिति तथाकल्पनाऽदृष्टचरी प्रामाणिकैरुपेक्ष्यैवेति दूषण दर्शयति- **तर्हीति** । **एतत्** मिथ्याज्ञानवासनोन्मूलनत एव कर्मनिरपेक्षं तत्त्वज्ञानं मोक्षहेतुरिति कल्पनम् । तत्कल्पनस्यादृष्टपरिकल्पनत्वे हेतुमाह- **मिथ्याज्ञानेति** । **स्मृत्येकनाश्यत्वात्** स्मृतिमात्रजन्यनाशप्रतियोगित्वात् । **तन्नाशकतायाः** मिथ्याज्ञानजन्यवासनानाशजनकतायाः । ननु लोकेऽदृष्टमपि शास्त्रानुसारेण तत्त्वज्ञानस्य मिथ्याज्ञानजन्यवासनोन्मूलकत्व मिथ्याज्ञानजन्यवासनोन्मूलनद्वारा मोक्षजनकत्वं च परिकल्प्यते आगमवचनप्रामाण्यादित्यत आह- **अदृष्टकल्पने वेति** । कर्मणो मलक्षयहेतुत्वे वासिष्ठवचनं प्रमाणयति- **तथा चेति** । **तण्डुलस्येति** पद्यं स्पष्टम् । अपि च तत्त्वज्ञान पुण्यपापक्षयाऽन्यतरकारण विहितत्वात् कर्मवदित्यनुमानेन पापक्षयजनकतया सिद्धस्य तत्त्वज्ञानस्य तद्द्वारैव मोक्षजनकत्वमिति पुष्टिशुद्ध्यनुबन्धद्वारा मुक्तौ तुल्यवदेव हेतुत्वमिति समुच्चयपक्ष एव दोषकलङ्करहित इत्याह- **किञ्चेति** । ननु विहितत्वं चिकित्सादावस्ति न च तत्र पुण्यपापक्षयान्यतरजनकत्वमिति व्यभिचारिणा विहितत्वहेतुना न तत्त्वज्ञानस्य पुण्यपापक्षयान्यतरहेतुत्वं सिद्ध्यतीत्याशङ्क्य- प्रतिक्षिपति- **न चेति** । प्रतिक्षेपहेतुमुपदर्शयति- **मुमुक्षुविहितत्वेनेति**- तथा च मुमुक्षुविहितत्वमेव हेतुः, तस्याव्यभिचरितत्वात् प्रकृतसाध्यसाधकत्व स्यादेवेति । समुच्चयपक्षमुपसंहरन् ग्रन्थ-

नयोपदेशटीकेयं नयामृततरङ्गिणी । सेव्यताममृतप्राप्त्यै मिथ्यात्वविषतापहृत् ॥ १ ॥

सवलविषयसन्निविष्टधर्मव्यतिकर-सङ्करशङ्कयाऽऽविलानाम् ।
जयति भगवतो नयोपदेशः, पटुरखिलाङ्गभृतां हितं विधातुम् ॥ २ ॥

इह खलु न हि नः स्मयो न रोषो, न च परबुद्धिपराभवाभिलाषः ।
अपि तु पितुरिव प्रजाहितस्य प्रथमगुरोर्वचनादरो निमित्तम् ॥ ३ ॥

---

समाप्तिं विदधाति- इतीति- एताभिरुपपत्तिभिरित्यर्थः । अनाविलः दोषकलङ्करहितः । अन्ते इति- शब्दः सिद्धमिति च शब्दो ग्रन्थसमाप्तिसूचकः ॥

## ॥ अथ प्रशस्तिः ॥

पञ्चभिः श्लोकैर्नयोपदेशटीका समूला स्तौति- नयोपदेशटीकेयमिति- मिथ्यात्वविषतापहृद् नयामृततरङ्गिणीयं नयोपदेशटीकाऽमृतप्राप्त्यै सेव्यतामित्यन्वय. । आकल्पं जगति प्रसिद्ध्यै नयामृततरङ्गिणीत्यन्वर्थसंज्ञाभिधानम्, नान्या नयोपदेशटीकाऽन्वर्थनयामृततरङ्गिणीनाम्नी भवितुमर्हतीत्यवगतये- इयमिति । नामवत. स्वरूपावगतये- नयोपदेशटीकेति । यत इयं मिथ्यात्वविषतापहृत् ततोऽमृतप्राप्त्यै सेव्यतामित्येवं यत्तच्छब्दोपादानप्रयोजनमवसेयम्, मिथ्यात्वविषतापहृदित्यस्य मिथ्यात्वमेकान्ततत्त्वाभ्युपगमस्तच्छ्रद्धानं वा, तदेव विषं तज्जन्यो यस्तापो रागद्वेषादिलक्षणस्त हरतीति तादृशतापहारिणी, न चेयं स्वरूपसती स्वरूपमात्रेण ज्ञाता वा मिथ्यात्वविषतापहारिणी किन्तु स्वजन्यस्वार्थतत्त्वज्ञानद्वारेति तत्त्वज्ञानजननीत्यपि ततो लभ्यते इत्यर्थः । नयामृततरङ्गिणीत्यस्य नय एवामृतं तस्य तरङ्ग उच्छलत्प्रवाहकल्लोलस्तद्वती, नयनदीति यावत्, गङ्गा-यमुनाद्या नद्यो यथा जलसमुद्रमाविशन्ति तथेयमपि नदी समयसमुद्रादागता समयसमुद्रमाविशतीति समयसमुद्रान्तर्गततत्त्वरत्नसङ्ग्रहकारिणी, तयाऽनया नद्या मनीषाप्रवहणमारुह्य बुद्धवराः समयसमुद्रमाविशन्तीत्यर्थः । नयोपदेशटीकेत्यस्यार्थ. स्पष्ट एव । अमृतप्राप्त्यै अमृतस्य- मोक्षस्य नित्यानन्दात्मकात्मस्वरूपस्य प्राप्त्यै, यद्यपि नित्यानन्दात्मकमोक्षस्वरूपमात्मनः सर्वदैव प्राप्तं तथापि कर्मपटलावृतत्वादप्राप्तमिव भवति, तत्त्वज्ञानेन कर्ममलपटलापगमे तु स्वयं प्रकाशस्वरूपमाविर्भवति ततः प्राप्तिरेवास्य भवति न तूत्पत्तिः, यथा च जलनदीतो जलप्राप्तिरवश्यं भवति तथाऽमृतत्वेन नयामृत-मोक्षात्मकामृतयोरैक्याध्यवसायान्नयामृतनदीतोऽवश्यं मोक्षात्मकामृतप्राप्तिरिति तदर्थमित्यर्थ. । सेव्यतामिति- नहि जलनद्या दूरतो दर्शनमात्रेण जलप्राप्तिः किन्तु तत्तीरादिगमन-तदवगाहनादिलक्षणसेवया तथा नयामृततरङ्गिण्या भूयोभूयस्तदर्थावगमलक्षणसेवयेति तदात्मकसेवाकर्म क्रियतामित्यर्थः ॥ १ ॥

सवलेति- भगवतो नयोपदेशः सवलविषयसन्निविष्टधर्मव्यतिकरसंकरशङ्कयाऽऽविलानामखिलाङ्गभृतां हितं विधातुं पटुर्जयतीत्यर्थ. । भगवतो ज्ञानातिशयादिशालिनो जिनस्य, नयोपदेशः, सवलोऽनन्तधर्मात्मको यो विषयः, तत्सन्निविष्टाः तत्स्वरूपप्रविष्टा ये धर्मास्तेषां व्यतिकर.- यद्रूपेण सत्त्वं तद्रूपेणासत्त्वं यद्रूपेण चासत्त्वं तद्रूपेण सत्त्वमित्येवं विनिमयः, यद्रूपेण सत्त्व तद्रूपेणैव सत्त्वमसत्त्वं चेत्येवं सङ्करस्तयोः शङ्कया, आविलानां- व्याप्तानाम्, अखिलाङ्गभृतां सकलशरीरिणाम्, हितम् इष्टम्, विधातुं कर्तुम्, पटुः समर्थः, जयति सर्वोत्कर्षेण वर्तते इत्यर्थः ॥ २ ॥

इहेति- इह नयामृततरङ्गिणीकरणे, खलु निश्चयेन, नः अस्माकम्, स्मयः स्वमतोच्चत्वाभिमान, नहि निमित्तं नैव कारणम्, रोषः परं प्रति क्रोधः, न निमित्तम्, परबुद्धिपराभिलाषः परकीयमत्यप्रामाण्यज्ञापनेच्छा, न च निमित्तं नैव कारणम्, तर्हि नयामृततरङ्गिणीकरणे किं निमित्तमिति पृच्छति- अपि त्विति । उत्तरयति- पितुरिवेति- सन्तानहितकारिण· पितुर्जनकस्यैव, प्रजाहितकारिणः, प्रथमगुरोः प्रथमतो धर्मदेशनादीक्षितस्य भगवतः श्रीऋषभदेवस्य प्रथमतीर्थङ्करस्य, अथवा सर्वेऽपि तीर्थङ्कराः स्वस्वतीर्थप्रवर्तका गुरव एवेति प्रथमगुरोरित्यस्य वर्तमानतीर्थाधिपतेश्चरमतीर्थङ्करस्य श्रीमहावीरस्येत्यप्यर्थ. सम्भवति, वचनादरः वचनस्य- स्याद्वादराद्धान्तस्य, आदरः- सम्यक्तया श्रद्धानम्, निमित्तं कारणमित्यर्थः, सन्निमित्तकत्वादियं नयामृततरङ्गिणी सर्वैरप्यवगाह्या इति भावः ॥ ३ ॥

न च नयवचनेषु पक्षपातः, क्वचन समाकलितप्रमाणदृष्टेः ।
अभिमतविषये हि गोपनीया, अनभिमते यदमी विगोपनीयाः ॥ ४ ॥
व्रजति फलवति प्रमाणवाक्ये, नयवचनं बहुरूपभङ्गभावम् ।
तदिह सविधमोहि मा स्पृशेति, छलवदिदं न विशङ्कनीयमार्यैः ॥ ५ ॥
प्रथमत इह लौकिकोऽर्थबोधस्तदनु नयात्मक एव मध्यमः स्यात् ।
तदुपरि परितः प्रसर्पिभङ्गव्यतिकरसंवलितः प्रमाणबोधः ॥ ६ ॥
श्रुतमय उदितः किलाद्यबोधो, मतहतकृन्नयचिन्तया द्वितीयः ।
स्वमतमदहरः परस्तृतीयः, सकलजगद्धितकाम्यया पवित्रः ॥ ७ ॥

**न चेति** । समाकलिता– समीचीनतयाऽऽलोचिता, प्रमाणदृष्टिर्येन स समाकलितप्रमाणदृष्टिस्तस्य **समाकलितप्रमाणदृष्टेः**, मम, **नयवचनेषु** नयात्मकवचनेषु नयप्रभववचनेषु वा मध्ये, **क्वचन** कस्मिन्नपि नयवचने, **पक्षपातः** अयमेव इत्येवमभिनिवेशः, **न च** नैव, **हि** यत., **अमी** नयाः, **अभिमतविषये** यद् वस्तु यदपेक्षया यथाभूतमभिमतं तथाभूते वस्तुनि, **गोपनीयाः** रक्षणीयाः, एव **यत्** यस्मात्, **अभिमते** यद् वस्तु यद्रूपेणाभिमतं न भवति तथाभूते वस्तुनि, **विगोपनीयाः** अप्रकटनीया इत्यर्थः ॥ ४ ॥

**व्रजतीति** । **फलवति** निराकाङ्क्षसम्पूर्णार्थावबोधकत्वात् संशय-विपर्ययज्ञाननिवर्तनलक्षणफलशालिनि । **प्रमाणवाक्ये** स्यादस्त्येव घटः स्यान्नास्त्येव घट इति सप्तभङ्गात्मकप्रमाणवाक्ये । **नयवचनम्** अस्तित्वाद्येकधर्मप्रतिपादकं सङ्ग्रहादिनयसमुत्थवचनं नयात्मकवचनं वा । **बहुरूपभङ्गभावम्** अनेकप्रकारभङ्गता व्रजति, प्रत्येकनयप्रवृत्तवचनाना नयात्मकवचनानां वा परस्परविभिन्नभङ्गरूपतागमन युज्यत एव । **तत्** तस्मात् । **इह** नयनिरूपणे । "**सविधमोहि**" इत्यस्य स्थाने "सविधमेहि" इति पाठो युक्तः, **सविधं** निकटम्, **एहि** आगच्छ । **मा स्पृश** मत्स्पर्शनं न कुरु । **इति** एवंस्वरूपं, वचनम् । **छलवत्** यथा छलं तथा, यो हि यन्निकटमागच्छति, स त स्पृशत्यपि, अतिसमीपागमनस्य तत्संयोगजनकत्वात्, तथा चाशक्यार्थप्रतिपादकत्वाद् भवति सविधमेहि मा स्पृशेति वचनं छलम् । **एवं** छलस्वरूपम् । **इदम्** अस्ति घटो नास्ति घट इति नयवचनम् । **आर्यैः** निर्मलमतिभिः । **न शङ्कनीयम्** एकनयसमुत्थं किञ्चिदपेक्षयाऽस्ति घट इति वचनम्, अपरनयसमुत्थ निमित्तान्तरापेक्षया नास्ति घट इति, तयोर्द्वयोरपि परस्पराविरुद्धसम्भवदर्थकत्वेन छलत्वाभावादित्यर्थः ॥ ५ ॥

इत्थं पञ्चभिः पद्यैः समूलां नयामृततरङ्गिणीं स्तुत्वा तज्जन्यबोधवैचित्र्यमुपदर्शयति– **प्रथमत इहेति** । **प्रथमतः** निमित्तभेदालोचनतः प्रागेव । **इह** शब्दव्यवहारे । **लौकिकः** आपामरलोकसम्बन्धी आकाङ्क्षाऽऽसत्ति योग्यताज्ञानादिघटितसामग्रीप्रभवः । **अर्थबोधः** पदार्थद्वयान्वयबोधः । **तदनु** तदनन्तरम् । **नयात्मक एव** निमित्तभेदापेक्षयैकैकधर्मप्रकारकघटाद्यर्थविशेष्यकनयात्मकबोध एव । **मध्यमः स्यात्** लौकिकबोध-प्रमाणबोधयोर्मध्यभावी बोधो भवेत्, तथा च लौकिकबोधोऽस्तित्वप्रकारकघटविशेष्यकः नयात्मकबोधश्च स्वद्रव्याद्यपेक्षयाऽस्तित्वप्रकारकघटविशेष्यक । **तदुपरि** नयात्मकबोधानन्तरम् । **परितः** सर्वतोभावेन, स्वस्वविषयधर्मावस्थाननिमित्तापेक्षाभेदव्यापनेनेति यावत् । प्रसर्पिणः– प्रवर्तमानाः, भङ्गाः– स्यादस्त्येव घटः, स्यान्नास्त्येव घट इत्यादयस्तेषा व्यतिकरः– परस्परसाकाङ्क्षभावेनैकवाक्यतालक्षणः सम्बन्धः, तेन संवलितः– जन्यजनकभावसम्बन्धेन प्रतिबद्धः । **प्रमाणबोधः** प्रमाणात्मकबोधः, सप्तभङ्गात्मकमहावाक्यप्रभवः प्रमाणात्मकतृतीयबोध इत्यर्थः ॥ ६ ॥

**श्रुतमय इति**– यथा यथा श्रूयते शब्दस्तथैवार्थबोधो भवतीति श्रुतमनतिक्रम्य जायमानत्वाच्छ्रुतमयः । **किल** इतीत्यैतिह्ये, एव वृद्धपरम्परयाऽवगम्यते । **आद्यबोधो** लौकिकोऽर्थबोधः । **मतहतकृदि**त्यस्य स्थाने मतहृतिकृदिति मतशतकृदिति वा पाठो भवितुमर्हति प्रथमपाठे एको नयः स्वप्रतिपक्षनयमत विनाशयतीति मतहृतिकृदिति द्वितीयपाठे

त्रयमिदधिकृत्य लोकलोकोत्तरपथभङ्गभयं न नाम शब्दात् ।
गुरुमतमिव चोपपत्तिकार्थे नहि परिपन्थि विरम्य बोधकत्वम् ॥ ८ ॥
अपि च नियतकृत् स्वजन्यबोधाविषमधियो विरहोऽत्र शाब्दबोधे ।
सति नियतमनुयायिनि तत्परत्वं तदिह मतस्तदतज्ज्ञबोधभेदः ॥ ९ ॥
न च शुकवचनादतत्परादप्यधिगमदर्शनतः प्रतीममेतत् ।
श्रुतमयमपहाय बोधिभागे, त इह तत्परताधियोऽनपेक्षाः ॥ १० ॥

यावन्तो नयास्तावन्ति मतानीति शतपदं सम्भवद्बहुत्वसङ्ख्योपलक्षकं तेनानल्पसंख्यकमतकृदित्यर्थः । एवम्भूतनयविचारणया **द्वितीयो** नयात्मकबोधः, **स्वमतमदहरः** कस्यचिज्जैनस्य इदमेव स्वमतमित्याकारको यो मदस्तस्य विनाशकः, सर्वे-नयमयस्याद्वादे सर्वेषामपि मताना कथञ्चित् स्वमतत्वात् । **परः** उत्कृष्टः । **तृतीयः** सप्तभङ्ग्यात्मकमहावाक्यजन्यः प्रमाण-बोधः । "**काम्यया पवित्रः**" इत्यस्य स्थाने "कामनापवित्रः" पाठो युक्तः, अशेषस्य जगतो हितं भवत्वित्या-कारिका या सकलजगद्धितकामना तया पवित्र इत्यर्थः ॥ ७ ॥

**त्रयमिदमधिकृत्येति**- निरुक्तक्रमिकबोधत्रयमाश्रित्येत्यर्थः । **लोक-लोकोत्तरपथभङ्गभयं** लौकिकार्थबोधतो लौकिक-मार्गस्य लौकिकव्यवहारस्य नयप्रमाणबोधाभ्यां लोकोत्तरमार्गस्य लोकोत्तरव्यवहारस्य चोपपत्तिरिति, **शब्दाच्छब्दप्रमाणात्**, **नामेति** कोमलामन्त्रणे, **न** नैव, लोकलोकोत्तरपथभङ्गभयं भवतीत्यर्थः । शब्द-ज्ञानकर्मणा विरम्य व्यापाराभावादेकस्माच्छब्दात् क्रमेण निरुक्तबोधत्रयं न सम्भवतीत्याशङ्कां मनसिकृत्य तदपनोदनायाह- **गुरुमतमिवेति**- कारकस्य क्रियया सहैवान्वय-बोध इति नियमान्नीलं घटमानयेति वाक्यात् प्रथमतो नीलकर्मकानयनघटकर्मकानयनयोरेव बोधः, ततो घटभिन्नस्य नीलस्य निलाभिन्नस्य घटस्य चानयन नात्र संबोध्यपुरुषकर्तृकमिति विचारणासहकृतादुक्तवाक्यादेव नीलाभिन्नघटानयनबोधः पार्ष्ठिक इत्येवं क्रमिकबोधद्वयाभ्युपगन्तृ प्राभाकरमते सोपपत्तिके यथा शब्दस्य विरम्य बोधकत्वं **परिपन्थि** प्रतिबन्धकं न भवति तथा सोपपत्तिकार्थे प्रकृतेऽपीत्यर्थः ॥ ८ ॥

**अपि चेति**। "**विषमधियो**" इत्यस्य स्थाने "विषयधियो" इति पाठः सम्यग् । **अत्र** शाब्दबोधविशेषविचारे, **शाब्दबोधे** शब्दजन्यान्वयबोधे । **स्वजन्येति**- स्वजन्यः- शब्दजन्यो यो बोधस्तस्य यो विषयो न भवति स तदविषय-स्तस्य धिय.- बुद्धेः, विरहो **नियतकृत्** नियतेन क्रियत इति नियतकृदिति व्युत्पत्त्या नियतजन्य इत्यर्थः । किं तन्नियतं तत्कृतो निरुक्तविरह इत्यपेक्षायामाह- **सतीति** । **अनुयायिनि** अन्वययोग्ये । **सति** सम्भवति सति, एतेन यस्यार्थ-स्यान्वयो न सम्भवति तत्परत्वं नियत न भवतीत्यावेदितम् । **तत्परत्वं** शब्दस्य तदर्थतात्पर्यत्वम्, **नियतं** नियामकम्, यस्य शब्दस्य यस्मिन्नर्थे तात्पर्यं सोऽर्थः स्वजन्यबोधस्य शब्दजन्योपस्थित्यात्मकबोधस्याविषयोऽपि शाब्दबोधे भासत इति शाब्दबोधे विषयप्रतिभासनियामकं भवति तत्परत्वम्, **तत्** तस्मात् । **इह** शाब्दबोधे । **तदतज्ज्ञबोधभेदः** तात्पर्यज्ञ-तात्पर्यानभिज्ञपुरुषयोः शाब्दबोधभेदः । **मतः** स्वीकृत इत्यर्थः ॥ ९ ॥

ननु शुकस्य पक्षिविशेषस्येदं वाक्यममुमर्थं बोधयत्वित्याकारकतात्पर्यस्याभावेन तज्ज्ञानस्य शुकोच्चरितवाक्यं शृण्वतः पुरुषस्याभावात् तदर्थतात्पर्यविकलादपि शुकोच्चरितवाक्याच्छ्रोतॄणा तत्तद्भिन्नार्थविषयकशाब्दबोधस्योत्पादेन व्यभिचारात् तत्परत्वं शाब्दबोधनियामकं न भवतीत्याशङ्क्य प्रतिक्षिपति- **न चेति** । "**प्रतीममेतत्**" इत्यस्य स्थाने "प्रतीपमेतत्" इति पाठो युक्तः । **अतत्परादपि** अभिमतार्थविषयकतात्पर्यरहितादपि । **शुकवचनात्** शुकोच्चरितवाक्यात् । **अधिगमदर्शनतः** तत्तदर्थविषयकशाब्दबोधस्योत्पाददर्शनेन, व्यतिरेकव्यभिचारात्, **एतत्** तत्परत्वस्य तत्तदर्थविषयकशाब्दबोधनियामकत्वपरि-कल्पनम्, **प्रतीपं** विरुद्धमिति न चेत्यर्थः । निषेधे हेतुमाह- **श्रुतमयमपहायेति**- यथाश्रुतार्थविषयकबोधं परित्यज्येत्यर्थः, तत्तत्पदजन्योपस्थिततत्तत्तदर्थविषयकशाब्दबोधस्य तात्पर्यग्रहमन्तरेण भावेन यथाश्रुतार्थस्य शाब्दबोधे भाने तत्परताग्रहस्या नपेक्षणेऽपीत्यर्थः । **बोधिभागे** यदपेक्षानिमित्तादिमानेन शाब्दबोधः सम्यक्त्वरूपतामञ्चति तदंशे । **ते** शुकवचनश्रोतारः । **इह** शाब्दबोधे । **तत्परताधियः** तदंशे तत्परत्वज्ञानस्य । **अनपेक्षाः** अपेक्षारहिता न भवन्तीत्यर्थः ॥ १० ॥

वक्तुं तात्पर्यमज्ञात्वाप्येतदुन्नीय वास्तवम्। प्रामाण्यमप्रमाणेऽपि, वाक्ये सम्यग्दृशां मतम् ॥ ११ ॥
सम्यक्श्रुतस्य मिथ्यात्वं मिथ्यादृष्टिपरिग्रहात्। मिथ्याश्रुतस्य सम्यक्त्वं सम्यग्दृष्टिग्रहादतः ॥ १२ ॥
लौकिकान्यपि वाक्यानि प्रमाणानि श्रुतार्थतः। तात्पर्यार्थे प्रमाणं तु सप्तभङ्गात्मकं वचः ॥ १३ ॥
नाप्रमाणं प्रमाणं वा स्वतः किन्त्वर्थतः श्रुतम्। इति यत् कल्पभाष्योक्तं तदित्थमुपपद्यते ॥ १४ ॥
तात्पर्यं खल्वपेक्षा नय इति च समं स्थापितं शास्त्रगर्भे, तत्कल्लोलैर्विचित्रैः समयजलनिधौ जायते चिद्विवर्त्तः।
यत्त्वेकं निस्तरङ्गं परमसुखमयं ब्रह्म सर्वातिशायि, स्थायिज्ञानस्वभावं तदिह दहतु वोऽनल्पसङ्कल्पजालम्॥१५
निक्षेपा वा नया वा तदुभयजनिताः सप्तभङ्गात्मका वा,
शृङ्गाराः सार्ववाचः परगुणरचनाजातरोचिष्णुभावाः।

ननु शुकवचने वक्तुः शुकस्य तात्पर्यं नास्तीति कस्य तात्पर्यस्य ज्ञानं तत्र कारणं स्यादित्यत आह- **वक्तुरिति**। "**वक्तुं तात्पर्यं**" इत्यस्य स्थाने "वक्तुस्तात्पर्य" इति पाठो युक्तः, **वक्तुः** शुकस्य, तात्पर्यस्यैवाभावात् तज्ज्ञान न सम्भवतीत्यत**स्तात्पर्यमज्ञात्वा** तात्पर्यमगृहीत्वा, **अपि, वास्तवं** पारमार्थिकम्। **एतत्** तात्पर्यम्, यत्र वक्तुस्तात्पर्यं नास्ति शुकादेस्तत्र तदध्यापयितुस्तात्पर्यमन्ततः सर्वज्ञस्यैव शुकाद्युच्चरितं वाक्यमेतदर्थं बोधयत्वित्याकारकं समस्त्येव पारमार्थिकम्। **तदुन्नीय** यथार्थश्रुतस्यैकान्तायात्मकस्याघटमानत्वादेतत्तदपेक्षयैवमेतदित्यत्रैवोक्तवाक्यतात्पर्यमित्येवं ज्ञात्वा। **अप्रमाणेऽपि** वाक्ये अप्रमाणभूतेऽपि तीर्थान्तरीयागमवाक्ये। प्रामाण्यं **सम्यग्दृशां** सम्यग्दृष्टीनाम्। **मतं** सम्मतमित्यर्थः. ॥ ११ ॥

तात्पर्यग्रहस्य सम्यगर्थविषयकस्य मिथ्यार्थविषयकस्य च वैचित्र्यात् तत्तात्पर्यविषयीभूतार्थप्रतिपादकत्वेन सम्यक्श्रुतस्यापि मिथ्यादृष्ट्युन्नीतातथाभूतार्थविषयकत्वेन मिथ्यात्वम्, मिथ्याश्रुतस्यापि सम्यग्दृष्ट्युन्नीतसम्भवदर्थप्रतिपादकत्वेन सम्यक्त्व-मित्युपदर्शयति- **सम्यक्श्रुतस्येति**। **अतः** तात्पर्यग्रहवैचित्र्यात्। अन्यत् स्पष्टम् ॥ १२ ॥

श्रुतार्थानुसार्यर्थप्रतिपादकानि लौकिकान्यपि प्रमाणानि तात्पर्यविषयीभूतसम्यगर्थप्रतिपादकत्वात्, सप्तभङ्ग्यात्मकं वाक्यं पुन प्रमाणमेवेत्याह- **लौकिकान्यपीति**- अपिना अलौकिकवाक्यस्य प्रामाण्यं समुच्चितम्। **श्रुतार्थतः** श्रुतार्थानुसारेण। **तात्पर्यार्थे** इति च देहलीदीपन्यायेन पूर्वत्रोत्तरत्र चान्वेति, अन्यत् स्पष्टम् ॥ १३ ॥

प्रामाण्या-ऽप्रामाण्ययोः सम्यक्तात्पर्या-ऽसम्यक्तात्पर्यापेक्षत्वमित्यभिप्रायत एव कल्पभाष्योक्तिसङ्गतिरित्याह- **नाप्रमाणमिति**। **श्रुतम्** आगमः। **स्वतः** स्वरूपतः। **अप्रमाणं प्रमाणं वा न** भवति, **किन्त्वर्थतः** प्रमाणमप्रमाणं वा भवति, **इति** एवम्, यत् **कल्पभाष्योक्तं तत्** कल्पभाष्योक्तम्, अनन्तरोपदर्शितप्रकारेण, **उपपद्यते** घटते, अन्यथा यस्मिन्नर्थे प्रमाणं तस्मिन्नर्थेऽप्रमाणमिति न सङ्गतं स्यादिति ॥ १४ ॥

**तात्पर्यमिति**। **खलु** निश्चयेन। **सममिति**- एकमित्यर्थः। तात्पर्यमेवापेक्षा, सैव नय **इत्येवं** शास्त्रगर्भे सिद्धान्त-मध्ये। **स्थापितं** निर्णीतम्। **विचित्रैः** अनेकप्रकारैः। **तत्कल्लोलैः** नयविचारलक्षणतरङ्गैः। **समयजलधौ** जैनागम-समुद्रे। **चिद्विवर्तः** चितश्चैतन्यलक्षणज्ञानस्य विवर्तः परिणामः। **जायते** उत्पद्यते। एव सत्यपि **यत्तु** तत् पुन.। **निस्तरङ्गं** वस्तुगत्या निरुपाधिकत्वेन सोपाधिकधर्मरहितत्वात् तत्तदौपाधिकधर्मावलम्बनेन प्रवर्तमानानेकप्रकारकविशिष्ट-बुद्ध्यात्मकतरङ्गविकलम्। **परमसुखमयम्** ऐकान्तिकात्यन्तिकसुखैकस्वरूपम्। अत एव **सर्वातिशायि** सर्वापेक्षयो-त्कृष्टम्। **स्थायिज्ञानस्वभावं** स्थिरात्मक यज्ज्ञानं केवलं तत्स्वभावं तदात्मकम्। ब्रह्म परमात्मचैतन्यं समस्तीति शेषः। **तत्** निरुक्तस्वरूप ब्रह्म। **इह** अस्मिन् नयविचारे संसारे वा। **वः** युष्माकम्, एतद्ग्रन्थविचारपर्यालोचन-परिपक्वसूक्ष्ममतीना संसारासारताभावनापरिणतबुद्धीना वा। **अनल्पसंकल्पजालं** बहुप्रकारमानसिकविचारात्मकतन्तु-सङ्घटननिष्पन्नबन्धनकार्यकारिजालम्। **दहतु** विनाशयत्वित्यर्थः ॥ १५ ॥

**निक्षेपा वेति**। सार्ववाचः शृङ्गारा यस्याग्रे किञ्चिन्न भान्ति, स्वीयं तद्रूपं हे भगवन्! उच्चैः प्रकटय, हे आत्मन्! वाद प्रसीदेति सम्बन्धः। के सार्ववाचः शृङ्गारा इत्यपेक्षायामाह- **निक्षेपा वा नया वा तदुभयजनिताः सप्तभङ्गा**

यस्याग्रे भान्ति किञ्चिन्न निरुपधिचिदुद्वुद्धशुद्धस्वभावात्,
तद्रूपं स्वीयमुच्चैः प्रकटय भगवन् बाढमात्मन्! प्रसीद ॥ १६ ॥

गच्छे श्रीविजयादिदेवसुगुरोः स्वच्छे गुणानां गणैः, प्रौढिं प्रौढिमधाम्नि जीतविजयप्राज्ञाः परामैयरुः।
तत्सातीर्थ्यभृतां नयादिविजयप्राज्ञोत्तमानां शिशुस्तत्त्वं किञ्चिदिदं यशोविजय इत्याख्याभृदाख्यातवान्॥१॥
सूरिश्रीविजयादिदेवसुगुरोः पट्टाम्बराहर्मणौ, सूरिश्रीविजयादिसिंहसुगुरोः शक्रासनं भेजुषि।
सूरिश्रीविजयप्रभे श्रितवति प्राज्यं च राज्यं कृतौ, ग्रन्थोऽयं वितनोतु कोविदकुले मोदं विनोदं तथा ॥ २॥
प्रत्यक्षरं निरूप्यास्य ग्रन्थमानं विनिश्चितम्। अनुष्टुभां सहस्राणि त्रीणि षट् च शतानि वै ॥ ३ ॥
॥ ३६०० ॥ ॥ शुभं भूयात् ॥

इति महोपाध्यायश्रीकल्याणविजयगणिशिष्यमुख्यपण्डितलाभविजयगणिशिष्यावतंसपण्डितश्रीजीतविजयगणिसतीर्थ्यतिलकपण्डितश्रीनयविजयगणिचरणकमलसेविना पण्डितश्रीपद्मविजयगणिसहोदरेण उपाध्यायश्रीयशोविजयगणिना विरचिता नयामृततरङ्गिणीनाम्नी नयोपदेशटीका समाप्ता ॥ स्वस्ति श्रमणसंघाय ॥

## ॥ इति नयोपदेशः समाप्तः ॥

त्मका वेति। कथं ते शृङ्गारा इत्यपेक्षायामाह- **परगुणरचनाजातरोचिष्णुभावा** इति। "**स्वभावात्**" इत्यस्य स्थाने "स्वभावं" इति पाठो युक्तः। **सार्ववाचः** सर्वप्राणिहितकारिवचनस्य जैनसमयस्य। वेति त्रयं विकल्पार्थकम्। **निक्षेपाः** नाम-स्थापना-द्रव्य-भावनिक्षेपाश्चत्वारः। **नयाः** नैगम-सङ्ग्रह-व्यवहारर्जुसूत्र-शब्दसमभिरूढैवम्भूताः सप्त। **तदुभयजनिताः** नय-निक्षेपोभयसमुद्भवाः। **सप्तभङ्गात्मकाः** स्यादस्त्येव घट इत्यादिसप्तभङ्गसमाहारलक्षणसप्तभङ्गीस्वरूपाः। **शृङ्गारा** योग्यस्थानसन्निविष्टभूषणविन्यासात्मकाः। यतः परे-अन्ये विशिष्टा वा, परेषाम्-अन्येषां वा ये गुणास्तेषां रचनया- यथास्थानं संस्थापनया, जात उत्पन्नो रोचिष्णुभावो मनोरञ्जनस्वभावो येषां ते तथा। एवंभूता अपि **यस्य** भगवद्रूपस्यानन्तरमेव वक्ष्यमाणस्वरूपस्य। **अग्रे** सम्मुखे। **किञ्चित्** किञ्चिदपि। **न भान्ति** न प्रकाशन्ते। **हे भगवन्!** सर्वैश्वर्यशालिन्! **स्वीयं** स्वात्यन्तसंबद्धम् सम्बन्धश्चात्राविष्वग्भावः, तेन स्वापृथग्भूतमिति पर्यवसितम्। तद्रूपं यद्रूपस्याग्रे शृङ्गारा न भान्ति एवम्भूत रूपम्। किं स्वरूपं तदिति दर्शयति- **निरुपधीति**- उपाधिविनाकृतं परोपाधिकं यन्न भवति किन्तु-स्वाभाविक यच्चिता- चैतन्येनोद्बुद्धः- प्रकटीभूतः शुद्धस्वभावो यस्य तन्निरुपधिद्बुद्धशुद्धस्वभाव शुद्धकेवलचैतन्यस्वरूपमिति यावत्। **उच्चैर्यथा** स्यात् तथा **प्रकटय** प्रकाशय। **हे आत्मन्!** मदभिन्नस्वरूप!। **बाढम**त्यन्तम्। **प्रसीद** प्रसन्नो भव। स्वाभिन्नशुद्धचैतन्यात्मकभगवत्स्वरूपदर्शनतो मुक्तस्य मम न किञ्चिदभिलपणीयम्, एतावन्मात्रमेतद्ग्रन्थकरणप्रयोजनमिति गूढाभिसन्धिः ॥ १६ ॥

**गच्छ** इति- श्रीविजयादिदेवसुगुरोः प्रौढिमधाम्नि स्वच्छे गच्छे जीतविजयप्राज्ञाः गुणानां गणैः परां प्रौढिमैयरुः, तत्सातीर्थ्यभृतां नयादिविजयप्राज्ञोत्तमाना शिशुर्यशोविजय इत्याख्याभृत्, इद किञ्चित् तत्त्वमाख्यातवानित्यन्वयः, **अर्थस्तु** व्यक्त एव ॥ १ ॥

**सूरिश्रीविजयादिदेवसुगुरोरिति** पद्यमपि स्पष्टार्थकम्। "**कृतौ**" इत्यस्य स्थाने "कृतो" इति पाठो ज्ञेयः। प्रत्यक्षरमिति पद्यं ग्रन्थकर्तुरन्यस्य वा स्पष्टार्थकम् ॥

इति श्रीतपोगच्छाधिपति शासनसम्राट्-जगद्गुरुश्रीविजयनेमिसूरीश्वरपट्टालङ्कारेण व्याकरणवाचस्पति-शास्त्रविशारद-कविरत्नेति पदालङ्कृतेन **विजयलावण्यसूरिणा** विरचिता तरणिनाम्नी **नयामृततरङ्गिणी**टीका समाप्ता ॥

## अथ प्रशस्तिः ॥

येषां श्रीरमिता मिता कृतिरतीवार्थप्रदा भासुरा, भक्तिर्वीरविभौ नयामृतघटा व्याख्यानभूतिः परा ।
ये तीर्थोन्नतिकृत्यजातयशसः शिष्यप्रशिष्याश्रिता, सूरीणां प्रवरा जयन्ति कृतिनः श्रीनेमिसूरीश्वराः ॥ १ ॥

तेषां शिष्याणुकेनामलसुनयसुधास्वादलेशोत्सुकेन, सिद्धान्ताभ्यासमात्रव्यसननियतिना विज्ञवर्गानुगेन ।
श्रीमल्लावण्यसूरीत्यभिहितशमिना निर्मितैषा नयार्था, व्याख्या सन्दब्धभावा जनयतु प्रमुदं स्वानुभूत्या बुधानाम् ॥२॥

शब्दार्थाशुद्धिदोषानिह कृतिप्रवराः शोधयिष्यन्ति येषां, दृष्टिः सूक्ष्मार्थतत्त्वाप्रतिहतगमना दोषमोषप्रगल्भा ।
सत्यादानस्वभावा परगुणघटना चान्तदेहा विमुक्ता, रागद्वेषादिशत्त्या स्वपरविभजनादष्यसम्पीडितार्था ॥ ३ ॥

ये नान्येषां सहन्ते कृतिमतिविमला दोषपोषैकदक्षास्तेषां दृष्टिः पतन्ती कथमिह सफला नैव दुर्नीतिदृष्ट्या ।
सापेक्षे वस्तुतत्त्वे गुणगणकलिते दोषपोषोऽप्यपेक्षादृष्ट्या युक्तो न चास्मादपहतिरणुका स्यादनेकान्तवादे ॥ ४ ॥

किन्त्वेषाऽऽहार्यरूपा गुणगणघटनां बाधते नैव सत्यां, मिथ्याऽपेक्षाविमुक्ता स्वयमपि लभते नात्मरूपं कुदृष्टिः ।
इत्थं नैवापसार्या प्रमितिपरिगताद् वस्तुनो लालनीया, त्यक्त्वा मात्सर्यमेषाऽप्युपकृतिपदवीं याति सापेक्षतायाम् ॥ ५ ॥

नयामृततरङ्गिणी क्व च नयोपदेशाश्रिता, यशोविजयवाचकप्रवरगुम्फितार्थान्वया ।
क्व तत्र रचिता मया विवृतिरक्षरार्थप्रभा, तथाऽपि परिशीलनं नयतेरिह स्यान्मम ॥ ६ ॥

आदौ मङ्गलमत्र तस्य च फलं व्याख्याकृतेश्चापि तत्, नीतेर्लक्षणमत्र चर्चितमपेक्षारव नयैकाश्रितम् ।
साक्षी लाघवमत्र तर्कणविधौ श्रीहर्षसंवादिताऽर्थापत्तिर्व्यवहारसङ्गतिरितोऽवच्छेद्यबुद्धिप्रथा ॥ ७ ॥

अन्या चापि कथा विवेकचतुरापेक्षाश्रिता दर्शिता, प्रत्यक्षाकलितेऽपि वस्तुनि मतिः स्पष्टा त्वपेक्षाश्रिता ।
दीर्घाध्यक्षमुखो निदर्शनतया सन्दर्शितोऽपेक्षया चर्चा चावरकाश्रिताऽत्र बहुला संगुम्फिता युक्तितः ॥ ८ ॥

साऽपेक्षा मतभेदहेतुरुदिता वैज्ञानिकी वास्तवी, तात्पर्यं च प्रवर्तते स्वविषये सम्बन्धतोऽपेक्षया ।
यत्कोट्यन्तरबाधनं तदपि चेष्टार्थस्य सन्दीपनं, तद्युक्त्या च समर्थितं मतभिदैदम्पर्यमावेदितम् ॥ ९ ॥

सङ्ख्या द्वित्वमुखाऽप्यपेक्षमतितो व्यङ्ग्या तथा जायते, इत्येवं मतभेदसाधनघटा संदर्शिता विस्तृता ।
व्यङ्ग्या तत्र गुरोर्मताऽक्षिचरणैरुत्पत्तिरेवादृता, जैनानां मतमत्र दर्शितमपेक्षाक्रान्तमत्युज्ज्वलम् ॥ १० ॥

सापेक्षे विषये प्रतीत्यवचनं तन्नीतिगं लक्षणं, भावोऽभावनिषेधरूपविधया सापेक्षताभाग् मतः ।
नाभावोऽपि प्रमेयतादिप्रमितः सापेक्षताभाजनं, चात्राभावमतेर्विचारबहुलीभावो निसर्गोज्ज्वलः ॥ ११ ॥

अस्तित्वादिकसप्तधर्मभजनातः सप्तभङ्गी तु या, सा सम्पूर्णप्रमात्मधीजनकतायोगात् प्रमाणं भवेत् ।
स्याच्छब्दात् प्रतिभङ्गमन्यघटनायोगेऽपि चैकैकगं, वाक्यं तन्नयवाक्यमर्थगतितोऽभीष्टैकदेशाश्रितम् ॥ १२ ॥

भङ्गानामुपपत्तिरत्र नयतोऽवक्तव्यभङ्गोद्गमे, नान्यस्मादृजुसूत्रतस्तु घटते चर्चाऽत्र सम्यक्कृता ।
वाक्यं चान्यनिषेधकं न च नयो दुर्नीतिवाक्यं तु तत्, इत्येवं त्रिविधं निजेऽपि च मते नो दिग्पटस्यैव तत् ॥ १३ ॥

एका-ऽनेकप्रतीतिसङ्गतिरियं स्यान्माननीयाश्रिता, चित्रे गौतमशिष्यसम्मतिमिता चित्रं च सर्वं मतम् ।
नव्यैश्चित्रमनेकमेव गदितं प्राचां तदेकं मतं, युक्तिश्चोभयसम्मताऽत्र गदिता स्वीयं मतं चादृतम् ॥ १४ ॥

विस्तीर्णाऽत्र विशिष्टबुद्धिविषया चर्चा प्रमाणोद्धृता, चातुर्विध्यमुदाहृतं मतिधनैर्नैयायिकैस्तद्गतम् ।
अत्रान्ते तु प्रपञ्चितं निजमतं येनान्यदीयं मतं, युक्तिव्रातकदर्थितं विषयताऽऽनन्त्यादनन्तैव सा ॥ १५ ॥

नायं संशय एककोटिकतया नातः समूहात्मको, याथार्थ्याद् भ्रम एष नो न च प्रमाऽपूर्णत्वतः स्यान्नयः ।
किन्त्वंशः प्रमितेर्यथा जलनिधेर्भागस्तदंशो मतो, नाम्भोधिर्न च सोऽसमुद्र इति यल्लोके प्रसिद्धः स्फुटम् ॥ १६ ॥

स्वार्थे सत्यतया मिताः परहताः सर्वे त्वमल्या नया, नैकान्तो विदुषां मतोऽत्र विषये स्पष्टप्रथा सम्मतौ ।
वस्तुस्पर्शितयाऽप्रमा नहि मता बौद्धादिनीतिप्रहा, यद्वद्रत्नप्रभागताऽपि च मती रत्नस्य तत्स्पर्शिनी ॥ १७ ॥

द्वेधाऽयं प्रथितो नयो विषयतो द्रव्यार्थिकश्चादिमः, पर्यायार्थिकनामकोऽपर इतो नान्ये नयाः सम्मताः ।
द्रव्यं केवलमेव चादिमनयेऽन्यस्मिन् नये पर्यवास्ते तिर्यक्प्रचयास्तथोर्ध्वप्रचया द्रव्यार्थिके कल्पिताः ॥ १८ ॥
द्रव्यं तेष्वनुगामि सत्त्वमुदितं नादौ न चान्ते स्थिताः, पर्याया न च मध्यगा अपि तथा भ्रान्त्या तथा लक्षिताः ।
स्यादन्त्येऽपि चलो विकल्प इह तन्मध्ये द्वयग्राहको, द्रव्यार्थानुमतो नयो नयविदां द्रव्यैकमात्रार्थगः ॥ १९ ॥
पर्यायार्थिनये न पर्यवपृथग् द्रव्य समस्तीष्टकृत्, पर्यायेभ्य इहेहितार्थजननं दृष्ट न वै नित्यतः ।
नित्ये न क्रम-यौगपद्यनियता चार्थक्रिया युज्यते, इत्येवं ननु युक्तिजालरचना प्रश्नोत्तराभ्यां तता ॥ २० ॥
एकत्वावगतिर्नयेऽत्र गदिता सादृश्यदोषाद् यथा, केशादौ तत एव न क्षणिकता स्याद् बाधिताऽभिज्ञया ।
नाशो नैव सहेतुकोऽत्र हि मतस्तत्साधिका युक्तयः, पर्यायार्थनयानुसारिविदुषां सच्चर्चया भाविताः ॥ २१ ॥
शुद्धस्यैव तु पर्यवस्य मनना चेत्थं समुद्भाविता, तस्यावान्तरभेदगामिमनना द्रव्यार्थवत् कीर्तिता ।
शुद्धाशुद्धविवेकनिर्णयकथा सम्यक्त्वमिथ्यात्वगा, सिद्धान्तोक्तिविमिश्रिताऽपि प्रथिता प्रासङ्गिकी मोददा ॥ २२ ॥
भेदा द्रव्यनयस्य तार्किकमते स्युर्नैगमाद्यास्त्रयश्चत्वारस्त्वृजुसूत्रनीतिचरमाः सैद्धान्तिकानां मते ।
पर्यायार्थगताः परे निगदितास्तात्पर्यभेदोऽनयोः, सूत्रस्याप्यविरोधहेतुरुदितः श्रीमद्यशोवाचकैः ॥ २३ ॥
नामग्राहममी नयास्तु कथिताः सप्तत्वसङ्ख्याञ्चिता, नाम्नो निर्वचनेन नैगमनयः सल्लक्षणालङ्कृतः ।
स्यात् सामान्य-विशेषगोचरतया तत्त्वं तदेकाल्पये, युक्तो नो व्यवहार इष्टगतये लोकप्रथासाधकः ॥ २४ ॥
अन्वर्थानुगमेन सङ्ग्रहनयो नाम्नैव संलक्षितः, सामान्येन परेण सङ्ग्रहविधिस्त्वेनापरेणापि सः ।
सामान्यव्यतिरिक्तमेष मनुते नो वै विशेषं ततस्तस्यावान्तरभेदतो बहुविधो जीवस्य भेदो मतः ॥ २५ ॥
ये चेष्टा निगमे तथा व्यवहृतौ तत्त्वोपचारादिकास्ते नेष्टास्तत एव चास्य गदिता ताभ्यां परा शुद्धता ।
बाहुल्यादुपचारिणी व्यवहृतिर्धीर्विस्तृतार्था तु या, सा लोकव्यवहारसिद्धिनिपुणा तन्मानपक्षोद्धुरा ॥ २६ ॥
सामान्यं त्वनुगामिनाऽत्र मनने नार्थक्रियाऽतो यतः, स्याद् व्यावृत्तिविशेषतोऽनुगतधीः शब्दानुगत्याऽथवा ।
दृष्टान्तोऽप्युपचारतो व्यवहृतौ संदर्शितो लौकिको, यस्मादेष मतं द्विरेफप्रमुखे स्यात् पञ्चवर्णे शितम् ॥ २७ ॥
लक्ष्मैतत्त्वृजुसूत्रनीतिगमकं यद्वर्तमानैकगं, भावत्वं नियमादियं नियमधीः सा चाविशेषान्मता ॥
शब्दे सा तु विशेषिता न च ततोऽतिव्याप्तिरेतन्नये, स्वीयं केवलमिष्टमन्यसमयोऽतीतो न नानागतः ॥ २८ ॥
नावस्थान्तरसङ्गतिस्त्विह मता निष्ठाक्रियाकालगं, द्रव्यं नास्ति ततः पलालदहनं नाग्नेर्भिदा नो घटे ।
प्रव्रज्या न भवेदसंयतगता भव्यो न सिद्धो भवेत्, चर्चा चात्र तु विस्तृतैक्यविषया निष्ठा-क्रियाकालयोः ॥ २९ ॥
देशे स्कन्धपदोपचारबलतः शाटी प्रदग्धेति गीर्ज्ञैयैतन्नयतो विशेषिततरः शब्दः क्षणात्मार्थगः ।
भावैकोपगमाद् विशेषघटना स्यात् सप्तभङ्ग्यर्पणाल्लिङ्गादेरथवाऽत्र भेदवशतोऽप्यर्थस्य भेदाश्रयात् ॥ ३० ॥
भाष्योक्त्या प्रविभक्तभङ्गरचनातः सप्तभङ्गीगतिश्चर्चा चार्थनयाश्रितादिविषया पुष्टिं तथा प्रापिता ।
सामानाधिकरण्यमत्र हि मतं नो भिन्नलिङ्गादिग, यद्वत्तत्त्वृजुसूत्रनीतिविषयो नैवाविकारान्ययोः ॥ ३१ ॥
सत्त्वर्थेषु न सङ्क्रमं समभिरूढाख्यो नयो मन्यते, भेदैः स्याद्वचनस्य चैव नियमादर्थस्य भेदोऽमितः ।
संज्ञा नो परिभाषयाऽत्र तु मता स्वाभाविकोऽय यतः, शब्दार्थोऽनुभवे विभाति न भवेदिच्छाकृतार्थस्थितिः ॥ ३२ ॥
एवम्भूतनयो विशेषणतया शब्दार्थयोर्ग्राहकश्चान्योऽन्यं न च राजशब्दघटना लिङ्गाल्पये राजगा ।
व्युत्पन्नः सकलोऽपि शब्द उदितो व्युत्पत्तिहेतुक्रियाकाले शब्दप्रवृत्तिरत्र नियता शब्दे क्रियैकार्थता ॥ ३३ ॥
व्युत्पत्त्यर्थप्रसिद्धयेऽत्र विपुला चर्चा प्रसङ्गागता, तस्यां शब्दनयानुसान्मतभिदा ह्व्यर्थचिन्तादिका ।
अन्या चापि कथाऽत्र सङ्गतिमिता नैयायिकादेर्वरा, अन्ते स्वानुमतं नयानुगमनं स्याद्वादतो दर्शितम् ॥ ३४ ॥
नैवम्भूतनये तु जीवपदभाक् सिद्धो मतो जीवनाभावात् किन्तु तदर्थसङ्घटनतः संसारिजीवस्तथा ।
भेदादर्थमिहोपपत्तिकलितास्तत्त्वार्थभाष्योक्तयो, जीवाजीवमुखोक्तिभेदघटिता आविष्कृता भाविताः ॥ ३५ ॥
सिद्धो निश्चयतो दिगम्बरमते यज्जीववाच्यो न तद्, युक्तं निश्चयसंज्ञकोऽन्तिमनयस्तत्र प्रथा चान्यथा ।
आद्यं सङ्ग्रहनामको यदि तथा तत्रात्मता जीवता, सर्वत्रानुगता ततो नहि भवेत् सिद्धैकता जीवता ॥ ३६ ॥

अन्या दिक्पटशङ्कितोक्तिघटना दूरीकृता युक्तितो, देश-प्रस्थकयोस्तथा च वसतेः स्वीकारदृष्टान्ततः ।
नीतीनां सुगमेन शुद्धिघटनाऽशुद्धस्तथा योजना, ये चैतेषु भवन्ति सूक्ष्मविषयाः शुद्धास्तदन्येऽन्यथा ॥ ३७ ॥
शुद्धत्वं व्यवहार एव फलतो नो निश्चये देशना, यत्सम्यक्त्वनिमित्ततामुपगता चाद्यस्य लोकोन्मुखा ।
या लोकव्यवहारबाह्यमनना मिथ्यात्वहेतुस्तु सा, नादेया ननु निश्चयस्य प्रथमं लोकप्रवृत्त्यर्थिभिः ॥ ३८ ॥
नग्नानां प्रथमं तु निश्चयघटा युक्त्या समुत्सारिता, तत्प्रश्नोत्तरभावसङ्गमनतो निर्णीतिरेवं कृता ।
भावः शब्दनयैर्मतो न च परो निक्षेप इष्टस्तु तैश्चत्वारोऽर्थनयैर्मता इति पुनः सम्यक्कया चर्चितम् ॥ ३९ ॥
निक्षेपस्य विचारणाऽत्र विहिता प्रत्येकशो लक्षणं, नामादेरुपदर्शितं ननु भिदा तत्रापि सन्दर्शिता ।
चर्चा चागमवाक्प्रचाररचिता युक्त्या समुत्तेजिता, दृष्टान्तोक्त्यनुरञ्जिता बहुविधा निक्षेपबोधानुगा ॥ ४० ॥
भिन्नद्रव्यगता चतुष्टयभिदा यद्वत् तथैवैकगा, स्वाभिख्याकृतिहेतुकार्यघटनातो भावनीया बुधैः ।
तत्तद्भेदनिवेशतो नहि भवेदव्यापि तेषां ततो, वस्तुव्यापकता चतुष्टयगता सामान्यतः स्थापिता ॥ ४१ ॥
अन्येषां मतमत्र तस्य नियमे व्यावर्ण्य संदूषितं, निक्षेपोऽनुमतोऽथ सङ्ग्रहनये न स्थापनाख्यो यतः ।
नाम्ना सङ्ग्रहणं भविष्यति बुधैः कैश्चिन्मतं दूषितं, चर्चात्रास्खलिता सुयुक्तिकलिता नीतिज्ञमोदप्रदा ॥ ४२ ॥
इष्टं स्थापनया विभिन्नमुदितं नाम्नोऽपि भिन्नं फलं, सम्बन्धोऽपि विभिन्न एव च तयोर्भावेन निर्धारितः ।
स्वात्मन्येव परात्मनो ननु समापत्तिस्तथा स्थापना, नाम्नोऽन्या विधिनाऽथवेति बहुधा भेदोऽनयोः स्थापितः ॥ ४३ ॥
एतेन व्यवहारगोऽप्यगतः स्यात् स्थापनासंग्रहो, द्रव्यं नो ऋजुसूत्र इच्छति यदि स्यात् सूत्रबाधस्तदा ।
तस्माद् भाष्यमता विभागघटना निक्षेपगा युज्यते, निक्षेपे नययोजनागतिरियं त्वालोचनीया बुधैः ॥ ४४ ॥
द्रव्यार्थान्नयतोऽभवन्ननु मतं शुद्धा तु वेदान्तिनां, तत्रैके जगुरद्वितीयममलं चैतन्यमन्ये पुनः ।
सच्छब्दैकमयं द्वितीयविकलं ब्रह्मेति विस्तारतश्चर्चा तन्मतयोः सुयुक्तिकलिता संदर्शिता मोददा ॥ ४५ ॥
द्रव्यार्थाद् व्यवहारतः समभवत् साङ्ख्यस्य यद्दर्शनं, तद् द्रव्यप्रतिपादकं भवति तत्पर्यायसंदर्शकम् ।
एतत्सम्मतपञ्चविंशतिविधं तत्त्वं समुद्भावितं, यद्युक्त्या कवलीकृतं मतिधनैर्नैयायिकाद्यैः स्फुटम् ॥ ४६ ॥
साङ्ख्येऽद्वैतमते च शुद्धिसमता चैतन्यमात्राश्रिता, तद्भिन्ने व्यवहारदृष्टिरनयोस्तुल्यैव यद्यप्यसौ ।
दृष्ट्यैवार्थसमष्टिसृष्टिरिति यद् वेदान्तिनिष्टङ्कितं, नो तत्र व्यवहारलेशघटनाऽप्येतावता भिन्नता ॥ ४७ ॥
नो कस्यापि मतस्य नैगमनयो मूलं यतोऽत्र पृथग्, नैवेष्टः कणभुङ्मतं ननु भवेद् द्वाभ्यां नयाभ्यां परम् ।
मिथ्यात्वं स्वमताग्रहादिह मिथोऽपेक्षा यतो नानयोरेवं न्यायमतं विभाव्यममुना यत् साम्यमस्यापि च ॥ ४८ ॥
भिन्नो नैगम एष इष्ट इति चेत् तन्मूलिकैवास्तु वौलूक्यादेः समयप्रवृत्तिरिति समत्याऽपि सद्वादितम् ।
बौद्धानामृजुसूत्रनीतिप्रभृतैर्जातं चतुर्णां मतं, शब्दाद्या नयमिश्रजा ननु नया वाग्भिः समाः सङ्ख्यया ॥ ४९ ॥
स्याद्वादामिलितैर्नयैः सममिता अन्यागमाः सम्मतौ, नीतीनां वचसां समानगणना चान्यागमास्तादृशाः ।
इत्येवं नययोजना मतगता ज्ञेयोपयुज्यैव सा, दिग्वस्त्रैः परिभाविता तु वितथा वृद्धोक्त्यो भाविताः ॥ ५० ॥
मिथ्यात्वाकलितानि षट् षडथ तद्भिन्नानि वैधर्म्यतः, सम्यक्त्वाकलितानि तान्यपि पथत्याग-प्रवेशाश्रयात् ।
ज्ञेयान्यन्यप्रथानि तत्र वितता चर्चा मतानां कृता, सा विज्ञैर्मतभेदबोधरसिकैर्भूयो विलोक्याऽऽदरात् ॥ ५१ ॥
मिथ्यात्वं निजरूपतस्तु निखिला ज्ञेया नया यन्मिथोऽपेक्षातो विकलास्तथा नहि भवेद् भेदोऽस्तितासुस्थितः ।
स्यादेषां व्यवहारभेदजननादास्तिक्य नास्तिक्ययोर्भेदस्तत्र नियामकं पुनरिदं ज्ञेयं नयज्ञैर्यथा ॥ ५२ ॥
धर्म्यंशे खलु नास्तिकस्तु प्रथितश्चार्वाक आत्मादिके, धर्मांशे परतीर्थिकास्तु निखिला विज्ञैर्मता नास्तिकाः ।
इत्थं मार्गप्रवेश तत्परिहृतिभ्यां स्यात् क्रियावादिनः, सम्यक्त्वोक्तिरथान्यवादिनियता मिथ्यात्ववाचः प्रथा ॥ ५३ ॥
सम्यक्त्वं च दृढीकृतं पुनरिहान्येभ्यः क्रियावादिनो, मुख्यत्वाद् गणनाभिदाऽपि प्रथिता तेषां विविक्ता स्फुटम् ।
चर्चाऽत्रापि विशिष्टमोदजनिका द्वेधा नयानां पृथग्, वादाः श्लोकसमष्टितो निगदिता युक्त्या समुत्तेजिताः ॥ ५४ ॥

ज्ञानादेव तु मुक्तिरत्र तु मता ज्ञाने क्रियाद्वारता, ज्ञानं मुक्तिनिदानमित्युदयनाचार्यस्तु संमन्यते ।
ज्ञानं कर्म च मुक्तिकारणमुभे ज्ञाने क्रियाद्वारता, नेष्टेत्येवमुदीरयन्ति कृतिनः श्रीभास्करीयाः स्फुटम् ॥ ५५ ॥
वार्ता चात्र तु विस्तृतोभयमतप्रागल्भ्यसम्पादिनो, अन्ते स्वानुमतं समुच्चयमतं युक्त्या समुल्लासितम् ।
मिथ्यात्वापगमेन मोक्षकलिका टीका सुसेव्या बुधैः, श्रीवीरस्य नयोपदेशवचनं सम्यक् स्तुतं कामदम् ॥ ५६ ॥
अस्यां न स्मय-रोषरागप्रमुखो हेतुर्जिनोक्त्यादरः, किन्त्वेको ननु हेतुरभ्युपगतो नो पक्षपातः क्वचित् ।
नीत्युक्तिः सफले प्रमाणवचने यात्यङ्गभङ्गात्मतां, तस्मान्नो छलवत्त्विद नयवचो विज्ञस्य शङ्कास्पदम् ॥ ५७ ॥
बोधो लौकिक आदिमो नयमयः स्यान्मध्यमोऽथान्तिमो, भानात्माखिलभङ्गतो गुरुमते यद्वत्तथा स्यात् क्रमात् ।
तात्पर्यान्वियताद् भवेदिह भिदा वाक्यैकमात्रोद्भवे, तात्पर्यञ्च तदङ्गयोरनुमता बोधे ततो भिन्नता ॥ ५८ ॥
तात्पर्यं शुकशारिकादिवचने तच्छिक्षकाद्याश्रितं, ज्ञात्वा लौकिकबोधभिन्नविषये बोधस्ततोऽपेक्षया ।
वक्तुश्चान्यपरे तथैव वचने तात्पर्यमन्यत् स्वय, ज्ञात्वा वास्तवमप्रमाऽजननतः प्रामाण्यमिष्टैषिणाम् ॥ ५९ ॥
मिथ्यादृष्टिपरिग्रहादिह भवेत् सम्यक् श्रुते वस्तुतो, मिथ्यात्वं ननु तत्परत्वमतितो मिथ्याश्रुते तत्त्वतः ।
सम्यग्दृष्टिपरिग्रहादनुमतं सम्यक्त्वमिष्टप्रदं, तस्मात् तत्परतामतिस्तु वचने बोधोद्भवेऽपेक्षिता ॥ ६० ॥
स्यादेवं तु प्रमाणमर्थघटनातो लौकिक चामुखे, तात्पर्यार्थगतौ प्रमाणमुदिता गीः सप्तभङ्गात्मिका ।
इत्थ सत्युपपद्यते ननु वचो यत्कल्पभाष्ये स्थितं, नाप्रामाण्यप्रमाणते स्वत इह स्यादर्थतस्ते इति ॥ ६१ ॥
तात्पर्याभिधया य एव प्रथितोऽपेक्षेति सैवोच्यते, नीत्याख्यः स च शास्त्रगर्भप्रथितस्तेनोत्थिताः कल्पनाः ।
सिद्धान्ताम्बुधिगाः स्थिरं विरहितं ताभिः सुखैकात्मक, ब्रह्म ज्ञानमयं भवेदिह तु वोऽनल्पं विकल्पोच्चयम् ॥ ६२ ॥
निक्षेपादिविचारणा वचनगा शृङ्गारमात्रात्मिका, यस्याग्रे न विभाति तच्च भगवन् ! रूप निजं दर्शय ।
आत्मन् ! बाढमपि प्रसीद कुशलाशंसा पर-स्वात्मगा, टीकाकर्तुरियं निजान्यविधुरां स्वात्मस्थितिं गाहते ॥ ६३ ॥
संक्षेपाद् विषया इमे निगदिता टीकागताः सुन्दरा, अभ्यासाद्धृदयं गता नयविदामानन्ददाः स्युर्न वा ।
अस्माकं तु जिनागमाम्बुधिगतज्ञानादिरत्नस्पृहां, स्वज्ञानाभ्यसनादतीव सफलां काले करिष्यन्ति वै ॥ ६४ ॥
वर्षे विक्रमगेऽनलाम्बरनभोनेत्रप्रमाणं गते, वर्षावासगतेन भावनगरे सौराष्ट्रसद्भूषणे ।
लावण्याभिधसूरिणा गुरुकृपापात्रेण यत्नादियं, दक्षामोदकृते कृता स्फुटतरा टीका तरण्याख्यया ॥ ६५ ॥
नयामृततरङ्गिणीविषयबोधिनीयं कृतिर्मिताऽपि समुपासिता ध्रुवममन्दमोदप्रदा ।
गुरुप्रवरभक्तितो ननु मया मितप्रज्ञया, समुद्भवमुपागता स्थितिमुपैतु कल्पान्तगाम् ॥ ६६ ॥

## इतिश्रीविजयलावण्यसूरिप्रणीता टीकाप्रशस्तिः समाप्ता ।

छद्मस्थेषु सदा स्खलद्गतितया दोषप्रबन्धान्वये, नो हास्यास्पदमत्र दोषघटनायां स्यामहं धीमताम् ।
नो प्रार्थ्याः कृतिनो निसर्गगरिमावासा मया शोधने, येषा दोषगणप्रमार्जनविधिः स्वाभाविकोऽयं यतः ॥ १ ॥



शुभं भवतु